# ISANASIVAGURUDEVA PADDHATI
OF
# ISANASIVA GURUDEVA

## Vol.—IV

Ed. by

M. M. T. GAṆAPATI SĀSTRĪ

With An Elaborate Introduction
by
Dr. N. P. UNNI
Prof. and Head of the Deptt. of Sanskrit
University of Kerala
Trivandrum

If any defect is found in this book, please return the copy by V.P.P. to the Publisher for exchange free of cost of Postage.

BHARATIYA VIDYA PRAKASHAN
Delhi (India) Varanasi

**Publishers:**

**Bharatiya Vidya Prakashan**

**(1) 1. UB, Jawahar Nagar, Bungalow Road, DELHI-110007**
**(2) Post Box No. 1108, Kachauri Gali, Varanasi-221001.**

*Published* **With the Financial Assistance from Govt. of India Ministry of Human Resource Development, New Delhi.**

**First Printed 1920**

**Rs. 134-00 (Four Vols. Set)**

**Vol. II—ISBN : 81-217-0016-7**
**(Set) —ISBN : 81-217-0019-1**

*Printed at :*
**Jain Amar Printing Agency**
**Delhi**

श्रीमदीशानशिवगुरुदेव मिश्र प्रणीता

# ईशानशिवगुरुदेवपद्धतिः

चतुर्थः भाग

महामहोपाध्यायेन

त. गणपति शास्त्रिणा

भूमिका लेखक :

डा० एन० पी० उण्णी

अध्यक्ष, संस्कृत विभागः

केरल विश्वविद्यालयः



भारतीय विद्या प्रकाशन

दिल्ली (भारत) वाराणसी

# विषयानुक्रमणी।


| विषयाः. | पृष्ठम्. | विषयाः. | पृष्ठम्. |
|---|---|---|---|
| अधिष्ठानाधिकारः | ३०७ | शिलादोषास्तज्ज्ञानोपायश्च | ३६६ |
| स्तम्भालङ्कारः | ३०९ | लिङ्गविकल्पाधिकारः | ३६७ |
| उत्तरलक्षणम् | ३१३ | मानुषशिलालिङ्गलक्षणम् | ३७१ |
| प्रस्तराद्यधिकारः | ३१४ | आर्षादिलिङ्गभेदः | ३७३ |
| द्वारलक्षणम् | ३१६ | लक्षणोद्धाराधिकारः | ३७५ |
| तोरणादिलक्षणम् | ३२० | सामान्यपीठविधिः | ३७९ |
| शिखरलक्षणम् | ३२५ | नागरादित्रयपीठम् | ३८० |
| सोपानलक्षणम् | ३२६ | मेरुसुन्दरादिद्वादशपीठानि | ३८१ |
| माललक्षणम् | ३२७ | नालविधिः | ३८४ |
| मण्डपलक्षणम् | ,, | पादशिलालक्षणम् | ३८७ |
| प्रपालक्षणम् | ३२९ | मुखलिङ्गविधिः | ३८८ |
| दारुनियमः | ३३० | स्फाटिकलिङ्गविधिः | ३९० |
| दारुस्वीकरणम् | ३३१ | रत्नलिङ्गाधिकारः | ३९१ |
| इष्टकाः | ३३३ | लोहलिङ्गानि | ३९२ |
| इष्टकालोष्टकरणम् | ,, | दारुलिङ्गविधिः | ,, |
| सुधाधिकारः | ३३४ | उत्तमदशतालपुरुषमानविधिः | ,, |
| स्तम्भसन्धिः | ३३६ | मध्यमदशतालस्त्रीमानम् | ४०३ |
| सन्धिविशेषाः | ३३७ | मध्यमदशतालपुरुषमानम् | ४०४ |
| स्तूपीविन्यासः | ३३९ | कनिष्ठदशतालस्त्रीमानम् | ४०७ |
| कुम्भविन्यासः | ३४० | षोडशमूर्तिलक्षणम् | ४०९ |
| विमानप्रतिष्ठाधिकारः | ३४१ | तत्र | |
| हर्म्यप्रतिष्ठाधिकारः | ३४४ | सोमास्कन्दलक्षणम् | ४०९ |
| अनुकर्मविधानम् | ३४६ | भुजङ्गत्रासनृत्तलक्षणम् | ४१२ |
| अद्भुतशमनम् | ३४८ | गङ्गाधरलक्षणम् | ,, |
| प्राकारलक्षणम् | ३५० | त्रिपुरान्तकलक्षणम् | ४१३ |
| परिवारदेवतातत्स्थानानि | ३५१ | कल्याणसुन्दरलक्षणम् | ,, |
| गोपुरविधिः | ३५५ | अर्धनारीश्वरलक्षणम् | ,, |
| लिङ्गोपादानाधिकारः | ३०८ | पाशुपतलक्षणम् | ४१४ |
| क्षणिकलिङ्गविधिः | ३६० | कङ्काललक्षणम् | ,, |
| लिङ्गपीठोपादानाधिकारः | ,, | हरिहरलक्षणम् | ,, |
| शकुननिमित्तानि | ,, | भिक्षाटनलक्षणम् | ,, |
| शिलाग्रहणविधिः | ३६३ | चण्डेशानुग्रहलक्षणम् | ४१५ |

| विषयाः. | पृष्ठम्. |
|---|---|
| दक्षिणामूर्तिलक्षणम् | ४१५ |
| कालकाललक्षणम् | ,, |
| लिङ्गोद्भवलक्षणम् | ४१६ |
| वृषलक्षणाधिकारः | ,, |
| वृत्तत्रिशूललक्षणम् | ४१७ |
| त्रिभङ्गशूलम् | ४१८ |
| वेतालशूललक्षणम् | ,, |
| खट्वाङ्गाधिकारः | ,, |
| गणेशलक्षणम् | ,, |
| रक्षोघ्नवास्तुहोमविधिः | ४१९ |
| प्रतिष्ठाविधिः | ४२१ |
| स्नपनादिविधिः | ४३० |
| तत्त्वतत्त्वेश्वरमूर्तिमूर्तीश्वरन्यासः | ४३४ |
| होमजपादिविधिः | ४३६ |
| शिवमध्याधिकारः | ४३९ |
| शिवप्रतिष्ठाधिकारः | ४४० |
| नित्योत्सवाधिकारः | ४५० |
| शिबिकाधिकारः | ४५३ |
| रथादियानशयनाधिकारः | ४५५ |
| ध्वजोच्छ्रयाधिकारः | ४५८ |
| आलयालङ्कारपूजायात्रादिविधिः | ४६३ |
| स्वस्त्ययेस्तुतिः | ४६५ |
| बलिदानं तन्मन्त्राश्च | ४६६ |
| रात्रिभेदेन देवताबलिभेदाः | ४७५ |
| उत्सवावभृथाधिकारः | ४७७ |
| उत्सवान्ते कर्तव्यविधिः | ४८० |
| अल्पस्नपनपदाधिकारः | ४८१ |
| पञ्चविंशतिकलशाधिकारः | ४८३ |
| त्रिविधाष्टोत्तरकलशाधिकारः | ४८४ |
| द्विपञ्चाशदधिकशतद्वयकलशाधिकारः | ४८५ |
| त्रिशतकलशाधिकारः | ,, |
| चतुराधिकपञ्चशतकलशाधिकारः | ४८६ |
| त्रिंशत्याधिकसप्तशतकलशाधिकारः | ,, |
| पञ्चावरणे सहस्रकलशाधिकारः | ,, |
| अष्टोत्तरसहस्रकलशाधिकारः | ४८७ |
| चतुरावरणे सहस्रकलशाधिकारः | ४८८ |
| एकाविंशतिव्यूहसहस्रकलशाधिकारः | ४८९ |
| साधारणकर्माधिकारः | ४९० |
| कलशभेदेन द्रव्यादिभेदाः | ४९२ |
| पञ्चावरणसहस्रकलशाधिकारः | ५०० |
| सहस्रकलशेषु मन्त्रद्रव्यदेवताविधिः | ५०४ |
| स्नपनानन्तरकार्यविधिः | ५०८ |
| सूर्यप्रतिष्ठाधिकारः | ५१० |
| सूर्यनित्योत्सवविधिः | ५१४ |
| महोत्सवविधिः | ५१५ |
| गणेशप्रतिष्ठाधिकारः | ,, |
| गणेशोत्सवविधिः | ५१८ |
| स्कन्दप्रतिष्ठाधिकारः | ५१९ |
| स्कन्दोत्सवविधिः | ५२४ |
| शङ्करनारायणप्रतिष्ठाधिकारः | ५२६ |
| उत्सवबलिदेवताविधिः | ५३१ |
| दुर्गाप्रतिष्ठाधिकारः | ५३८ |
| दुर्गोत्सवविधिः | ५४३ |
| गौरीप्रतिष्ठाधिकारः | ५४५ |
| गौर्युत्सवविधिः | ५५० |
| सरस्वतीप्रतिष्ठाधिकारः | ५५३ |
| सरस्वत्युत्सवविधिः | ५५७ |
| भूतनाथमन्त्रोद्धाराधिकारः | ५६० |
| भूतनाथप्रतिष्ठाधिकारः | ५६१ |
| शास्तुरुत्सवविधिः | ५६५ |
| मातृमन्त्रोद्धाराधिकारः | ५६७ |
| मातृप्रतिष्ठाधिकारः | ५६८ |
| मातृनित्योत्सवाधिकारः | ५७६ |
| महाशान्तिविधिः | ५७७ |
| क्षेत्रपालप्रतिष्ठाधिकारः | ५८० |
| क्षेत्रपालोत्सवविधिः | ५८४ |
| नवनैवेद्याधिकारः | ५८६ |
| दीपोत्सवविधिः | ५८८ |
| अन्त्येष्ट्यधिकारः | ५९१ |
| एकोद्दिष्टविधिः | ५९५ |

| विषयाः. | पृष्ठम्. | विषयाः. | पृष्ठम्. |
|---|---|---|---|
| सपिण्डीकरणाधिकारः | ५९७ | अन्नयागाधिकारः | ६०९ |
| अष्टकाश्राद्धविधिः | ५९९ | बलिर्विकिरणविधिः | ६११ |
| अल्पप्रायश्चित्तम् | ६०३ | जीर्णोद्धारविधिः | ६१२ |
| महादोषप्रायश्चित्तम् | ६०८ | | |


## योगपादः ।


| | | | |
|---|---|---|---|
| योगलक्षणम् | ६१६ | धारणाधिकारः | ६३३ |
| यमनियमादिनिरूपणम् | ६२१ | ध्यानाधिकारः | ६३४ |
| प्राणायामाधिकारः | ६२८ | समाध्यधिकारः | ६३५ |
| प्रत्याहाराधिकारः | ६३३ | | |

# स्मृतग्रन्थकर्तारः ।


| कर्तृनाम. | पृष्ठम्. |
| --- | --- |
| पराशर: | ३१०, ३१३, ३१४, ३१७, ३२७, ३५३, ३५४, ३५६, ३८४, ३८९, ६१९. |
| पितामह: | ३३९. |
| मय: | ३०९, ३३८, ३५०, ३५१, ३५३, ३५४, ३५५, ३६८, ३७१, ३७२, ३७३, ३७४, ३७६, ३७७, ३८४, ३८६, ३९०. ४४०. |

# स्मृतग्रन्थाः ।

---

| ग्रन्थनाम. | पृष्ठम्. |
|---|---|
| कारणम् | ३४० |
| पिङ्गलामतम् | ३६९ |
| पुराणम् | ६०० |
| पौष्करम् | ३७० |
| बृहत्तन्त्रम् | २६९ |
| भगवद्गीता | ६२३ |
| मञ्जरी | ३६६, ३७३, ४३३, ४३८, ४५०, ४६३, ४६५, ४७५. |
| योगशिवपद्धतिः | ३९० |
| योगशिवीयम् | ३७४ |
| संहिताटीका | ४६५ |
| स्मृतिः | ६०१ |
| स्वायम्भुवम् | ४१८ |

---

॥ श्रीः ॥

# ईशानशिवगुरुदेवपद्धतिः

## श्रीमदीशानशिवगुरुदेवमिश्रविरचिता ।

### (क्रियापादः)

अथ एकत्रिंशः पटलः ।

अधिष्ठानं मयः प्राह चतुर्दशविधं पृथक् ।
पराशरोऽपि द्विविधं त्रिविधं च परे जगुः ॥ १ ॥

पराशरोक्तं द्विविधं पादबन्धं प्रतिक्रमम् ।
एकैकं तच्चतुर्भेदं यतोऽष्टविधमुच्यते ॥ २ ॥

तद्यथा —

अधिष्ठानोच्छ्रये त्रेधा भक्तेऽशो जगती भवेत् ।
अंशः कुमुदकं शेषमष्टधांशं विभज्य तु ॥ ३ ॥

पट्टिकांशेन कम्पोंऽशात् कण्ठोंऽशादूर्ध्वकम्पकम् ।
अंशेनाथ त्रिभिर्भागैर्वाजनं परिकल्पयेत् ॥ ४ ॥

पादबन्धमिदं ज्ञेयं मुख्यजात्यादिषूदितम् ।

पादबन्धम् ।

---

आद्याधिष्ठानतुङ्गे तु चतुर्विंशतिभागिके ॥ ५ ॥
स्यादष्टभागैर्जगती सप्तांशैः कुमुदं भवेत् ।
पद्मं च पट्टिका कम्पश्चैकैकांशाद् गलं द्वयात् ॥ ६
भागेनैवोर्ध्वकम्पः स्यात् त्रिभिर्भागैश्च वाजनम् ।
विप्रबन्धमिदं प्रोक्तं चारुबन्धं तथोच्यते ॥ ७ ॥

सप्तांशैर्जगती षड्भिः कुमुदं चैकमम्बुजम् ।
पट्टं च कम्पश्चैकैकं कण्ठोंऽशावब्जमंशतः ॥ ८ ॥

द्वौ वाजनं चाब्जमेकमंशाभ्यामूर्ध्वपट्टिकम् ।
चारुबन्धमधिष्ठानमिदं सङ्कृतिभेदितम् ॥ ९ ॥

चारुबन्धम् ।

---

प्राग्वच्छरांशैर्जगती त्वेकेनाब्जं धृगेकतः ।
ऊर्ध्वपद्मं च वेदांशैः शेषं प्रागिव पुष्कलम् ॥ १० ॥

पुष्कलम् ।

---

अत्र 'जगतीकुमुदं समानं, सार्धेनालिङ्गं समानमन्तरितं त्र्यंशं प्रत्युत्तमांशं पद्मं वाजनमेतत् प्रतिक्रमाख्यं देवद्विजनरेन्द्राणां प्रशस्तम् । अन्येषामप्रशस्तम् । अथ मुखं ककरीभूतमकरास्यं व्यालमृगेभालिमण्डितं सर्वेषामप्रशस्तमेवे'ति पराशरः ।

ककरीभूतमकरं मृगव्यालगजाननम् ।
कुर्यात् समतलं व्यापिक्रियं[2] तत् प्रतिबन्धकम् ॥ ११ ॥

प्रतिबन्धम् ।

---

तदेव नागबन्धं स्यान्नागवक्त्रनिबन्धनम् ।
तदेव जगती स्थाने वस्वंशे बृहदम्बुजम् ॥ १२ ॥
कण्ठोंऽशेनाम्बुजं चांशाच्छरांशैः कुमुदं भवेत् ।
ऊर्ध्वपद्ममथैकांशादालिङ्गान्तरितं त्रिभिः ॥ १३ ॥
प्रत्युन्नतं समानं स्याच्छेषं वाजनमेव हि ।
श्रीबन्धाख्यमिदं प्रोक्तं देवद्विजनृपोचितम् ॥ १४ ॥

श्रीबन्धम् ।

---

एकोनत्रिंशदंशेऽस्मिन्नधिष्ठानोदये भवेत् ।
तदेव पद्मं कुमुदं प्राग्वत् कम्पं च वाजनम् ॥ १५ ॥
ऊर्ध्वाब्जमंशादध्यर्धात् कपोतं चांशतोऽशतः ।
आलिङ्गान्तरितं त्र्यंशं प्रत्युन्नतमथांशतः ॥ १६ ॥
सार्धेन वाजनं चेति प्रोक्तं कापोतबन्धनम् ।
द्विचतुर्यवपादार्धत्रिपादांशविवर्धनात् ॥ १७ ॥

---

१. 'कम्', २. 'यं न प्र' ग० पाठः.

ह्यन्या प्रत्यङ्गमङ्गं तु शोभां कुर्याद् यथारुचि ।
उपानोपर्युपोपानं सपद्मं कम्पकं तथा ॥ १८ ॥
चतुरश्रं यथाशोभमधिष्ठानेषु योजयेत् ।

अत्र मयः—

"तैतिलानां चतुर्हस्तं त्रिहस्तार्धं द्विजन्मनाम् ।
राज्ञां त्रिहस्तं साध्यर्धं द्विहस्तं यौवराजकम् ॥
द्विहस्तमेव वणिजां शूद्रस्यैककरं स्मृतम् ॥"

इति ।

## अधिष्ठानाधिकारः ।

स्तम्भाः स्थूणास्तथा पादाः कुम्भाः कम्पाङ्घ्रयोऽपि च ॥ १९ ॥
स्तम्भपर्यायशब्दाः स्युरथ तल्लक्ष्म कथ्यते ।
आमूलाग्रं तु वेदाश्रः कुम्भमण्डिसमन्वितः ॥ २० ॥
ब्रह्मकान्ताभिधानः स्यात् स्तम्भः शैलोऽपि दारुजः ।
अष्टाश्रो विष्णुकान्ताख्यः स्कन्दकान्तः षडश्रकः ॥ २१ ॥
स एवेन्द्राह्वयो भानुकान्तः स्याद् द्वादशाश्रकैः ।
षोडशाश्रश्चन्द्रकान्तो वृत्तश्चेदीशकान्तकः ॥ २२ ॥
स्वतुङ्गरामभागेषु वेदवस्वश्रवर्तुलम् ।
कुम्भमण्ड्यादिसंयुक्तं रुद्रकान्तं प्रचक्षते ॥ २३ ॥
मूले पद्मासनश्चाथ चक्रवाकैरलङ्कृतः ।
सभद्रमध्यभागश्च भद्रकान्तो द्विमण्डिकः ॥ २४ ॥
व्यालेभसिंहभूतैस्तु मूले यः परिमाण्डितः ।
इष्टाकारस्तथैवोर्ध्वे तत्तत्कान्ताह्वयो भवेत् ॥ २५ ॥
वृत्त एव स्वदीर्घेण शुण्डुभेदेन संयुतः ।
शुण्डुपादो[३] भिण्डिपादः स चेन्मुक्ताविचित्रितः ॥ २६ ॥
मूले वेदाश्रकश्चोर्ध्वे षोडशाश्रावलङ्कृतः ।
स्यान्मूलचतुरश्राख्यः पद्मापद्मासनः स्मृतः ॥ २७ ॥

---

१. २. 'मृ' ख. पाठः. ३. 'ण्डः पि' ग. पाठः.

मूलान्त्ययोस्तु वेदाश्रो मध्ये अष्टाश्रचलङ्कृतः ।
वज्रकान्तः स विज्ञेयो मुक्तास्तम्भः समौक्तिकः ॥ २८ ॥
यद्रत्नचित्रितस्तम्भस्तत्तद्रत्नाह्वयो भवेत् ।
मूले पद्मासनो मध्ये षोडशाश्रैरलङ्कृतः ॥ २९ ॥
ऊर्ध्वांशे चतुरश्रोऽङ्घ्रिश्चित्रखण्डाह्वयः स्मृतः ।
स एवाष्टाश्रको मध्ये श्रीखण्डः पट्टबन्धवान् ॥ ३० ॥
मध्ये कलाश्रः पट्टेन नद्धः श्रीवज्रसंज्ञितः ।
पट्टक्षेपणसंज्ञः स्याच्चतुरश्रस्त्रिपट्टधृक् ॥ ३१ ॥
मूलाग्रयोस्तु विपुलो मध्ये रामांशतः कृशः ।
वृत्तश्चेद् दण्डपादाख्यो वज्रपादः कलाश्रकः ॥ ३२ ॥
स्यादुलूखलपादाख्यो मूलस्थोलूखलासनः ।
पादमर्धं त्रिभागं च भित्तिस्तम्भविनिर्गमः ॥ ३३ ॥
चतुरश्राष्टवृत्तानां विज्ञेयस्तु क्रमाद् भवेत् ।
मूलभूस्तम्भविस्तारो ह्यष्टाविंशतिकाङ्गुलः ॥ ३४ ॥
द्व्यङ्गुलद्व्यङ्गुलं हाप्यो व्यासः प्रतितलं क्रमात् ।
आद्याधिष्ठानतुङ्गात् तु स्तम्भोत्सेधो द्विधा मतः ॥ ३५ ॥
रुद्रदिङ्नन्दवस्वंशादंशोनोऽङ्घ्रिस्तले तले ।
एवं मूलाग्रयोर्व्यासतुङ्गता स्तम्भकुड्ययोः ॥ ३६ ॥

अत्र —

"कुड्यस्तम्भाग्रविपुलं यत्तद्दण्ड इत्युच्यते ।
तन्मानेन विमानानां सर्वाण्यङ्गानि मेयानि॥"

इति पराशरः ।

मूले चाग्रे च पादानां त्रिचतुष्पञ्चभागतः ।
शिखा मानेन कर्तव्या स्थाप्याः सर्वे तथाऽऽलयेषु ॥ ३७ ॥
स्वद्व्येणैव पादानां मूले वेदिं प्रकल्पयेत् ।
पादोच्चनन्दभागाद् वा वस्वंशाद् वेदिकोच्छ्रयः ॥ ३८ ॥
विस्तारश्च भवेत् तावान् सा वेदी स्याच्चतुर्विधा ।
पुष्पखण्डा चित्रखण्डा शैवला चित्रशैवला ॥ ३९ ॥

१. 'लाह्वयो' ख. ग. पाठः. २. 'पाः' ग. पाठः. ३. 'स्व' ख. पाठः.

कम्पनिद्रा कम्पयुता पुष्पवत् समखण्डिता ।
मूलपादार्चना वेदिः पुष्पखण्डेति कथ्यते ॥ ४० ॥
सैव निद्राकम्पपट्टपद्मपत्रविचित्रिता ।
पादे पादान्तरे चित्रा चित्रखण्डाभिधीयते ॥ ४१ ॥
स्तम्भकम्पाब्जपट्टाढ्या पट्टे शैवलचित्रिता ।
ऊर्ध्वाधःपद्मपत्राढ्या पादे पादान्तरेऽपिच ॥ ४२ ॥
नरनारीपत्रचित्रा शैवलाख्या हि वेदिका ।
सैवाधरोर्ध्वाम्बुजयोर्वेत्रयुग्ममनोरमा ॥ ४३ ॥
प्राग्वद् विचित्रवेषा स्यात् सा वेदी चित्रशैवला ।
जालार्थे[1] वेदिकां नैवच्छिन्द्यादन्यत्र तोरणात् ॥ ४४ ॥
द्वारं वात्र यथोद्देशं वेद्याश्छेदो न दुष्यति ।
पुष्पखण्डा चित्रखण्डा नृणां द्वे वेदिके स्मृते ॥ ४५ ॥
वेदीचतुष्कं स्तम्भादौ देवागारेषु सम्मतम् ।
स्तम्भायामे त्रिभागे स्याद् वेदाश्रोंऽशस्तु मूलतः ॥ ४६ ॥
अष्टाश्रः षोडशाश्रो वा मध्यांशो वृत्त एव वा ।
अग्रभागोऽपि वेदाश्रो भवेत् स्तम्भेषु केषुचित् ॥ ४७ ॥
मूलव्यासे तु पञ्चांशे द्व्यंशोनः स्तम्भमध्यतः ।
अन्त्योंऽशः सप्तमांशोनो मूलविस्तारितो भवेत् ॥ ४८ ॥
कुम्भाः स्युः पादविष्कम्भाश्चतुर्थांशाधिकास्तु वा ।
साध्यर्धाः पादहीना वा द्विगुणा वा भवन्ति हि ॥ ४९ ॥
श्रीकरश्चन्द्रकान्तश्च सौमुख्यः प्रियदर्शनः ।
इति कुम्भाश्चतुर्धा स्युर्वृत्तानां[2] श्रीकरो भवेत् ॥ ५० ॥
अष्टाश्राणां चन्द्रकान्तः श्रीकरः स्यात् कलाश्रके ।
स्तम्भानां चतुरश्राणां सौमुख्यः कुम्भ इष्यते ॥ ५१ ॥
शेषाणां चातिभाराणां कुम्भः स्यात् प्रियदर्शनः ।
कुम्भभागे नवांशे तु धृगेकेन विधीयते ॥ ५२ ॥

१. 'र्थे', २. 'त्ता' ग. पाठः.

चतुर्भिः कुम्भ एव स्यात् कण्ठोऽशेनांशतो मुखम् ।
शिष्टभागद्वयं त्र्यंशं कृत्वैकेनाम्बुजं भवेत् ॥ ५३ ॥
भागेन वृत्तं शिष्टांशावूर्ध्वे कण्ठे तु भिन्नकौ ।
स्तम्भाग्रकर्णमार्गेण स्कन्धः स्यात् समविस्तृतः ॥ ५४ ॥
ऊर्ध्वे तद्वीरकाण्डस्य पोतिकां तु निवेशयेत् ।
स्तम्भव्यासात् त्रिगुणितं चतुर्गुणमथापि वा ॥ ५५ ॥
मण्ड्यायामः स्मृतोऽङ्घ्रयग्रसमो वेष्वङ्घ्रिभागतः ।
मण्ड्युत्सेधो भवेत् तावान् वीरकाण्डस्य चोच्छ्रयः ॥ ५६ ॥
विस्तारो दण्डमात्रः स्यादथ मण्ड्याः शरांशतः ।
सार्धेन फलकास्थौल्यं तत्समो वेत्रनिर्गमः ॥ ५७ ॥
मण्ड्युत्पलदलाकारा पाल्याकाराब्जपत्रवत् ।
ताम्बूलसमसौन्दर्यं यजमानसुखावहम् ॥ ५८ ॥
विपरीतं विरूपं च वर्ज्यं तदशुभं यतः ।
अथवा स्यात् प्रकारोऽन्यो घृक्कण्ठापादविस्तृतिः ॥ ५९ ॥
पोतिकाखण्डमण्डीनि कुम्भं लशुनमूलकम् ।
अम्भोजमालास्थानानि स्तम्भाग्रे योजयेत् क्रमात् ॥ ६० ॥
अग्रहीनं तु लशुनं मूलोच्चं विपुलं भवेत् ।
साष्टांशाधिकमर्धं वा त्रिपादोदयमम्बुजम् ॥ ६१ ॥
मालास्थानविशालोच्चं दण्डमात्रं नियोजयेत् ।
मण्ड्यायामो भवेत् पादात् त्रिगुणो वा चतुर्गुणः ॥ ६२ ॥
स्तम्भाग्रतुल्यं मण्ड्युच्चं पञ्चभागोनमेव वा ।
त्रिभिरंशैस्त्रिपादैर्वा वीरकाण्डश्च तत्समः ॥ ६३ ॥
मण्ड्युत्सेधशरांशेन सार्धांशः फलकोच्छ्रयः ।
वेत्रं च तत्समं ज्ञेयं मण्ड्युत्सेधोपपादकम् ॥ ६४ ॥
पाल्याकारं तु पद्माभं त्रिधा नागदलोपमम् ।
तदूर्ध्वे पोतिका स्थाप्या तस्या लक्षणमुच्यते ॥ ६५ ॥

१. 'ण्ड्युच्चोत्पादनाका' ग. पाठः. २. 'लतकसौ' क. पाठः. ३. 'ण्ठः' ख. पाठः. ४. 'काः' ख. पाठः.

सा च स्यात् स्तम्भविस्तारात् त्रिगुणं वा चतुर्गुणम् ।
दीर्घा पञ्चगुणं वापि नीचमध्योत्तमा स्मृता ॥ ६६ ॥

नागवृत्ता पत्रचित्रा समुद्रोर्मिश्च पोतिका[1] ।
त्रिविधा नामभिर्ज्ञेयास्तासां लक्षणमुच्यते ॥ ६७ ॥

स्तम्भव्याससमोत्सेधविस्तारा श्रेष्ठपोतिका ।
शरांशोना मध्यमा स्यादूनत्र्यंशा कनिष्ठिका ॥ ६८ ॥

भूतेभमकरव्यालरत्नबन्धविचित्रिता ।
वल्लीचित्राग्रपट्टा च सा स्यात्[2] चित्रपोतिका ॥ ६९ ॥

केवलं पत्रवल्लीभिर्विचित्रा पत्रपोतिका ।
तरङ्गमात्रचित्रा या पोतिका स्यात् तरङ्गिणी ॥ ७० ॥

तरङ्गाश्चात्र वेदर्तुवस्वाशादित्यसंख्यया ।
कार्यास्तूभयतस्तुल्याः पट्टिकाच्छन्नमध्यगाः ॥ ७१ ॥

त्रिभागे पोतिकोत्सेधे सा(ध्यं ? र्धां)शेनाग्रपट्टकम् ।
तदर्धार्धेन तदधः क्षेमच्छायान्वितं भवेत् ॥ ७२ ॥

तदुच्चार्धात् त्रिभिर्वांशैरंशाभ्यां वात्र कल्पयेत् ।
स्वव्यासार्धात् त्रिपादाद् वा कुर्यात् ताम्रमण्डनम् ॥ ७३ ॥

अत्र पराशरः—

"नानाविधाकृतियुता अपि सर्वपादाः
प्रासादमण्डपविधौ मुनिभिः प्रशस्ताः ।
शालासभागृहविधौ चतुरश्रवृत्ताः
सम्पत्परास्तु विपरीतफलास्त्वथान्ये ॥"

इति ।

मिश्रामिश्रा अपि स्तम्भा देवागारेषु पूजिताः ।
अमिश्रा एव गेहेषु नराणां शुभदाः स्मृताः ॥ ७४ ॥

स्तम्भालङ्कारः ।

उत्तरं विन्यसेदूर्ध्वं तच्चापि त्रिविधं मतम् ।
खण्डोत्तरं पत्रबन्धं ततो रूपोत्तरं भवेत् ॥ ७५ ॥

---

१. 'काः', २. 'यो' ग. पाठः.

स्तम्भविस्तारविस्तीर्णमुन्नतं चाङ्घ्रिजातिकम् ।
खण्डोत्तरं स्यादेतस्मात् पादोनं पत्रबन्धकम् ॥ ७६ ॥
स्तम्भव्याससमोत्सेधमुत्सेधार्धेन विस्तृतम् ।
विपरीतं तु वा नीचं रूपोत्तरमिदं भवेत् ॥ ७७ ॥
उत्तरोत्सेधरामांशभागेनैकेन पट्टिका ।
तदूर्ध्वांशद्वयेनापि विधेया पद्मपट्टिका ॥ ७८ ॥

उत्तरलक्षणम् ।

अत ऊर्ध्वं प्रस्तरः स्यात् प्रस्तरे सप्तभागिके ।
भागाभ्यां तु कपोतं स्यादुपानसमनिर्गमम् ॥ ७९ ॥
पट्टिका चापि भागेन कर्णश्चैकांशतो भवेत् ।
द्वाभ्यां तु कम्पकं कुर्याच्छिष्टेनाप्यूर्ध्वपट्टिका ॥ ८० ॥
उत्तरोपरि कुर्यात् तु वाजनं तस्य कथ्यते ।
त्रिचतुष्पञ्चदण्डानामायामस्तस्य सम्मतः ॥ ८१ ॥
स्तम्भविस्तारपादं वा त्रिपादं वोच्छ्रितं भवेत् ।
वाजनस्योपरिष्टात् तु कुर्याद् भारतुलावलिम्[1] ॥ ८२ ॥
स्तम्भविस्ताररामांशमुच्छ्रितार्धेन विस्तृता ।
तुलावली स्यात् तासामप्यूर्ध्वे कुर्याज्जयन्तिकाः ॥ ८३ ॥
तुलाविस्तारमानोच्चा यथालाभं सुविस्तृताः ।
जयन्त्यश्चानुमार्गः स्याद् दण्डार्धबहलश्रितः ॥ ८४ ॥
अध्यर्धसममुच्चः स्यादथ पार्श्वानुगोत्तरम् ।
वाजनं च तुलाद्वारानुगताः स्युस्ततोऽपि च ॥ ८५ ॥
वंशानुगा जयन्त्यः स्युस्तुलावदनुमार्गकाः ।

अत्र पराशरः —

"प्रस्तरः पादविष्कम्भो द्विदण्डार्धे[2] द्वित्रिदण्डैर्वा धवलीकतुलान्तरं स्यात् । द्विदण्डान्तरं जयन्तीनां, दण्डान्तरमनुमार्गाणां, तदुपरि सारफलकाभिर्यथाबलविपुलघनाभिराच्छादयेत् । इष्टकादिभिर्वा फलकोर्ध्वे वाजनवद् वर्णपट्टिका निवेशयितव्या" इति ।

१. 'ली' ग. पाठः. २. 'र्धे' ख. ग. पाठः. ३. 'ण व' क. ख. पाठः

शिलामये[1] शिलाभिः स्यादाच्छाद्यं वाजनोपरि ॥ ८६ ॥
वसन्तकोपरिष्टाच्च सम्छाद्यैवं यथाबलम् ।
हंसभूतावली वापि निद्रा वा दण्डमुच्छ्रिता ॥ ८७ ॥
त्रिपादं वा वाजनोर्ध्वमुत्तरोपरि वाजनम् ।
निद्रा च वर्णपट्टी च तुलापादश्च तद्गतः ॥ ८८ ॥
वाजनोर्ध्वे कपोतालिं कुर्याद्ध्यर्धदण्डतः ।
द्वित्रैः कपोतनिर्यूहमुत्सेधं भिन्नवेणुवत् ॥ ८९ ॥
साग्रपट्टं तदुपरि कर्णमध्यमपालिके ।
अर्धत्रिपाददण्डेन कपोतालम्बनं पुनः ॥ ९० ॥
उत्तराद् वाजनस्योर्ध्वं नव चात्र भवन्ति हि ।
उत्तरात् पोतिकाधस्ताद् गोपानस्यास्तु लम्बनम् ॥ ९१ ॥
तदन्तरं तुलामानादुन्नता चार्धदण्डतः ।
त्रिभिर्वांशैस्तु बाहल्यां कम्पा योज्याः समन्तरा ॥ ९२ ॥
सौवर्णैं राजतैः शौल्वैर्लौष्टैर्वाच्छाद्य मार्त्तिकैः ।
अथ गोपाननीप्रार्धाद् दण्डिकानियमो भवेत् ॥ ९३ ॥
दण्डिकाव्यासबाहल्यां स्तम्भव्यासार्धतो भवेत् ।
चतुरायतसंस्थानमनुमार्गेण बन्धयेत् ॥ ९४ ॥
दण्डिकाद्वारबहलमधोमण्डिः सनालिकम् ।
दण्डसमं मुष्टिबन्धं तत्पृथग् वाजनोपरि ॥ ९५ ॥
अथ व्यालकसिंहेभभूतनाटकभूषितम् ।
कपोतोपरि भूतालिः पादात् पादविनिर्मिता ॥ ९६ ॥
पादव्याससमा वार्धत्रिपादसदृशोच्छ्रया ।
प्रतिर्निवेश्या तत्तुङ्गत्रिचतुर्भागनिर्गमात् ॥ ९७ ॥
वाजनं स्यात् समतलमुन्नतं तन्न शोभनम् ।
ऊर्ध्वाधस्तलयोर्भूमेरवधिः प्रतिरेव हि ॥ ९८ ॥
देवद्विजनरेन्द्राणां मकरास्यं प्रतेर्मुखम् ।
स्वस्तिकं चैव देवानामर्धेन्दुर्वैश्यशूद्रयोः ॥ ९९ ॥

---

१. 'मो' ग. पाठः. २. 'का' ग. पाठः. ग. ३. 'प' ख. पाठः.

नागवृत्तं तु शेषाणामेवमूह्यं पृथक् पृथक् ।
पार्श्वे प्रतिः सशिखरं मुखपृष्ठं प्रतिद्वयम् ॥ १०० ॥
समानं सार्धदण्डं स्यात् प्रत्यास्थे निर्गमोद्गमौ ।
सर्वत्र प्रत्युपर्थेव द्वारं कुर्याद् विचक्षणः ॥ १०१ ॥
प्रतिच्छेदेन तु द्वारं न कुर्वीत कदाचन ।

प्रस्तराद्यधिकारः ।

---

स्तम्भायामे तु दिङ्नन्दवसुसप्तांशके क्रमात् ॥ १०२ ॥
नन्दवस्वृषिषड्भागैर्द्वारोत्सेधं प्रकल्पयेत् ।
तदर्धविस्तृतं च स्याद् द्वारं देवालयेषु वै ॥ १०३ ॥
तद्वन्नालीगृहव्यासरामभा[1]कभागतः ।
अर्धे नवांशे पञ्चांशैः पञ्चांशे वांशकैस्त्रिभिः[2] ॥ १०४ ॥
द्वारोत्सेधो भवेत् तस्मादर्धं विस्तृतिरिष्यते ।

इति देवविमानद्वाराणि ।

---

लब्धोत्सेधे तु दिङ्नन्दवसुसप्तांशके भवेत् ॥ १०५ ॥
सप्तषट्पञ्चवेदांशो द्वारव्यासस्तु मानुषः ।

मानुषद्वारम् ।

---

अर्धमण्डनकस्तम्भौ द्वारस्योभयपार्श्वयोः ॥ १०६ ॥
भूषणार्थं स्वबाह्ये तु स्थापयेत् सुविचित्रितौ ।
द्वारव्यासोच्चमखिलमङ्गुलिच्छेदवर्जितम् ॥ १०७ ॥
अङ्गुलीकृत्य वसुभिर्वृद्धमर्कोपसंक्षेपितम् ।
आयः स्याद् रामवृद्धानि मन्वाप्तानि व्ययः स्मृतः ॥ १०८ ॥
त्रिवृद्धान्यष्टभिर्हृत्वा योनिर्भोप्तमुडुर्भवेत् ।
पर्यन्ते त्रिंशदाप्ते तु तिथिर्वारं च सप्तभिः ॥ १०९ ॥
आयाधिकानुकूलर्क्षं द्वारं श्रेष्ठं तथा गृहम् ।
मार्गरूपतरुस्तम्भकोणविद्धमशोभनम् ॥ ११० ॥

---

१. 'शे' क. पाठः २. 'पञ्चां' ग. पाठः

मुख्यद्वारं तु देवानां नराणां च विशेषतः।
द्वारोच्चशेषे पञ्चांशे भवेदंशद्वयं त्वधः॥ १११॥
ऊर्ध्वे त्रयोंऽशास्तत्र स्युः फलका चात्र चित्रिता।
मध्येऽष्टमङ्गलानि स्युः पार्श्वयोर्नैकवल्लयः॥ ११२॥
दण्डाच्चतुष्षडष्टांशं कवाटफलकाघनम्।
श्रेष्ठमध्याधमं ज्ञेयं क्रमात् सर्वेषु धामसु॥ ११३॥
फलकाबहलादर्धं चतुर्थांशोनमेव वा।
तल्पदण्डस्य विस्तारस्तदर्धं तद्घनं भवेत्॥ ११४॥
रामेषुमुनिनन्देशसंख्या दण्डा भवन्ति हि।
दण्डाग्रं बोधिपत्रं वाप्यश्वस्कन्धनवाकृतिः॥ ११५॥
स्वस्तिकाग्रं तु वा कुर्यादत्र प्राह पराशरः।

"श्रीमुखसन्धिपालपत्रह्रस्वदण्डकुण्डलैश्शृङ्गगुल्फान्तर्गलकविषार्णवलाहक-पिञ्जरीगुच्छकैर्वनकार्धचन्द्राद्यवयवानि मुख्यलोहैरयसा वा दृढतरं कुर्यात्" इति।

कवाटं चैव योगश्चाप्येकजातितरूद्भवौ॥ ११६॥
सम्पत्करौ तदन्यौ तु विपरीतफलप्रदौ।
स्त्रीणां दुःशीलता च स्यात् तस्मान्मिश्रं न कारयेत्॥ ११७॥
बहिर्भागस्तु बाह्ये स्यादन्तर्भागोऽन्तरेव हि।
कवाटानि चतुर्धा स्युर्युग्मं चायुग्ममेव च॥ ११८॥
संहारो धावनं चैषां पृथग् लक्षणमुच्यते।
कवाटयुगलाभ्यां तु स्थिताभ्यां वामदक्षिणम्॥ ११९॥
सस्कन्धपट्टिकाभ्यां स्याद् युग्मं यत्राभिधीयते।
वामभागे स्थितं त्वेकमयुग्माख्यं कपाटकम्॥ १२०॥
गूढप्रवेशनिर्यूहं स्तम्भे वाप्युत्तरेऽपि वा।
संहाराख्यं कपाटं तद् भित्तिगूढं च धावनम्॥ १२१॥
देवद्विजनृपाणां तु युग्मायुग्मे च पूजिते।
अयुग्मादीनि चान्येषां कवाटानि भवन्ति हि॥ १२२॥

---

१. 'भः', २. 'र्धो' ग. पाठः. ३. 'क्यु' ख. पाठः, ४. 'नकव',
५. 'कमवार्ध' ग. पाठः.

फलकाभिरयुग्माभिर्युग्माभिश्च सुरालये ।
कवाटं तु मनुष्याणां स्यादयुग्माभिरेव हि ॥ १२३ ॥
कवाटसन्धिर्दण्डान्तस्त्रिचतुर्भागवर्जितः ।
मध्यवर्जित एव स्यात् कथ्यते स्कन्धपट्टिका ॥ १२४ ॥
तल्पव्यासद्वयव्यासो त्रिपादसमनीव्रका ।
नानारूपलताचित्रा चतुरश्रा तु निर्व्रणा ॥ १२५ ॥
साष्टाश्रपट्टावयवा पार्श्वयोः पद्मभूषिता ।
स्यात् स्कन्धपट्टिका युग्मप्रवेशे दक्षिणाश्रिता ॥ १२६ ॥
योगोच्छ्रितत्रिभागं वा चतुर्थांशमथैस्त्यजेत् ।
शेषमूर्ध्वे कवाटादेर्मञ्जरीभिश्च पङ्कजैः ॥ १२७ ॥
वल्लीपत्रनरैर्नारीभूतहंसगजैरपि ।
तद्वत् सिंहादिभिर्व्यालैरलङ्कुर्याद् यथारुचि ॥ १२८ ॥
योगावगाढैयोज्यं स्यादूर्ध्वे चोपप्रतेः शिखा ।
भवेच्च तल्पविस्तारकर्णायामा त्वयुग्मके ॥ १२९ ॥
परिघा स्यात् तथा नाहात् पादः पादार्धतोऽपि वा ।
परिघापादयोस्तुङ्गं तद्दैर्घ्याद् द्विगुणं भवेत् ॥ १३० ॥
दण्डव्यासार्धतस्त्र्यंशाद् बहलौ चापि विस्तृतौ ।
वे(ध ? द्ध)व्यौ परिघापादौ घातोपेतौ यथाबलम् ॥ १३१ ॥
दण्डायामत्रिपादेन विस्तृता चतुरश्रका ।
त्रिचतुर्भागतः स्थूला त्वेकैतल्पस्य चार्गला ॥ १३२ ॥
अथोदण्डेन चायामौ योगमध्याद् विहाय तु ।
अर्धाङ्गुलं तु बाह्यमाद् यथैव सुदृढं भवेत् ॥ १३३ ॥
घटिकायामदण्डस्य व्यासो वेदांशवर्जितः ।
आयतश्चतुरश्रो वा वृत्तो वा स्याद् यथाबलम् ॥ १३४ ॥
त्रिचतुर्दण्डदीर्घे तदर्धार्धव्यासनाहकम् ।
बहिः पद्मासनोपेतं कण्ठयुग्मं यथार्हतः ॥ १३५ ॥

१. 'सन्नि' ग. पाठः. २. 'पलजे' ग. पाठः. ३. 'ढे' ख. पाठः

आयतं घटिकायुग्मयुक्तमायसकीलकम् ।
युग्मार्गलौ तु युग्माख्ये कवाटे योजयेत् समौ ॥ १३६ ॥
पादकर्णसमव्यासा विष्कम्भादर्धनीप्रका ।
युक्ता चोत्तरवासी स्याद् दण्डैर्दण्डोपधानकैः ॥ १३७ ॥
आयसैः पाशकीलाद्यैर्युक्तं कृत्वाङ्गुलत्रयम् ।
उत्थाप्य तल्पं संस्थाप्य भित्तेर्व्यासार्कभागतः ॥ १३८ ॥
बहिरन्तः शरांशान्तं रामांशान्तं क्रमेण तु ।
कवाटयोगमध्यं स्यात् तन्मध्यं भित्तिमध्यकम् ॥ १३९ ॥
सप्तांशे वाथ पञ्चांशे कुर्यात् श्रुत्यग्निभागतः ।
क्रमाच्छराग्निभागे वा स्थाप्यो योगोऽधिकोऽन्तरे ॥ १४० ॥
देवानां च नराणां च मध्ये द्वारो विधीयते ।
शेषाणामुपमध्ये स्याद् द्वारोपर्यष्टमङ्गलम् ॥ १४१ ॥
सनकशूलां फलकां द्वारोर्ध्वे साष्टमङ्गलाम् ।
देवेद्विजादिवर्णानां तोरणार्थं निधापयेत् ॥ १४२ ॥
वृत्तौ तोरणदण्डौ तु त्रिपादविसृतौ समौ ।
सपादं वापि सार्धं वा विस्तारोऽप्यनयोर्मतः ॥ १४३ ॥
दिङ्नन्दवसुभागोनमग्रं स्याच्च शिखा तयोः ।
तदूर्ध्वोत्तरदण्डार्धसत्रिपादसमोदयम् ॥ १४४ ॥
समनिर्गमपार्श्वाभ्यां स्थूलं त्रिचतुरंशतः ।
सार्धं[१] दण्डं सपादं वा स्यादूर्ध्वं फलकोदयः ॥ १४५ ॥
तस्यां स्युर्मङ्गलान्यष्टौ तदूर्ध्वं त्रिशिखान्यपि ।
पञ्चवक्त्राणि तानि स्युर्द्विदण्डोच्चानि मध्यतः ॥ १४६ ॥
समं त्रिपादविस्तारात् पार्श्वपत्रावधिर्भवेत् ।
द्वित्रिवेदाङ्गुलं युक्त्या पत्राणां विततिः स्मृता ॥ १४७ ॥
उत्सेधोऽष्टनवैकांश तु पत्राणां बहुलं स्मृतम्
शिखा इष्टमवेशा स्यात् पार्श्वपत्रविचित्रिता ॥ १४८ ॥

१. 'अर्केभ्यो' ग. पाठः. २. 'बलि... ' ...

गर्भन्यासोदितान्यष्टौ मङ्गलानि पृथक् पृथक् ।
कुर्यादत्रापि तान्येव देवानामपि वर्णिनाम् ॥ १४९ ॥

द्वारलक्षणम् ।

---

प्रासादानामित्यधिष्ठानभेदा नैके स्तम्भाश्चाथ कायानुकायौ ।
नानाभेदाः पोतिकाश्चोत्तराणि द्वारं द्वारालङ्कृतिश्चाभ्यधायि ॥ १५० ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे उपरिभागे क्रियापादे
अधिष्ठानादिद्वारान्तविधिपटलः
एकत्रिंशः ॥

---

अथ द्वात्रिंशः पटलः ।

तोरणं त्रिविधं ज्ञेयं मकरं चित्रपत्रके ।
देवद्विजनृपाणां तु शस्तं मकरतोरणम् ॥ १ ॥
विशां तु चित्रसंज्ञं स्याच्छूद्राणां पत्रतोरणम् ।
पार्श्वयोः पृष्ठतश्चापि प्रकुर्यात् कुड्यतोरणम् ॥ २ ॥
प्रतेरुत्तरसीमान्तं तोरणोदय ईरितः ।
तदर्धेनास्य विस्तारस्तद्व्यासेऽथ शरांशके ॥ ३ ॥
त्रिभिर्मकरयुग्मं स्यादंशाभ्यां पादयोः स्थितिः ।
यथा शोभान्तरं तत्र गुहावेशो भवेदपि ॥ ४ ॥
अर्धेन्दुसदृशैः पत्रैश्चित्रितं पत्रतोरणम् ।
नक्रयोर्वदनासक्तमध्यपूरिममण्डितम् ॥ ५ ॥
चित्रतोरणमुद्दिष्टं मध्यपूरिमपार्श्वयोः ।
विगृह्य मकरस्योत्थरत्नमालाधिरोपितैः ॥ ६ ॥
भूतविद्याधरव्यालसिंहैश्चारूढबालकैः ।
विलम्बितं तूभयतो भवेन्मकरतोरणम् ॥ ७ ॥
गुहासु तोरणानां तु यथार्हं प्रतिमास्तथा ।
मत्स्येनारीनरादींश्च यथाशोभं विचित्रितम् ॥ ८ ॥

द्वारासु वलभीमध्ये प्रमाणभवनेऽपि वा।
कुड्येषु तोरणानि स्युस्तत्कुड्यं पञ्चधा स्मृतम् ॥ ९ ॥

शिलामयं चैष्टकं च जालकामयमित्यपि।
फलकामयमप्यन्त्यं मृन्मयं चापरं क्रमात् ॥ १० ॥

यथार्हव्यासतुङ्गं तत् कुड्यं शैलं शिलामयम्।
नानाजालकनिष्पाद्यं कुड्यं यज्जालकामयम् ॥ ११ ॥

यथार्हस्तम्भविन्यासं शस्तदारुमयक्रियम्।
फलकाभिश्चितं मध्ये कुड्यं स्यात् फलकामयम् ॥ १२ ॥

मृत्तिकाभिः प्रशस्ताभिः कषायसलिलादिभिः।
मर्दिताभ्युषिताभिश्च चि(त्रं ? तं) कुड्यं तु मृन्मयम् ॥ १३ ॥

कुड्यव्यासत्रिदेवांशबहलां वाग्रपङ्कजाम्।
पाट्टिकां चतुरश्रां वा कुड्योपरि नियोजयेत् ॥ १४ ॥

स्तम्भान्तरं द्विहस्तादि भवेत् पञ्चकरान्तरम्।
वितस्तिवृद्ध्या तन्मध्ये कार्या कुड्यलता त्रिधा ॥ १५ ॥

कुड्यस्तम्भस्य विस्ताराद् द्विगुणं चार्धमुच्छ्रितम्।
अधः पद्मासनं कुर्यात् तदूर्ध्वे च यथारुचि ॥ १६ ॥

विनिर्गतोन्नतिं कुम्भं पार्श्वयोस्तस्य तन्मुखात्।
पत्रैर्विनिर्गतैश्चित्रं यथाशोभं नियोजयेत् ॥ १७ ॥

तदूर्ध्वे कुड्यकस्तम्भसमपादाम्बुजासनम्।
सखण्डकलशं कुर्यात् पद्मकुम्भलतायुतम् ॥ १८ ॥

सा तु कुम्भलतासंज्ञा सैव खण्डोपरि क्रमात्।
नक्रतोरणवन्न्यस्ता स्तम्भकुम्भलता मता ॥ १९ ॥

कुम्भपद्मासनयुता सैव सर्वलतान्विता।
पद्मकुम्भलता नाम विज्ञेया हि लता भवेत् ॥ २० ॥

तले तले विमानानां (नि ? दि)क्षु द्वाराणि विन्यसेत्।
नन्दीश्वरमहाकालौ पूर्वद्वाराधिपौ न्यसेत् ॥ २१ ॥

दक्षिणे दक्षिणामूर्तिं पश्चिमे लिङ्गसम्भवम् ।
विष्णुं वाप्यथ कौबेरे दुर्गां ब्रह्माणमेव वा ॥ २२ ॥

मण्डपे मध्यपत्रे तु दक्षिणे च विनायकम् ।
उत्तरे नृत्तरूपं तु क्षेत्रेशं चैशगोचरे ॥ २३ ॥

रुद्रावतारक्रीडादिकथारूपाणि चैव हि ।
मूलभित्तौ च परितो विन्यसेदुक्तलक्षणम् ॥ २४ ॥

अथोपरितलात् प्राच्यामिन्द्रं षण्मुखमेव वा ।
दक्षिणे दक्षिणामूर्तिं वीरभद्रमथापि वा ॥ २५ ॥

पश्चिमे नारसिंहं चाप्युत्तरे चार्थदं विधिम् ।
द्वितीये तु तले चैवं तृतीये तु मरुद्गणान् ॥ २६ ॥

तले तलेऽमरान् सिद्धान् यक्षविद्याधरानपि ।
गन्धर्वानप्यप्सरसः सिद्धान् नागांस्तथा मुनीन् ॥ २७ ॥

प्रमथांश्चैव दैत्यादीन् षोडशप्रतिमास्तथा ।
कण्ठादधः प्रतेरूर्ध्वे कोणे कोणे वृषान् न्यसेत् ॥ २८ ॥

सर्वेषामपि देवानां कोणे कोणे स्ववाहनम् ।
कण्ठादधश्चान्यतले प्राकारादौ च विन्यसेत् ॥ २९ ॥

इत्येवमादिभिर्युक्तं विमानं सम्पदां पदम् ।
गर्भार्द्धसमविस्तारा महानासाश्चतुर्दिशम् ॥ ३० ॥

तदर्धाद् वा त्रिपादाद् वा तासां निर्गम ईरितः ।
क्षुद्रनासास्तदर्धाद् वा रामांशाद् वापि कारयेत् ॥ ३१ ॥

नासिकानां तु करणमष्टधोक्तं पुरातनैः ।
सिंहपञ्जरमादौ स्यात् पञ्जरं चार्धपञ्जरम् ॥ ३२ ॥

निर्यूहपञ्जरं चैव कथितं लम्बनासिकम् ।
सिंहश्रोत्रं तथा खण्डनिर्यूहशषपञ्जरम् ॥ ३३ ॥

द्विदण्डादिचतुर्दण्डविस्तृतं शालयान्वितम् ।
सूचिपादद्वयोपेतं क्षिप्तमाकारनीप्रकम् ॥ ३४ ॥

षड्वर्गसहितं व्याससमनिर्गममेव वा ।
शक्तिध्वजयुतं चापि तथा सम्मुखपट्टिकम् ॥ ३५ ॥
वेदिकाजालकस्तम्भयुक्तं स्यात् सिंहपञ्जरम् ।
प्रासादनीप्रसंश्लिष्टखनीप्रादर्धनिर्गतम् ॥ ३६ ॥
अधिष्ठानाङ्घ्रियुक्तं च प्रस्तरग्रीवसंयुतम् ।
तद्वत् सशिखरं शक्तिध्वजसम्मुखपट्टिकम् ॥ ३७ ॥
वेदिकाजालकर्णाढ्यं सार्धपञ्जरसंज्ञितम् ।
प्राग्वच्छेषं च विस्तारपादसम्मितनिर्गमम् ॥ ३८ ॥
व्यासत्रिभागनिर्यूहं वृत्तस्फुटितकर्मवत् ।
पञ्जराख्यं स्मृतं चाथ स्वतुल्यशिखराग्रकम् ॥ ३९ ॥
श्लिष्टनीप्राग्रकर्णं च कपोताद्यग्रसंयुतम् ।
निर्यूहपञ्जरं त्वेतल्लम्बनासिकमुच्यते ॥ ४० ॥
संश्लिष्टनीप्रकर्णाङ्घ्रि कृतनागदलाद्यपि ।
निर्यूहसहितं युक्तसर्वाङ्गं लम्बनासिकम् ॥ ४१ ॥
सिंहश्रोत्रशिखायुक्तमेतदेव तु पादवत् ।
नीप्रसंश्रितकर्णांशं सिंहश्रोत्राभिधानकम् ॥ ४२ ॥
यत् स्वविस्तारपञ्चांशद्व्यंशनिर्गमसंयुतम् ।
नीडाधस्तात् कपोताद्यैः खण्डनिर्यूहकं युतम् ॥ ४३ ॥
दण्डदण्डार्धनिष्क्रान्तनीप्राधस्तात् तथोपरि ।
कण्ठोर्ध्वतोरणोपेतं कपोताद्यङ्गसंयुतम् ॥ ४४ ॥
क्षपपञ्जरसंज्ञं स्यादथ कूटादि कथ्यते ।
कूटं प्रासादषड्भागादंशः शाला द्वि-गतः ॥ ४५ ॥
प्रासादजयभूम्यादिकपोतोर्ध्वनिबन्धनात् ।
उन्नतः पञ्जरोत्सेधस्तद्विभागोऽत्र कथ्यते ॥ ४६ ॥
पञ्जरोच्चे शरांशे तु सपादांशोऽङ्घ्रितुङ्गता ।
तदर्धं प्रस्तरोत्सेधस्तत्समः कर्णकोच्छ्रयः ॥ ४७ ॥
शेषेणाप्यर्धकर्णः स्यादूर्ध्वं शीर्षोदयः स्मृतः ।
तत्स्तम्भार्धादधिष्ठानं शेषेणाप्युपपीठकम् ॥ ४८ ॥

एवमुक्ता हि सर्वेषां पञ्जराणामिहोन्नतिः ।
अथ तोरणशालाया मूलाधिष्ठानतोऽर्धतः ॥ ४९ ॥
उच्चं भवेदधिष्ठानं स्तम्भस्तद्विगुणः स्मृतः ।
अधिष्ठानाष्टभागोनः प्रस्तरः कन्धरा तथा ॥ ५० ॥
तोरणोच्चं तु शेषेण शालाभं वापि कारयेत् ।
शालाकूटान्तरे शालामध्ये वा पञ्जरं भवेत् ॥ ५१ ॥
ऊर्ध्वे कुर्यान्महानासिं पञ्जरं शुकनासिकाः ।
नासिकोपरि नासीं तु न कुर्वीत कदाचन ॥ ५२ ॥
सर्वाः स्तम्भाश्रया नास्यः स्यात् प्रत्यूर्ध्वे च वेदिका ।
सार्धं वा द्वित्रिदण्डं वा वेदिकोच्चं प्रकल्पयेत् ॥ ५३ ॥
पुष्पखण्डं चित्रखण्डं शैवलं चित्रशैवलम् ।
चतुर्धा प्राग्वदाभूष्य पादादौ कुड्यभूषणम् ॥ ५४ ॥
प्रत्यूर्ध्वे गलभूषा स्याद् वेदिकोपरि जालकम् ।
त्रिचतुष्पञ्चदण्डं वाप्युत्तरान्तोन्नतं भवेत् ॥ ५५ ॥
उच्चात् त्रिवेदभागोनं विपुलं जालकस्य तु ।
ऋजुसंज्ञं गवाक्षं च गजाक्षं गुलिका तथा ॥ ५६ ॥
गोमूत्रं पत्रकं चैव नन्द्यावर्तं च सप्तमम् ।
जालानां सप्तभेदानां पृथग् लक्षणमुच्यते ॥ ५७ ॥
ऋजुसूचिकपादं यदृजुजालकसंज्ञितम् ।
आयामचतुरश्रोर्ध्वकर्णकं स्याद् गवाक्षकम् ॥ ५८ ॥
चतुरश्रकर्णलब्धच्छिद्रमुक्तं गजाक्षकम् ।
मूलाग्रमध्यगुलिकमृजुभित्यन्तरार्पणात् ॥ ५९ ॥
नाटकान्तरितच्छिद्रं गुलिकाख्यं तु जालकम् ।
विदिग्वक्रगतच्छिद्रं गोमूत्राख्यं तदाकृति ॥ ६० ॥
पत्रैर्विचित्रान्तरितरन्ध्रं स्यात् पत्रजालकम् ।
पञ्चसूत्रान्तरा रन्ध्रैः प्रादक्षिण्यकृतं तु यत् ॥ ६१ ॥

---

१. 'नो' क. पाठः. २. 'ञ्ज' ग. पाठः.

नन्द्यावर्ताकृतिच्छिद्रं नन्द्यावर्ताख्यजालकम् ।
वेदिकाद्द्विगुणोऽध्यर्धं समो वा स्याद् गलोदयः ॥ ६२ ॥

भित्तिविस्तारराामांशाद् वेदिकावेशनं भवेत् ।
ग्रीवावेशस्तदूर्ध्वं स्याच्छरांशोनोऽपि तत्समः ॥ ६३ ॥

मृणालिकावकपादभूतहंसमृगैरपि ।
व्यालनाट्यकथाभिर्वा गलभूषणमाचरेत् ॥ ६४ ॥

अथ कण्ठार्धमानेन शिखरं वर्तयेत् समम् ।
कण्ठाद् द्विदण्डमानेन भवेच्छिखरनिर्गमः ॥ ६५ ॥

निर्गमाद् वर्तना बाह्ये वर्तयित्वा द्विदण्डतः ।
स्तूपीं सकुम्भां कुर्वीत यथैव शिखराकृति· ॥ ६६ ॥

शिखरस्य च संस्थानमष्टधा तच्च कथ्यते ।
चतुरश्रमायताश्रं वृत्तं वृत्तायतं तथा ॥ ६७ ॥

शालाकारं षडश्रं चाप्यष्टाश्रं षोडशाश्रकम् ।
इत्यष्टौ शिखराकारास्तेषामथ निगद्यते ॥ ६८ ॥

अर्धमौलिसमाग्रमुखपाट्टिकाकारप्रस्तरच्छत्रशीर्षगृहपिण्डिहस्तितुण्डका· दीनां पाञ्चालाद्योऽष्टौ लुपा भवन्ति । दण्डिकोत्तरविस्तारे पञ्चद्विसप्तत्रि-चतुरेकादशपञ्चत्रयोदशषट्पञ्चदशसप्तदशाष्टन्यासादर्धोदयादीनि (?) क्रमेण पाञ्चालवैदेहमागधकौरवकौसलशौरसेनगान्धारावन्तिकानि भवन्ति ।

विस्तारार्धोच्चमावन्त्यं तद्व्यामिश्रं तु नामतः ।
तद्द्वयं द्वयधा भक्तमेकद्वित्र्यंशकोऽपि च ॥ ६९ ॥

चतुःपञ्चकषट्सप्तभागाधिक्यात् क्रमेण तु ।
भवन्ति शिखरोच्चानां नामान्यपि च सप्तधा ॥ ७० ॥

कालिङ्गकाख्यवाराटकोल्लकानि च शौण्डिकम् ।
काश्मीरं चैव गाङ्गेयं शिखराणि पृथग् विदुः ॥ ७१ ॥

एतानि देवधिष्ण्यानामर्धवेधेतरन्नृणाम् ।
सर्वत्र चापि स्तम्भा वा हस्तवंशतुला अपि ॥ ७२ ॥

---

१. 'रकोल शौ', २. 'छपद्' ग. पाठः.

स्तूपिकाश्चापि देवानामयुग्माश्चैव शोभनाः ।
युग्मा एव मनुष्याणां प्रशस्ताः सर्वधामसु ॥ ७३ ॥
शिखरोदयवेदांशात् पञ्चांशाद् वाब्जतुङ्गता ।
तस्मात् पादाधिकं वा स्यात् सार्धपादाधिकं तु वा ॥ ७४ ॥
स्तूप्युच्छ्रयः स्यात् तन्न्यासः परतोऽत्र निगद्यते ।

शिखरलक्षणम् ।

---

अग्रसोपानकरणं गुह्यागुह्यमिति द्विधा ॥ ७५ ॥
वेदाश्रं दीर्घवेदाश्रं वृत्तं चेति त्रियोनिकम् ।
चतुर्विधः प्रकारः स्यात् त्रिखण्डं शङ्खमण्डलम् ॥ ७६ ॥
अर्धगोमूत्रकं चाथ वल्लीमण्डलमित्यपि ।
त्रिखण्डाकारानीचितं यत् सोपानं त्रिखण्डकम् ॥ ७७ ॥
मूलाद्याग्रं तु संक्षिप्तं क्रमाद् यच्छङ्खमण्डलम् ।
तद्द्विखण्डं तु सोपानमर्धगोमूत्रसंज्ञितम् ॥ ७८ ॥
वृक्षारोहि[2]लताकारं वल्लीसोपानसंज्ञितम् ।
शयितव्यासपादार्धत्रिपादोच्चानि वै पृथक् ॥ ७९ ॥
समखण्डानि कुर्वीत सोपानानि यथाक्रमम् ।
द्विदण्डं वाध्यर्धदण्डं भवेद्धस्तनिलं ततः ॥ ८० ॥
त्रिपादाद् वापि चार्धाद् वा हस्तनीम्रं विधीयते ।
स्थितस्य शयितस्यापि प्रवेशः स्याद् यथाबलम् ॥ ८१ ॥
षडष्ट्यग्निवेदबाणर्तुस्वरदण्डान्तविस्तृतिः ।
सोपानानां भवेद् द्वित्रिचतुर्दण्डोऽष्टपादके ॥ ८२ ॥
अर्धचन्द्रसमाकारं तत्संस्थानं प्रकल्पयेत् ।
तच्च हस्तघनं वा स्यात् त्रिपादं वास्य चोपरि ॥ ८३ ॥
स्थित्वा तले तले शस्तप्रादक्षिण्याधिरोहणम् ।
तदप्ययुग्ममेव स्यात् प्रासादे मण्डपेऽपि वा ॥ ८४ ॥

१. 'ढ' ग. पाठः. २. 'लो' ख. पाठः.

शालादिषु च रङ्गेषु सोपानं प्रमुखं स्मृतम् ।
पार्श्वयोर्मुखसोपानमन्यत्र परिमण्डयेत् ॥ ८५ ॥

सोपानम् ।

---

सर्वेषां च भवेद् धाम्नां सञ्चितं चाप्यसञ्चितम् ।
उपसञ्चितकं चेति लिङ्गं पुंस्त्रीनपुंसकम् ॥ ८६ ॥
शिलाभिरिष्टकाभिर्वा कृतं सञ्चितसंज्ञितम् ।
कपोतादिशिरोयुक्तं पुँल्लिङ्गं नाम यद् घनम् ॥ ८७ ॥
ऐष्टकं दारुजं वापि भोगभूम्यङ्गसञ्चितम् ।
असञ्चिताख्यं स्त्रीलिङ्गं विमानं तदुदाहृतम् ॥ ८८ ॥
इष्टकादारुभिर्मिश्रमघनं च घनं क्वचित् ।
उपसञ्चितकं षण्ढं भोगाभोगाङ्गसंयुतम् ॥ ८९ ॥
द्वारस्योभयपार्श्वे वा द्वारपालगुहा भवेत् ।
छिद्रं कुर्यादधश्चोर्ध्वे बाह्ये नालं प्रयोजयेत् ॥ ९० ॥
जगत्यङ्गुलमारभ्य त्र्यङ्गुलविवर्धनात् ।
आसप्तकृत्यङ्गुलं नालस्यायामः पञ्चधा स्मृतः ॥ ९१ ॥
अथोऽष्टाङ्गुलमारभ्य द्विद्व्यङ्गुलविवर्धनात् ।
नालं षोडशमात्रान्तं पञ्चधेति जगाद ह ॥ ९२ ॥
समं त्रिपादमर्धं वा खनंच्छिद्रं तु मध्यमे ।
त्रिचतुष्पञ्चतन्मात्रं तारं तत्समनिम्नकम् ॥ ९३ ॥
मूलात् पञ्चत्रिभागं स्यादग्रं धाराभिरन्वितम् ।
सिंहवक्त्रेण घटितं द्वाह्नताग्रं तु मूलतः ॥ ९४ ॥
प्रासादस्योत्तरे मध्ये नालमेवं प्रकल्पयेत् ।
अन्तःस्वपीठनालस्य समं वा बाह्यनालकम् ॥ ९५ ॥
विस्तारायामतः कुर्याद् भूषयेच्च यथोचितम् ।

नाललक्षणम् ।

---

मण्डपस्याप्यधिष्ठानं प्रासादोक्तं यदेव तत् ॥ ९६ ॥

---

'तारं' क. ख. पाठः.　२. 'छ' ख. पाठः

पूर्वोक्ता एव पादाः स्युः प्रस्तरोऽपि च पूर्ववत् ।
ऊर्ध्वदण्डाग्रविपुलमनुमार्गं च कारयेत् ॥ ९७ ॥

चतुरश्रचतुःस्तम्भो नन्द्यावर्तस्तु मण्डपः ।
अष्टाभिः स्वस्तिकाख्यः स्याद् वीरासनमिनाङ्घ्रिभिः ॥ ९८ ॥

स्तम्भैः षोडशभिर्विद्यान्मण्डपं श्रीप्रतिष्ठितम् ।
द्वात्रिंशद्भिर्जयभद्रं षट्त्रिंशद्भिरथाङ्घ्रिभिः ॥ ९९ ॥

मण्डपो माणिभद्रः स्याच्छतस्तम्भैर्विशालकम् ।
अत ऊर्ध्वं युताः स्तम्भैर्विशालास्तेऽपि मण्डपाः ॥ १०० ॥

पादायतं वाप्यध्यर्धं द्विगुणं वा ततोऽधिकम् ।
चतुरश्रायतं कुर्यान्मण्डपं दैवमानुषम् ॥ १०१ ॥

द्वित्रिहस्तान्तरान् स्तम्भांश्चतुर्हस्तान्तरांस्तु वा ।
मण्डपे युक्तितः कुर्याद् भारनाहोत्तरोचितम् ॥ १०२ ॥

कुर्वीत मण्डपं युक्त्या प्रासादाभिमुखेष्वपि ।
आरामपुण्यक्षेत्रादौ ग्रामगेहादिमध्यतः ॥ १०३ ॥

दीक्षाभिषेकयागार्थं नृत्तस्थानार्थमेव च ।
आरभ्य सार्धहस्तं तु रसाङ्गुलविवर्धनात् ॥ १०४ ॥

शरहस्तावधिर्यावद् विधात् स्तम्भान्तरं क्रमात् ।
एकद्वित्रिचतुष्पञ्चभागे भक्त्यन्तरे कृते ॥ १०५ ॥

एकभागेन वृद्धिः स्यादायामः स्वविशालतः ।
स्वभक्तिविसृता त्रित्रिमात्रवृद्ध्या करान्ततः ॥ १०६ ॥

आयामस्त्वष्टधा प्रोक्तस्तेन मानेन योजयेत् ।
सायतं चापि तत्सर्वं तत्रैव प्रपद्यते ॥ १०७ ॥

सार्धद्विहस्तमारभ्य षट्षडङ्गुलवर्धनात् ।
अष्टहस्तान्तमङ्घ्रिचयं त्रयोविंशत्प्रमाणकम् ॥ १०८ ॥

द्व्यङ्गुलिविवृद्ध्या तु स्तम्भोत्सेधोऽथवा भवेत् ।
अष्टाङ्गुलं समारभ्य चार्धार्धाङ्गुलवर्धनात् ॥ १०९ ॥

१. 'क्ष्मा' म. पाठः

नन्दपङ्क्त्यङ्गुलं यावत् संख्यया पूर्ववत् ततिः ।
स्तम्भोत्सेधे तु रुद्रांशे पङ्क्तिनन्दाष्टभागिके ॥ ११० ॥
मूलतारं तु भागेन तत्तद्भागोनमग्रतः ।
स्तम्भोच्चे शरभागे तु द्विभागोच्चं तु वा तलम् ॥ १११ ॥
तृतीयांशैकभागेन स्तम्भस्योच्चं मसूरकम् ।
सोपपीठमधिष्ठानं केवलं वा मसूरकम् ॥ ११२ ॥
अधिष्ठानोपरि स्तम्भः प्रस्तरश्च त्रिपट्टकः ।
कपोतप्रतिसंयुक्तः सामान्यो मण्डपः स्मृतः ॥ ११३ ॥
चतुरश्रश्चतुष्पादो वसुनासाविभूषितः ।
ब्रह्मासनाभिधानैः स्यान्मण्डपो वा प्रपाथवा ॥ ११४ ॥
त्रिभक्ति षोडशस्तम्भं सरङ्गं ह्यष्टनासिकम् ।
सकूटं वा चतुर्द्वारं चतुर्भिस्तोरणान्वितम् ॥ ११५ ॥
देवद्विजनरेन्द्रार्हं सर्वकर्मसु पूजितम् ।
नाम्ना सिद्धं वदन्तीह मण्डपं वा प्रपामपि ॥ ११६ ॥

मण्डपलक्षणम् ।

---

अथ प्रपाणां लक्ष्मापि सामान्येनेह कथ्यते ।
पादायामः पुरोक्तः स्याद् वेदर्त्वष्टदशाङ्गुलैः ॥ ११७ ॥
पादविष्कम्भमानं स्यात् पादाः स्युः सारदारुजाः ।
त्वक्सारैर्निर्मिता वा स्युरूर्ध्ववंशोत्तराण्यपि ॥ ११८ ॥
प्राग्वंशं चानुवंशं च नालिकेरच्छदादिभिः ।
अन्यैर्वाप्युपपत्त्या तु पत्रैः प्रच्छादयेत् प्रपाम् ॥ ११९ ॥
पङ्क्तिनन्दाष्टसप्तर्तुशरांशे पादतुङ्गके ।
भागेन वेदिकोच्चं स्यान्मध्ये रङ्गं च कल्पयेत् ॥ १२० ॥
चतुर्थांशेन पादोच्चाद् भागाद् वेदिमसूरकम् ।
स्याद् वंशस्तलिमायामः प्रस्तरोंऽशेन तस्य तु ॥ १२१ ॥

---

१. 'चं', २. 'मकम्', ३. 'नस्य मण्डानां वा' ग. पाठः.

युग्मायुग्मे द्विभक्त्यैकभक्त्या वा तद्विशालता ।
चतुःस्तम्भं वसुस्तम्भं षोडशस्तम्भकं तु वा ॥ १२२ ॥
सर्वावयवसंयुक्तं मिश्रद्रव्यं तु वा भवेत् ।
शालासभाप्रपाणां वा मण्डपानां तु मध्यतः ॥ १२३ ॥
प्रतिष्ठितचतुःस्थानं त्रिमानं रङ्गसंज्ञितम् ।
इत्थं यथावदिह तोरणकुड्यनालाः
सोपानपञ्जरगवाक्षविशेषकण्ठाः ।
बेराणि च प्रतितलं शिखराणि सम्यक्
प्रोक्तानि मण्डपविशेषयुताः प्रपाश्च ॥ १२४३ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे उपरिभागे क्रियापादे तोरणादिलक्षणपटलो द्वात्रिंशः ।

---

अथ त्रयस्त्रिंशः पटलः ।

द्रव्याण्यथ विमानादेः शिला दारूणि चेष्टकाः ।
लोहानि मृत् सुधा चेति षड्विधानि प्रचक्षते ॥ १ ॥
तत्र लक्ष्म शिलायास्तु परतोऽत्र निगद्यते ।
दार्वादीनां तु पञ्चानां सङ्ग्रहः पूर्वमुच्यते ॥ २ ॥
वर्ज्यास्तु तरवः पूर्वं वक्ष्यन्ते ये सकोटराः ।
सवल्मीका लताश्लिष्टाः कीटजुष्टाः सकण्टकाः ॥ ३ ॥
सदा पुष्पफलाढ्या वा नृगोदेवाश्रिताश्च ये ।
बहुपक्षिमृगैर्जुष्टाश्चैत्यमार्गश्मशानजाः ॥ ४ ॥
वक्राः शुष्काश्च ये भग्नाः सर्वभूतादिसंश्रयाः ।
पलाशाः कुटजा लोध्रा बिल्वपीलुशिरीषकाः ॥ ५ ॥
श्लेष्मातकाः कदम्बाश्च कोविदाराः सकिंशुकाः ।
पथ्याक्षामलकाः पार्थाः स्नुहिस्रुग्वरणा अपि ॥ ६ ॥
अम्बष्ठाः सप्तपर्णाश्च कारस्करविकङ्कताः ।
न्यग्रोधोदुम्बराश्वत्थप्लक्षशाल्मलितिन्दुकाः ॥

नन्द्यावर्ताश्च बदराः करवीराः कपित्थकाः।
सर्पमारारिमेदाश्च पुत्रजीवाः सडुण्डुकाः॥ ८॥
तिन्त्रिणीपाटलाशोककर्पूरागरुगृञ्जनाः।
अर्काश्च वर्जनीयाः स्युर्देवमानुषधामसु॥ ९॥
ऋजवः सारवन्तश्च दृढाश्च चिरजीविनः।
वर्षवातातपसहा जलस्थलसहाश्च ये॥ १०॥
तत्तद्देशोचिताः शस्ता ग्राह्याः स्युः शुभधामसु।
प्रायशः क्षीरतरवो न मनुष्यगृहोचिताः॥ ११॥
देवधामसु ते योग्याः सर्वेषां लिकुचः शुभः।
वृत्ताकारस्तु मूलाग्राद् बहुशाखो दृढायतः॥ १२॥
पुंवृक्षः स्यात् तरोः स्त्रीत्वं स्थूलमूलकृशाग्रता।
मूलाग्रयोः कृशत्वं च मध्ये स्थौल्यं च षण्डता॥ १३॥
मुहूर्तगर्भस्तम्भादौ पुंवृक्षेणैव कारयेत्।
शेषकर्मसु सर्वेषु त्रिलिङ्गैरपि शस्यते॥ १४॥

दारुनियमः।

---

शुक्लपक्षे शुभर्क्षादौ कर्ता स्थपतिना सह।
स्नातः सिताम्बरालेपः कृतकौतुकमङ्गलः॥ १५॥
वाचयित्वा द्विजैः स्वस्ति सर्वातोद्यपुरस्कृतः।
यथोद्दिष्टं भजेद् देशमुद्दिष्टैस्तरुभिर्युतम्॥ १६॥
प्रयाणसमये शस्तैर्निमित्तैर्ज्ञातमङ्गलः।
उद्दिष्टवृक्षच्छायायामुपलिप्य तु मण्डलम्॥ १७॥
गणेशं गन्धपुष्पाद्यैर्भक्ष्यैर्भोज्यैश्च पूजयेत्।
क्षेत्रेशमोषधीशं च तथैव वनदेवताः॥ १८॥
गन्धादिभिश्च चरुणा फलपायसमोदकैः।
इष्ट्वा भूतबलिं दद्याद् भूतान्नकृसरौदनैः॥ १९॥

सटङ्कः स्थपतिः स्नात्वा मन्त्रावेतावुदीरयेत् ।
अपक्रामन्तु भूतानि देवताश्च सगुह्यकाः ॥ २० ॥
युष्मभ्यं सुबलिर्भूयात् सोमो दिशतु पादपान् ।
शिवमस्तु महीपुत्रा युष्मभ्यं चापि नः सदा ॥ २१ ॥
कर्मैतत् साधयिष्यामि क्रियतां वासपर्ययः ।
एवमुक्त्वा नमस्कृत्य पादपेभ्यः प्रसन्नधीः ॥ २२ ॥
तरोश्छेद्यस्य तु प्राच्यां पीत्वा गव्यं पयो निशि ।
दर्भेषु स्थपतिः सुप्त्वा सुस्वप्नैः प्रातरुत्थितः ॥ २३ ॥
स्नात्वा स्वलङ्कृतः शस्ते मुहूर्ते स्थपतिः सुधीः ।
आलिप्य परशोरास्यं पञ्चगव्येन वाग्यतः ॥ २४ ॥
वाद्यैश्च मङ्गलैर्गीतैः प्राङ्मुखो वाप्युदङ्मुखः ।
किष्कुमात्रं तरोर्मूलं त्यक्त्वा छिन्द्यात् तदूर्ध्वतः ॥ २५ ॥
छेदात् क्षीरस्रुतिर्लक्ष्म्यै जलस्रावस्तु सौख्यकृत् ।
रुधिरस्य विनाशाय कर्तुश्छिन्द्यान्न तं तरुम् ॥ २६ ॥
सिंहेभवृषभश्वानाः पतने तु शुभावहाः ।
हसिताक्रोशरुदितकूजितान्यशुभान्यतः ॥ २७ ॥
तं वृक्षं वर्जयित्वान्यं गृह्णीयाच्छुभलक्षणैः ।
इन्द्रेशार्थदिक्पातस्तन्मुखाग्रं च शस्यते ॥ २८ ॥
अन्यथा पतितस्त्याज्यो भङ्गः सर्वत्र गर्हितः ।
वृक्षान्तरादौ सङ्गोऽपि विप्रक्लेशकरोऽशुभः ॥ २९ ॥
शुभच्छेदाग्रपतनं तरुमूलाग्रयोः समम् ।
इष्टप्रमाणतश्छित्त्वा चतुरश्रं तु तक्षयेत् ॥ ३० ॥
मुहूर्तस्तम्भमुद्दिश्य शुक्लेनाच्छाद्य वाससा ।
शकटादौ समारोप्य यथोद्देशमुपाहरेत् ॥ ३१ ॥
देवद्विजनरेन्द्राणां विशां च शकटैर्गजैः ।
दार्वाहरणमिष्टं स्यादन्येषां नृभिराहरेत् ॥ ३२ ॥
प्रवेश्य शस्तद्वारेण कर्मशालास्थले ततः ।
वालुकासञ्चये दारु शाययेत् पूर्वमस्तकम् ॥ ३३ ॥

न परावर्तनं कुर्यादष्टपञ्चत्रिमासतः ।
इत्थं दारोर्विधानेन सङ्ग्रहेद् धामकर्मणि ॥ ३४ ॥
स्वीकारः सर्वदारूणां विधिनैव कृतो भवेत् ।

दारुस्वीकरणम् ।

---

अथेष्टकानां करणं सुधा चैव निगद्यते ॥ ३५ ॥
श्वेता[1] कृष्णा पाण्डराख्या च सलोणा च विगर्हिता ।
चतुर्थी ताम्रफुल्ला तु कर्मयोग्या मृदिष्यते ॥ ३६ ॥
तुषाङ्गारास्थिपाषाणकाष्ठशर्करलोष्टकैः ।
वर्जिता सूक्ष्मसिकता ताम्रफुल्लेष्टकोचिता ॥ ३७ ॥
तां प्रक्षिप्यावटे मृत्स्नां जानुदघ्नं जलं क्षिपेत् ।
आलोड्य पद्भिः संक्षोभ्य मर्दयेत् तां पुनः पुनः ॥ ३८ ॥
ततः क्षीरागशैरीषत्वक्क्वाथैस्त्रिफलाम्बुभिः ।
मर्दयेन्मासमात्रं तु तत्कर्मकुशलैर्नरैः ॥ ३९ ॥
इष्टकाः कल्पयेत् सम्यग् द्वादशाङ्गुलमायताः ।
तदर्धविस्तृताः कुर्याद् व्यासरामांशमुच्छ्रूताः ॥ ४० ॥
त्रिपादोनास्त्वतो वा स्युर्घर्मे ताः परिशोषयेत् ।
अखण्डर्क्षे सुलग्नादौ चुल्लीं कृत्वानुमारुतम् ॥ ४१ ॥
तत्रेष्टकास्ताः सन्दध्यात् सान्तरं क्रमशश्चिताः ।
काष्ठैः पलालभाराद्यैराचिताः स्युर्निरन्तरम् ॥ ४२ ॥
बहिराच्छादयेत् सम्य मृत्स्नया च विलेपयेत् ।
तन्मुखेष्वग्निमाधाय दशाहं पक्षमेव वा ॥ ४३ ॥
संस्कृत्य ज्वलने शान्ते समुद्धृत्येष्टकास्ततः ।
प्रक्षिप्य सलिले वर्षमष्टौ मासान् षडेव वा ॥ ४४ ॥
उद्धरेदिष्टकास्ताः स्युर्विमानादिक्रियोचिताः ।

इष्टकाः ।

---

इष्टकोक्तमृदा तद्वन्मृल्लोष्टकरणं स्मृतम् ॥ ४५ ॥

---

१. 'कृ' ग. पाठः.

तत्तन्मात्राङ्गुलैरर्कदिग्वसूनां तु संख्यया ।
आयतान्युत्तमादीनि मृल्लोष्टानि भवन्ति हि ॥ ४६ ॥
आयामार्धात् स्मृतो व्यासः शरांशे ध्यंशतोऽपि वा ।
व्यासे रामाब्धिबाणांशे लोष्टोत्सेधोंऽशतो भवेत् ॥ ४७ ॥
उत्तमादिक्रमादेवं मृल्लोष्टेषु स्मृतो विधिः ।
सुवर्णरूप्यताम्राणां लोष्टैः श्रेष्ठादिकं फलम् ॥ ४८ ॥
लभते देवधिष्ण्यादौ मार्त्तिकैरधमाधमम् ।
मानप्रमाणं लोहानां ज्ञेयं वित्तानुसारतः ॥ ४९ ॥
सर्वाण्यपि समानानि सप्तभेदानि तान्यपि ।
द्व्यश्रं चैव द्विकोणाश्रं पार्श्वलोष्टं च वर्तुलम् ॥ ५० ॥
कोणलोष्टं च वक्रं च पद्मलोष्टं च सप्तमम् ।
क्रमपङ्क्तिनिवेशस्तु तैर्विधेयं तु युक्तितः ॥ ५१ ॥

इष्टकालोष्टकरणम् ।

करालमुद्गगुल्मासकल्कचिक्कणकाह्वयाः ।
चूर्णोपयुक्ताः पञ्चैते सुधाप्रकृतयो मताः ॥ ५२ ॥
अभयाक्षबीजमात्राः शर्कराः स्युः करालकाः ।
मुद्गा मुद्गसमा ज्ञेया मुद्गिनः क्षुद्रशर्कराः ॥ ५३ ॥
सार्धत्रिपादद्विगुणकिञ्जल्कसिकतान्वितम् ।
चूर्णं तु शर्कराशुक्त्योर्यद् गुल्मासं तदुच्यते ॥ ५४ ॥
करालमुद्गयोः पूर्वोक्तमानेन सिकतान्वितम् ।
चणकस्य च चूर्णस्य पिष्टं यत् कल्कमिष्यते ॥ ५५ ॥
चिक्कणं केवलं त्वम्बु बद्धोदकमिति द्विधा ।
केवलेनाम्भसा पूर्वं पूर्वोक्तांशिः प्रकुट्टयेत् ॥ ५६ ॥
क्षीरद्रुमामलाक्षाणां कदम्बाभययोरपि ।
त्वग्जलैस्त्रिफलातोयं माषयूषं च तत्समम् ॥ ५७ ॥
संयम्य शर्कराशुक्त्योश्चूर्णं तत् खातवारिणि ।
खुरसंकुट्टनं कृत्वा स्रावयित्वाथ वाससा ॥ ५८ ॥

चिक्कणं कल्पयेत् तेन बद्धोदकमथोच्यते ।
दधिदुग्धमाषयूषैर्गुलाज्यकदलीफलैः ॥ ५९ ॥
नालिकेराम्रफलयोर्जलैश्चैतत् सुकल्पितम् ।
बद्धोदकं भवेत् तच्च समभागं नियोजयेत् ॥ ६० ॥
लब्धचूर्णे शतांशं तु क्षौद्रमंशद्वयं भवेत् ।
आज्यं तु कदलीपक्वं नालिकेराम्बुमाषयूः ॥ ६१ ॥
क्षीरागत्वक्कषायश्च क्षीरं दधि ततो गुलम् ।
पिच्छिलं त्रिफलाम्भश्च त्र्यंशादिकमिदं क्रमात् ॥ ६२ ॥
अंशवृद्ध्या समायोज्य चूतपक्वाम्बु शक्तितः ।
एकीकृत्य करालं च प्रक्षिपेद् दृढपेषितम् ॥ ६३ ॥
अतीत्यैकदिनं पश्चाद् यथैव घनता भवेत् ।
नारिकेलस्य शाखादिदण्डैः सन्ताडयेन्मुहुः ॥ ६४ ॥
अतीत्य दशरात्रं तु मुद्गीगुल्मासकल्ककैः ।
युक्तं सुकुट्टितं युक्त्या सुधा भवति शोभना ॥ ६५ ॥

अपिच —

पूर्वं त्र्यंशं करालं मधुघृतकदलीनालिकेराम्बुमाष-
यूषं वार्क्षः कषायः स्तनजदधिगुलत्रैफलाम्भांसि चैवम् ।
वृद्ध्यान्यंशक्रमेण स्फुटशशिधवलं चूर्णमुक्तं शतांश
पिष्टं सर्वं यथावद् भवति वरसुधा वज्रबद्धं यथैव ॥ ६६ ॥
चतुस्त्रिद्वयमासान्तमुषिता युक्तिमर्दिता ।
श्रेष्ठमध्याधमा ज्ञेया सुधा सौधादिबन्धनी ॥ ६७ ॥
अथ कुड्यादिकं शुष्कं नीरन्ध्रं सुसमं मृदु ।
शुद्धाम्भसादौ प्रक्षाल्य दधिक्षीरगुलान्वितम् ॥ ६८ ॥
बद्धोदकेन चालिप्य व्यपोह्यैकदिनं ततः ।
सुधां नियोजयेद् युक्त्या यथा यत्रोचितं भवेत् ॥ ६९ ॥
भित्त्यादौ तत्र लेख्यं स्याच्चित्रं चित्रतराकृति ।
स्वागमोदितदेवादिपुराणोक्तकथान्वितम् ॥ ७० ॥

रङ्गवर्णान्वितं रम्यं न न्यूनं नाधिकं क्वचित् ।
तत्रतत्रोचिताकाररसभावक्रियान्वितम् ॥ ७१ ॥
चित्रं विचित्रफलदं भर्तुः कर्तुश्च सर्वदा ।
अतोऽन्यदशुभं चित्रं विपरीतफलप्रदम् ॥ ७२ ॥
न लेखयेत् तन्न लिखेल्लोकद्वयसुखेच्छया ।

सुधाधिकारः ।

द्रव्याणामपि दारूणां बलायामादिसिद्धये ॥ ७३ ॥
स्थितानां शायितानां च सन्धिकर्म निगद्यते ।
बाह्यं चाभ्यन्तरं पार्श्वेऽप्यधस्ताच्च तथोपरि ॥ ७४ ॥
अन्यत्रापि च यत्रेष्टं सन्दध्यादुचितं यथा ।
सर्वदारूणि पूर्वाग्रमुत्तराग्रं च योजयेत् ॥ ७५ ॥
शुभदं विपरीताग्रमशुभायेह कल्पते ।
मूले मूलं न सन्दध्यादग्रेणाग्रं न योजयेत् ॥ ७६ ॥
मूलाग्रद्रव्ययोगेन सन्धिः सम्पदां पदम् ।
वास्तुमध्ये वर्ते द्वारे देवांशेष्वपि कर्णयोः ॥ ७७ ॥
सन्धानं स्वामिनाशाय कुलक्षयकरं त्यजेत् ।
मेषयुद्धं त्रिखण्डं च संमद्रं चार्धपाणिकम् ॥ ७८ ॥
(महा? मान)वृत्तं च सन्धानं स्तम्भानां पञ्चधैव हि ।
षट्शिखं झषदन्तं च सूकरप्राणमप्यथ ॥ ७९ ॥
सर्ङ्गर्णकीलं वज्रं च शायेते पञ्च सन्धयः ।
स्तम्भद्रव्यस्य विस्तारात् रामांशान्मध्यतःशिखम् ॥ ८० ॥
मेषयुद्धं स्वस्तिकाभं सत्रिचूडं त्रिखण्डकम् ।
सौभद्रमिति तत् प्रोक्तं पार्श्वप्रासचतुश्शिखम् ॥ ८१ ॥
गृहीतघनमानार्धं छित्त्वा मूलाग्रयोर्मिथः ।
निश्छिद्रमर्पितः प्रोक्तः सन्धिः स्यादर्धपाणिकः ॥ ८२ ॥
मध्ये स्वार्धेन यद् वृत्तशिखं तन्मानवृत्तकम् ।
निवृत्ताकृतिनिष्पाद्ये योजयेदुक्तमार्गतः ॥ ८३ ॥
अथार्धपाणिखण्डाभ्यां द्वकाकारास्तु तच्छिखाः ।
समभ्यस्थितकीलं च यत्र स्यात् षट्छिखस्तु सः ॥ ८४ ॥

झषदन्तो निजायामात्तर्यग्बाहुशि ।युतः ।
आधाराधेययोगेन यथाबलशिखायुतम् ॥ ८५ ॥

सूकरघ्राणवद्योज्यःसूकरघ्राणसंज्ञिते ।
यथायुक्ति यथायोगं शूलैर्नानाविधैर्युतम् ॥ ८६ ॥

सङ्कीर्णकीलसंज्ञः स्याद् वज्राभो वज्रचूडकः ।
स्वव्यासकर्णाध्यर्धं वा सन्ध्यायामः स्थिते भवेत् ॥ ८७ ॥

स्तम्भमध्ये न सन्दध्यान्मध्यसन्धिर्विनाशकृत् ।
दक्षिणेऽपि च वामे च स्तम्भचूडान्तरं तु तत् ॥ ८८ ॥
सन्धिमध्यं नियोज्यं स्यात् तदेवं सम्पदां पदम् ।
अन्योन्यसन्धिविद्धं तु शिखाकीलं न वेधयेत् ॥ ८९ ॥

तद्रव्यव्यासमध्यस्था शिखा सम्पद्विनाशिनी ।
दक्षिणोत्तरयोर्युक्ता शिखा सम्पत्करी भवेत् ॥ ९० ॥

गृहीतस्तम्भविपुले त्वष्टसप्तषडंशके ।
शि ।याः कीलकस्यापि विस्तारो भागतो भवेत् ॥ ९१ ॥

एकपङ्क्तिगतस्तम्भेष्वेकाकारास्तु सन्धयः ।
मिश्रसन्धिर्विनाशाय तस्मान्मिश्रं तु वर्जयेत् ॥ ९२ ॥

स्तम्भसन्धिः ।

---

अर्धार्धदीर्घद्रव्याभ्यां सन्धयः स्युर्नाहैर्बहिः ।
अन्तरन्तर्नियोज्यं स्याद् दक्षिणादक्षिणा तथा ॥ ९३ ॥

मध्यद्रव्यं यथादीर्घं ह्रस्वद्रव्येषु पार्श्वयोः ।
सन्दध्याच्छयितद्रव्ये समं वापि त्रयं क्वचित् ॥ ९४ ॥

मूलाग्रयोरलङ्कारांस्त्यक्त्वा सर्वत्र सन्धयेत् ।
अन्तर्मूलं बहिश्चात्र शयितद्रव्यसन्धिषु ॥ ९५ ॥

अत्र पराशरः —

"मूलं मूलेन नैरृत्यामग्रेणाग्रं तु शूलिनि ।
मूलाग्रयोस्तु संयोगः शयितेऽग्नौ च मारुते ॥

नवद्रव्यं नवेनैव जीर्णं जीर्णेन सन्धयेत् ।
दारुणा दारु सन्दध्यात् त्वक्सारं त्वचिसारकैः ॥

स्वजातिभिः स्वजातीस्तु सन्दध्यान्न विजातिभिः ।
शिलाः शिलाभिः सन्दध्यादिष्टकाभिस्तथेष्टकाः ॥
विपरीतं विनाशाय यथोद्दिष्टं सुखावहम् ॥"

इति । मयोऽप्याह—

"मल्लकीलं तथा ब्रह्मराजं वै वेणुपर्वकम् ।
क्रमुकं देवसन्धिश्च दण्डकः षष्ठ उच्यते ॥"

इति ।

द्रव्यद्वयस्य त्वेकत्र सन्धिः स्यान्मल्लकीलकः ।
त्रिद्रव्यैर्ब्रह्मराजाख्यो वेणुपर्वाब्धिबाणकैः ॥ ९६ ॥

क्रमुकः षण्मुनिद्रव्यैर्देवसन्धिर्नवाष्टभिः ।
बहुसन्धिर्बहुद्रव्यैर्दण्डिकासन्धिरुच्यते ॥ ९७ ॥

स्वस्तिकं वर्धमानं च नन्द्यावर्तमतःपरम् ।
ततश्च सर्वतोभद्रं तत्तदाकारसन्धयः ॥ ९८ ॥

अन्तर्मूलं बहिश्चाग्रं पार्श्वद्रव्येषु शोभनम् ।
विपरीतं विनाशाय यतस्तन्न समाचरेत् ॥ ९९ ॥

पितामहादिशास्त्रेषु यथादृष्टं पुरातनैः ।
तथा तत्तत् प्रकुर्वीत सौख्यायुस्संपदृद्धये ॥ १०० ॥

दार्विष्टकालोष्टसुधाविशेषाः प्रोक्ता यथालक्षणतश्च योगाः ।
सन्धिः स्थितानामपि शायितानां सन्दर्शितोऽनेकविधो यथावत् ॥ १०१ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे उपरिभागे क्रियापादे
दार्वादिलक्षणपटलस्त्रयस्त्रिंशः ।

---

अथ चतुस्त्रिंशः पटलः ।

वस्त्वारम्भेषु सर्वेषु मानोन्मानप्रमाणवित् ।
पूर्वं स्थपतिरेष्टव्यः शिल्पशास्त्रविशारदः ॥ १ ॥

---

१. 'ब' ग. पाठः.

तथैव शिवशास्त्रज्ञो युक्तस्त्वाचार्यलक्षणैः ।
स्थापकोऽपि वृतः कर्ता वस्तुकर्म समाचरेत् ॥ २ ॥
ताभ्यामुभाभ्यां प्रारब्धं विमानं वान्यदेव वा ।
निष्पाद्यमासमाप्तेः स्यात् ताभ्यामेव हि नेतरैः ॥ ३ ॥
तयोरभावे तत्पुत्रैः शिष्यैर्वा कर्म तत्परम् ।
आसमाप्तेर्विधेयं हि चित्रस्थगुरुशासनात् ॥ ४ ॥

अत्र पितामहादिवचनं —

"प्रथमं[1] कृतवान् विधिं[2] यथा यः स तथा तत् प्रकरोतु निष्ठितान्तम् ।
अथवान्यकृतोऽन्यनिष्ठितश्चेदशुभं स्वामिनरेन्द्रदेशभाजाम् ॥"

इति । वस्त्वारम्भादासमाप्तेः कर्तृनियमः ।

विमानस्य कृतस्याग्रे स्तूपीकुम्भौ च विन्यसेत् ।
चतस्र इष्टकाः प्राग्वदधिवास्य विधानतः ॥ ५ ॥
शिखराग्रस्य मध्ये तु कृत्वा पञ्चावटानथ ।
सर्वरत्नौषधीबीजलोहधातुरसानपि ॥ ६ ॥
ततो[3] वरसुगन्धांश्च मूलेशानास्त्रमन्त्रितान् ।
प्रदक्षिणक्रमेणैव मध्यश्वभ्रे निधाय तु ॥ ७ ॥
पृथिव्यादिचतुस्तत्त्वैः सद्याद्यैर्हृदयादिभिः ।
आग्नेयादिषु कोणेषु चतस्रोऽपीष्टका न्यसेत् ॥ ८ ॥
निष्पाद्य स्तूपिकाकीलं लौहं दारवमेव वा ।
लिङ्गाभं सूचिकाग्रं वा शिखराकारमेव वा ॥ ९ ॥
ऊर्ध्वभूस्तम्भदीर्घं तद् विस्तृतं पादमानतः ।
आनुपूर्व्यात् कृशं कुर्यादग्रे चाङ्गुलिविस्तृतम् ॥ १० ॥
आयामे तु त्रिधा भक्ते चतुरश्रं तु मूलतः ।
भवेद्वे वृत्तौ मध्यांशश्चान्त्यांशः शिखिपादवत् ॥ ११ ॥

---

१. 'अथमं', २. 'धृति', ३. 'धीपरसग' ग. पाठः. ४. 'श्च मध्ये कृताश्वभ्रे' ग. पाठः.

पुण्याहवाद्यघोषाद्यैर्लग्ने कीलं तु विन्यसेत् ।
प्रागुक्ते मध्यमे गर्ते स्तूप्यायामे शरांशके ॥ १२ ॥
अंशत्रयमदृश्यं स्याद् दृश्यावूर्ध्वांशकौ यथा ।
शिलाभिरिष्टकाभिर्वा बध्नीयात् परितो दृढम् ॥ १३ ॥
एकद्वित्रिद्रव्ययुते तेन ताभ्यां च तैरपि ।
द्रव्यैराच्छादनं मूर्ध्नि स्तूप्यास्तु परितः स्मृतम् ॥ १४ ॥
सुधयाथ दृढीकृत्य सवल्लीकं सलक्षणम् ।
पद्ममष्टदलं कृत्वा स्तूपिकां भूषयेत् ततः ॥ १५ ॥
क्षौमैः कार्पासिकैर्वापि नवैर्वस्त्रैर्महाध्वजम् ।
स्तूप्यन्तमूलभूम्यादिव्यायतं समविस्तृतम् ॥ १६ ॥
स्तूप्यग्रे तु ध्वजं बद्ध्वा विसृजेदुत्तरामुखम् ।
सोमेशानेन्द्रादिग्भूमिं यदि पूर्वं स्पृशेद् ध्वजः ॥ १७ ॥
शुभदः स्यात् ततोऽन्यस्माच्छान्त्यर्थं जुहुयात् तिलैः ।
सहस्रं संहितामन्त्रैर्घृतेन चरुणा तथा ॥ १८ ॥
कुर्वीत वास्तुहोमं च दद्याद् वास्तुबलिं निशि ।
स्थपतिं च तथाचार्यं हिरण्यवसनादिभिः ॥ १९ ॥
तोषयेद् ब्राह्मणांश्चान्यांस्तक्ष्णः कर्मकरानपि ।

## स्तूपीविन्यासः ।

अथ कुम्भं तु सौवर्णं राजतं शौल्बमेव वा ॥ २० ॥
सौधं वा मार्त्तिकं वापि गृहीत्वा लक्षणान्वितम् ।
सुदिनर्क्षमुहूर्तादौ स्नात्वाथ स्थपतिः सुधीः ॥ २१ ॥
भूषितो वस्त्रहेमाद्यैः प्राङ्मुखोदङ्मुखोऽपि वा ।
कुम्भाधारे तु विन्यस्य हेमरत्नौषधीरसान्[1] ॥ २२ ॥
स्तूपिकाच्छादकं कुम्भं स्तूप्याकारशिखं न्यसेत् ।
ऋजुमालाग्रविन्यासमेकं त्रीन् वाथ पञ्च वा ॥ २३ ॥
तदानुगुण्यतो मूर्त्तिं मूर्तीर्वा मन्त्रतो न्यसेत् ।
एकस्मिञ्छिव एव स्यात् त्रये ब्रह्महरीश्वराः ॥ २४ ॥

---

1 'रान्' ग. पाठः.

ब्रह्माद्यास्तु सदेशान्ताः स्थाप्याः स्युः कुम्भपञ्चके ।
यथादृढं सुनिश्छिद्रं कुम्भमूलं समन्ततः ॥ २५ ॥
सुधालोहादिबन्धेन बध्नीयाच्छलक्ष्णकुट्टिमम् ।

कुम्भाधिन्यासः ।

निष्ठितस्य विमानस्य प्रतिष्ठाविधिरुच्यते ॥ २६ ॥
उत्तरायणसंस्थेऽर्के मुहूर्तादौ गुणान्विते ।
अङ्कुरार्पणपूर्वं तु कृत्वैशान्यां तु मण्डपम् ॥ २७ ॥
नन्दर्षिशरहस्तं वा वेदाश्रं तूत्तमादिकम् ।
द्वादशाष्टचतुस्तम्भं वितानाद्यैरलङ्कृतम् ॥ २८ ॥
द्विहस्तमानं तन्मध्ये स्थण्डिलं शालितण्डुलैः ।
चतुरश्रं वितस्त्युच्चं चतुष्षष्टिपदान्वितम् ॥ २९ ॥
तस्मिन् ब्रह्मादिकानिष्ट्वा वास्तुदेवान् यथाविधि ।
पञ्चविंशतिसङ्ख्यांस्तु कलशानम्बुपूरितान् ॥ ३० ॥
युक्तान् हिरण्यवस्त्राद्यैश्चोपपीठस्थदैवतैः ।
संस्थाप्य स्थपतिः स्नातः शुक्लवस्त्रादिभूषितः ॥ ३१ ॥
तस्योत्तरे कुशास्तीर्णे पयः पीत्वा निशि स्वपेत् ।
प्रातः प्रासादतः प्राच्यां प्राग्वद् वेदाश्रमण्डपे ॥ ३२ ॥
अलङ्कृते वितानाद्यैः सचतुर्द्वारतोरणे ।
मण्डपव्याससमांशां व्यासोच्चायामतः समाम् ॥ ३३ ॥
कृत्वा वेदिं तु वेदाश्रां तस्यां तत्र चतुर्दिशम् ।
चतुरश्राणि कुण्डानि विदिक्ष्वश्वत्थपत्रवत् ॥ ३४ ॥
इन्द्रेशमध्ये चाष्टाश्रं कुण्डं कृत्वा शिवानले ।
आचार्यो मूर्तिपैः सार्धं मूर्तिमन्त्रैश्चतुर्दिशम् ॥ ३५ ॥
जुहोतु चाङ्गैः कोणेषु वस्वश्रे संहितास्ततः ।
मूर्तिपैर्दिक्षु होतव्यमाचार्येणाष्टकोणके ॥ ३६ ॥
वेदिकास्थण्डिले कुम्भे साङ्गमूलं शिवं यजेत् ।
विमानस्य चतुर्दिक्षु वृत्तकुण्डेषु मूर्तिभिः ॥ ३७ ॥

जुहुयादपि सर्वत्र समिदाज्यौदनैस्तिलैः ।
विमानमथ जन्मादिस्तूप्यन्तं वसनैर्नवैः ॥ ३८ ॥

वेष्टयेद् दर्भमालाभिर्माल्यैश्चाप्युपर्पचितः ।
चतुर्वर्णौदनैश्चापि या(वी ? वैः)कृसरपायसैः ॥ ३९ ॥

दधिदुग्धगुलक्षौद्ररत्नहेमफलाक्षतैः ।
हेमपात्रं समापूर्य वास्तुभूतबलिं निशि ॥ ४० ॥

दत्त्वा ततः प्रभाते तु स्थपतिः स्थापकोऽपिच ।
स्नानादिकाः क्रियाः कृत्वा विमानमधिरुह्य तु ॥ ४१ ॥

स्थापको मूर्तिपैः सार्धं कलशैस्तैर्यथाक्रमम् ।
अभिषिच्य विमानं तद् गन्धाद्यैरर्चयेत् ततः ॥ ४२ ॥

शिखरस्य पुरोभागे स्वर्णसूच्याथ नेत्रयोः ।
स्थण्डिलानि लिखित्वा तु नेत्रमोक्षं तथाचरेत् ॥ ४३ ॥

आच्छाद्याहतवस्त्रेण व्यपनीयाथ दर्शयेत् ।
सवत्सां गां च विप्रांश्च धान्यराशिं च काञ्चनम् ॥ ४४ ॥

ततः स्थपतिरव्यग्रः शङ्खतूर्यादिनिस्वनैः ।
प्रलम्बयेद् ध्वजं प्राग्वत् स्तूप्यग्रग्रन्थिताननम् ॥ ४५ ॥

प्राग्वच्छुभाशुभान् ज्ञात्वा शान्तिं कुर्याच्छुभेतरे ।
ततो वेदिस्थकलशकुशाम्भोभिश्च सर्वतः ॥ ४६ ॥

संप्रोक्ष्य तु विमानं तत् प्रजपेद् भुवनेश्वरीम् ।
विमानादवरुह्याथ स्थपतिस्तक्षकैर्वृतः ॥ ४७ ॥

सगर्भमण्डपं धिष्ण्यं कुशगन्धजलैः क्रमात् ।
संप्रोक्ष्य चाष्ट धान्यानि विकिरेत् सर्वतोऽपिच ॥ ४८ ॥

स्थपतिः प्रमुखे स्थित्वा पुष्पगन्धाक्षताम्बुभिः ।
पूर्णाञ्जलिरिमान् श्लोकान् पठेद् देवाननुस्मरन् ॥ ४९ ॥

वर्षाम्बुबाधादशनिप्रपाताच्चण्डाच्च वायोरपि चाग्निदाहात् ।
चोरादिकेभ्यः परचक्रघाताद् रक्षन्त्विदं सप्त सुरासुराद्याः ॥ ५० ॥

भगदा मनुजाः सधनाः सुखिनः प्रथिता यशसा च भवन्तु चिरम् ।
विजयी निखिलां पशुसस्यवतीं सुकृती नृपतिः पृथिवीमवतात् ॥ ५१ ॥
ब्रह्मा विष्णुः शङ्करश्चन्द्रसूर्यौ नन्दी लक्ष्मीर्वाग् वधूः(?) स्कन्द इन्द्रः ।
भूमिर्देवाश्चर्षयश्च प्रजानां श्रीसौभाग्यारोग्यभोगान् कुर्षीरन् ॥ ५२ ॥

इति ।

स्थपतिस्त्वेवमुच्चार्य स्वकर्म परिनिष्ठितम् ।
समापयेत् स्थापकोऽपि स्वकर्माथ समापयेत् ॥ ५३ ॥
पुण्याहं वाचयित्वाग्रे कुम्भतोयकुशोदकैः ।
पञ्चगव्येन चाशेषं प्रासादं प्रोक्षयेत् क्रमात् ॥ ५४ ॥
ततः प्रासादमूर्त्तिं तु विन्यस्य सकलां स्मरेत् ।
प्रासादबीजं हंसाख्यं द्वादशान्ताद् विनिःसृतम् ॥ ५५ ॥
आनीय विन्यसेत् तस्यां धिष्ण्यमूर्त्तौ चिदात्मकम् ।
ततश्चार्घ्यादिभिस्तद्वद् गन्धाद्यैश्च यथाक्रमम् ॥ ५६ ॥
निवेद्यान्तं यजेत् सम्यग् विमानं तत् प्रसन्नधीः ।
यजमानस्ततः स्वर्णवसनाभरणादिभिः ॥ ५७ ॥
स्थापकं स्थपतिं चापि पूजयित्वा स्वशक्तितः ।
विमानकरणोदीर्णपरिक्लेशफलात्मकम् ॥ ५८ ॥
गृह्णीयाद् धर्मसर्वस्वं तक्ष्णः कनकधारया ।
तत्र स्वयं तु स्थपतिर्दद्यात् सलिलधारया ॥ ५९ ॥
पुनस्तं हेमवस्त्राद्यैर्यजमानस्तु तोषयेत् ।
यदि तक्षकरादेवं न गृह्णीयात् प्रमुग्धधीः ॥ ६० ॥
तत्कर्म निष्फलं तु स्याद् यतोऽस्माद् ब्राह्ममेव तत् ।
अथान्यानपि तक्षादीन् कर्ता कर्मकरानपि ॥ ६१ ॥
तोषयेदुचितैर्द्रव्यैर्मूर्तिपान् ब्राह्मणानपि ।
गोधान्यध्वजवस्त्राद्यं दद्यात् स्थपतयेऽखिलम् ॥ ६२ ॥
भोजयेद् ब्राह्मणादींश्च दक्षिणाभिश्च तोषयेत् ।
ब्रह्मैव स्थपतिः साक्षाद् यजमानः स्वयं हरिः ॥ ६३ ॥

आचार्यो भगवान् रुद्रास्त्रिभिर्निष्पादितं तु यत् ।
तद्रस्तु स्थिरमेव स्याद् दृष्टादृष्टफलप्रदम् ॥ ६४ ॥

विमानप्रतिष्ठाधिकारः ।

---

हृत्प्रतिष्ठा विधेयाथ दैवे धाम्नि सुनिष्ठिते ।
चतुर्द्वारादिसंयुक्तं प्राग्वदाभूष्य मण्डपम् ॥ ६५ ॥
विकिरक्षेपकुम्भास्त्रवह्न्याधानादिपूर्वकम् ।
मन्त्राणां तर्पणान्तं तु कर्म दीक्षावदाचरेत् ॥ ६६ ॥
हिरण्येन यथाशक्ति कृत्वा प्रासादपूरुषम् ।
बहिरुत्तरवेद्यां तु संस्नाप्याच्छाद्य वाससा ॥ ६७ ॥
विन्यस्य चेष्ट्वा गन्धाद्यैस्ततो मण्डपमानयेत् ।
शय्यायां शाययेद् वेद्यां पुरुषं प्रलयाकलम् ॥ ६८ ॥
शिवाज्ञापदसम्बुद्धं ततः कुर्यात् सचेतनम् ।
तारहृत्सम्पुटं हंसमुद्धृत्यात्मपदं ततः ॥ ६९ ॥
शिवाज्ञया शरीरेऽस्मिन् त्वया स्थातव्यमित्यपि ।
उच्चार्याथाञ्जलिं पुष्पैरापूर्य द्वादशान्ततः ॥ ७० ॥
चैतन्यं तारकाकारं नियोज्य कुसुमाञ्जलौ ।
हिरण्यपुंसो हृत्पद्मे नाडीमार्गेण योजयेत् ॥ ७१ ॥
ततः कलादिकं देहं तस्मिन् सङ्कल्प्य विन्यसेत् ।

तद्यथा — ओं हां कलायै नमः । ओं हां कलाधिपतये नमः । ओं हा। कलाधिपस्य कर्तृत्वाभिव्यक्तिं कुरुकुरु ।

अनेनैव प्रकारेण विद्यारागादिकान्यपि ॥ ७२ ॥
अहङ्कारं तु तत्त्वानि पृथगुच्चार्य तु न्यसेत् ।
विद्यादीनां विशेषेण कार्यं भिन्नं प्रशस्यते ॥ ७३ ॥

तद्यथा — विद्याधिपास्य ज्ञानाभिव्यक्तिं रागाधिपास्य विषयेषु रागं, प्रकृत्याधिपास्य स्वाधिकारकर्तृत्वं, बुद्ध्यधिपास्य बोधम्, अहङ्काराधिपास्याभिमानं कुरु कुर्विति सर्वत्रान्ते योजयेत् ।

मनसश्च दशाक्षाणामधिपाः स्युः पृथक् पृथक् ।

तद्यथा —

चन्द्रो दिशश्च वायुश्च सूर्योऽथ वरुणोऽश्विनौ ॥ ७४ ॥
समनश्श्रोत्रपूर्वाणामिन्द्रियाणामिहाधिपाः ।
अग्निरिन्द्रस्तथा विष्णुर्मित्रो ब्रह्मा च ते क्रमात् ॥ ७५ ॥
वागादिकर्मेन्द्रियाणां पञ्चाधिपतयो मताः ।
मनस(स्वोः ? श्रो)दितं कर्म स्यात् सङ्कल्पविकल्पकम् ॥ ७६ ॥
श्रोत्रादीनां तु शब्दादेर्ग्राहकत्वं पृथक् स्मृतम् ।
उक्त्युपादानगमनविसर्गानन्दकर्मणाम् ॥ ७७ ॥
ग्राहकत्वं पृथग् वाच्यं वागादीनां यथाक्रमम ।
अथादौ तारहृद्बीजपूर्वं शब्दादिपञ्चकम ॥ ७८ ॥
उच्चारयेच्चतुर्थ्या तु नमोन्तं तु सकृत् सकृत् ।
आकाशादीनि पञ्चाथ नमोन्तं पूर्ववद् वदेत् ॥ ७९ ॥
सदाशिवाद्या ब्रह्मान्तास्ते चाकाशादिपञ्चगु ।
अधिपाः पूर्ववद् वाच्या नमोन्तं सचतुर्थिकम् ॥ ८० ॥
एवं तत्त्वानि विन्यस्य नाडीनां दशकं न्यसेत् ।
तारहृत्पूर्वकं तद्वन्नमोन्तं सचतुर्थिकम् ॥ ८१ ॥
इडां पिङ्गां सुषुम्नां च गान्धारीं हस्तिजिह्विकाम् ।
सुयशालम्बुषे पूषां कुहूमप्यथ शङ्खिनीम् ॥ ८२ ॥

दश नाडीनामानि ।

तद्वत् प्राणमपानं च व्यानोदानसमानकान् ।
नागं कूर्मं च कृकरं देवदत्तं धनञ्जयम् ॥ ८३ ॥
दश प्राणानिमांश्चापि न्यसेत् प्राग्वन्नमोन्तकम् ।
इति मायां स्वाधिकारपूर्वकत्वेन संस्मरन् ॥ ८४ ॥
कालं नियामकं चैव बन्धकत्वेन चिन्तयन् ।
अङ्गुष्ठमात्रप्रभृतिमन्त्रैः प्रेरकतां तथा ॥ ८५ ॥
व्यापकत्वेन पुरुषं भगवन्तं तु विन्यसेत् ।
निरोधयेन्निष्ठुरया त्रिखण्डाख्यानमप्यथ ॥ ८६ ॥

मायासदेशरुद्रान्तं ध्यात्वा रक्षां तथास्त्रतः ।
ततः कुण्डान्तिकं गत्वा शक्तिमाधारसंज्ञिताम् ॥ ८७ ॥

प्राग्वत् कालादितत्त्वानि तारहृद्बीजपूर्वकम् ।
नमोन्तमग्नौ विन्यस्य तथाज्याहुतिभिः पुनः ॥ ८८ ॥

हुत्वा जपित्वा तत्सङ्ख्यं शिवाज्ञां श्रावयेत् ततः ।

ओं हां कालाधिप स्वतत्त्वेन सह शिवाज्ञया प्रासादस्थितिपर्यन्तमत्र स्थातव्यम् ।

विद्याद्याधारशक्त्यन्तं पृथगित्थं निरोधयेत् ॥ ८९ ॥

ततो गर्भगृहादूर्ध्वं शुकनासस्य चोपरि ।
खट्वायां क्लप्तशय्यायां हेमाद्येकतमं घटम् ॥ ९० ॥

विन्यस्याज्यमधुभ्यां तं पूर्णं रत्नादिभिर्युतम् ।
सूक्ष्मवासोयुगच्छन्नमिष्ट्वा गन्धादिभिः क्रमात् ॥ ९१ ॥

तं हेमपुरुषं तस्मिन् विन्यस्याराधयेत् पुनः ।
प्रायश्चित्तमघोरेण हुत्वाथाचार्यदक्षिणाम् ॥ ९२ ॥

दद्यान्मूर्तिपतिभ्यश्च ब्राह्मणेभ्यश्च शक्तितः ।
भगवन्तं च वह्निं च यथापूर्वं विसर्जयेत् ॥ ९३ ॥

हृत्प्रतिष्ठाधिकारः ।

---

एवं स्तूपीकुम्भयोश्च प्रतिष्ठा तन्त्रेषूक्ता या विमानप्रतिष्ठा ।
प्रोक्ता ह्यस्मिन् हृत्प्रतिष्ठा च याभिः प्रासादः स्यात् सुप्रतिष्ठो महेशः ॥ ९४ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे उपरिभागे क्रियापादे

स्तूप्यादिलक्षणपटलश्चतुस्त्रिंशः ।

---

## अथ पञ्चत्रिंशः पटलः ।

अथानुकर्म विज्ञेयं धाम्नां वा कालपाकतः ।
पतितं स्खलितं जीर्णं प्रासादाङ्गं यदा भवेत् ॥ १ ॥

तत्तद्द्रव्यैः शिलाद्यैस्तु समाधेयं हि पूर्ववत् ।
संस्थानं प्राग्वदेव स्यादलङ्कारादिकं च यत् ॥ २ ॥

व्यासतुङ्गत्वहानिर्वा वृद्धिश्चापि न शस्यते ।
जातिच्छन्दविकल्पानां स्यान्मानं प्राग्वदेव हि ॥ ३ ॥

स्वयम्भूदैविकार्षाणामल्पं प्राक्तनधाम चेत् ।
जीर्णे वा पतितं तस्य न वृद्धिर्दोषमावहेत् ॥ ४ ॥

द्वारप्राकारपीठाद्यमनुक्तस्थानगं यदि ।
परिवारं च तत्प्रोक्तस्थाने कुर्यात् सलक्षणम् ॥ ५ ॥

दैविकं प्राक्तनं धाम मानहीनमलक्षणम् ।
सलक्षणं प्रकुर्वीत पूर्वसंस्थानसुन्दरम् ॥ ६ ॥

स्वायम्भुवार्षदैवं वा निष्कलं सकलं तु वा ।
स्थानान्न चालयेल्लिङ्गं पूर्वस्थानेऽर्हति स्थितिम् ॥ ७ ॥

नद्यब्धिजलवाताद्यैर्हते विचालितेऽथवा ।
तस्मात् सहस्रदण्डान्तक्षेमे संस्थापयेत् पुनः ॥ ८ ॥

तदेव तदभावे तु पूर्वलिङ्गसमं नवम् ।
पूर्वतुल्यविमाने तु प्रायश्चित्तादनन्तरम् ॥ ९ ॥

प्रतिष्ठितं भवेद्वृद्ध्यै राजराष्ट्रप्रजाहितम् ।
तत्र मूलालयाद् रक्षोयमाग्निमरुतां दिशः ॥ १० ॥

त्यक्त्वा यथेष्टमन्यत्र विधिना स्थापयेद् दिशि ।
यमे भर्तुर्नृपस्यापन्मरुद्रक्षोऽग्निषु क्षयः ॥ ११ ॥

तस्मात् तत् परिहृत्यैव चलितस्थापनं हितम् ।
छन्दानां प्राक्तनाद् धिष्ण्यात् प्राग्वोदक्परितोऽधिकम् ॥ १२ ॥

मानोन्मानप्रमाणोच्चतलाधिक्यं च शस्यते ।
पूर्वस्माद्धीनमानाद्यं स्थानं कर्तृनृपाहितम् ॥ १३ ॥

द्वारभित्त्यङ्गणादीनां हापनं च विनाशकृत् ।
विनष्टवस्तुनो गर्भं त्यक्त्वा गर्भं न्यसेत् पुनः ॥ १४ ॥

'म हीनमानमल' क. पाठः.

अधिष्ठानादिकं प्राग्वत् कुर्यात् स्तम्भादिकान्यपि ।
यदि तत् प्राक्तनद्रव्यैर्निष्पाद्यं चेद् गृहादिकम् ॥ १५ ॥
प्रारभ्यादौ नवद्रव्यैः पुराणैर्योजयत् ततः ।
योगैर्नवैर्नवेष्विष्टः पुराणानां पुरातनैः ॥ १६ ॥
मिश्रयोगे विनाशः स्यादतो मिश्रं न कारयेत् ।
पुरग्रामालयादीनि पूर्ववस्त्वनुकूलतः ॥ १७ ॥
कुर्यात् तद्बाधकं वस्तु कुलनाशकरं त्यजेत् ।
अन्तर्हाराद् बहिर्मूलादल्पलिङ्गालयादिकम् ॥ १८ ॥
कुर्वीत वान्तः सालस्य यथा मूलं न पीडयेत् ।
मूलालयसमं क्षुद्रमधिकं च न शस्यते ॥ १९ ॥
शस्तमर्धं च पादोनं शरांशे त्र्यंशमेव वा ।
क्रमादिन्द्रादिवाय्वन्तं मूलात् तु शिवमन्दिरम् ॥ २० ॥
कृतं विनाशयेत् स्थानं कर्तारं राजसन्ततिम् ।
राष्ट्रं धनं च सस्यं च तस्मात् तत् परिवर्जयेत् ॥ २१ ॥
एवं ग्रामपुरादीनां स्वगृहस्य च तत्समम् ।
तस्मादुदीच्यां मुख्यादिपर्जन्यान्तं च पूर्वतः ॥ २२ ॥
मानुषं शाङ्करं लिङ्गं स्थापयेच्छुभदं हि तत् ।
शिवः प्राक्पश्चिमास्यस्तु मनुष्याणां हितावहः ॥ २३ ॥
अन्यत्राघोरनृत्तेशर्दक्षिणेशाश्च वामतः ।
सर्वत्राभिमुखाः सौम्या देवताः शुभदा नृणाम् ॥ २४ ॥
उग्राः पराङ्मुखाः शस्ताः पुरग्रामगृहादिषु ।
न मनुष्यालयं कुर्याद् देवागारसाधिकोन्नतम् ॥ २५ ॥
तत्समीपे विशेषेण तलाधिक्यं च नेष्यते ।
दैवाद् धाम्नः शुभं न्यूनं समं वा मानुषं गृहम् ॥ २६ ॥

अनुकर्मविधानम् ।

---

अधिष्ठानादि सौन्दर्यमास्तूप्यग्राच्छुभावहम् ।
प्रासादाङ्गेषु वैरूप्यं हीनाधिक्यं च निन्दितम् ॥ २७ ॥

छिद्रं व्रणं दरी निम्नमन्यच्चाप्यशुभावहम् ।
देशदेशाधिपस्थानकर्तृभर्तृविनाशनम् ॥ २८ ॥

अपिच

अधिष्ठाने तु वैरूप्यं तत्सन्तानविनाशनम् ।
प्रत्यां तु स्त्रीविनाशाय स्तम्भे नृपपराजयः ॥ २९ ॥
प्रस्तरे द्विजनाशः स्यात् कण्ठे तु वणिजां क्षयः ।
नासिकासु स्वपक्षघ्नं शिखरे राजविभ्रमः ॥ ३० ॥
स्तूपिकाकुम्भवैरूप्यं तद्राष्ट्रजननाशनम् ।
अस्थानद्वारसोपानं सर्वेषामशुभावहम् ॥ ३१ ॥
अस्थानभित्तिकस्तम्भमनुक्ताङ्गविरूपता ।
अचोदितालङ्करणमन्यच्चानिष्टदुःखदम् ॥ ३२ ॥
पूजोपचारविच्छेदो बलिच्छेदोऽप्यवृष्टिकृत् ।
सर्वाङ्गसुन्दरं तस्माद् धाम कुर्यात् सलक्षणम् ॥ ३३ ॥
नाशं दुःखं मृतिं पुष्टिं कुलवृद्धिं कुलक्षयम् ।
धनं सुखं च नैर्धन्यं कुर्यात् पूर्वादिदिग्दरी ॥ ३४ ॥
मृतिं रोगं चाग्निभयं बन्धुनाशं धनं सुतम् ।
मित्रागमं च पुष्टिं च विनाशं चावहेत् क्रमात् ॥ ३५ ॥
ब्रह्मस्थानाद्यमीशान्तं वल्मीकं भवनादिषु ।
पातोऽशनेश्च क्षौद्रस्य न्यासः सर्वत्र गर्हितः ॥ ३६ ॥
धनागमं धनापायं मित्रप्राप्तिं सुखं श्रियम् ।
वर्षं कन्यागमं पुत्रं कलहं रक्तकन्यका ॥ ३७ ॥
ब्रह्मस्थानात् तु शक्राद्यमीशानान्तं यथाक्रमात् ।
उक्तादवान्तरेऽन्यत्र द्वारे च कलहादिकम् ॥ ३८ ॥
अनर्थमावहेद् यस्मात् तच्छान्त्यै जुहुयाद् घृतम् ।
उलूका गृध्रकाः श्येनास्तथा वनकपोतकाः ॥ ३९ ॥

---

१. 'धृतम् रक्तजीवदर्शनस्य उ' क. ख. पाठः.

पिङ्गलाश्च चकोराश्च गृहे स्युश्चेदनर्थदाः ।
देवमानुषगेहेषु मठगोष्ठसभादिषु ॥ ४० ॥

वल्मीकाद्यद्भुतानां तु दोषशान्तिस्तु कथ्यते ।
खननादिक्रियाभिस्तदपनीयोपलिप्य तु ॥ ४१ ॥

गोभिरध्युषिते तस्मिन् हुत्वा चाद्भुतशान्तिकम् ।
रक्षोघ्नं वास्तुहोमं च दत्त्वा वास्तुबलिं ततः ॥ ४२ ॥

ब्राह्मणान् भोजयित्वा तु पुण्याहं वाचयेत् पुनः ।
यथावदावसेत् तस्मिन् सर्वसंपत्करं भवेत् ॥ ४३ ॥

अद्भुतशमनम् ।

---

प्रासादभवनादीनां रक्षालङ्कारसिद्धये ।
वप्राणि क्रमशः कुर्यात् पञ्चत्रिद्व्येकसंख्यया ॥ ४४ ॥

तत्रान्तर्मण्डलं स्वाद्यमन्तर्हाराथ तद्बहिः ।
मध्यहारा च मर्यादा महामर्यादकं ततः ॥ ४५ ॥

अत्र मयः—

"क्षुद्राणामल्पहर्म्याणां खन्यासार्धप्रमाणतः ।
अन्तर्मण्डलकं कुर्यात् सत्रिहस्तं तु तत्समम् ॥

द्वितीयं तु तृतीयं च तस्मात् पञ्चकराधिकम् ।

तस्मात् सप्तहस्तं तु तत्समं स्याच्चतुर्थकम् ॥
नवहस्तसमायुक्तं तत्समं पञ्चमं भवेत् ॥"

इति ।

मध्यमानां तु मूलार्धमन्तर्मण्डलकं भवेत् ।
ततः शरर्षिबृहतीरुद्रहस्तं यथाक्रमात् ॥ ४६ ॥

वप्रान्तरालविस्तारः प्रोक्तः प्राकारपञ्चके ।
अथोत्तमानां मूलार्धं प्रथमं त्वथ चर्विभिः ॥ ४७ ॥

नन्दरुद्रातिजगतीहस्तैर्हारा भवन्ति हि ।
अन्तर्मण्डलभित्तेः स्याद् विष्कम्भः सार्धहस्तवान् ॥ ४८ ॥

तस्माद् द्वित्र्यङ्गुलाधिक्यात् क्रमात् साला भवन्ति हि।
तद्विष्कम्भमानात् तु त्रिगुणं वा चतुर्गुणम् ॥ ४९ ॥
प्राकारतुङ्गता प्रोक्ता स्वोच्चाष्टांशाच्छिरोघनम्।

अत्र मयः—

"उत्तरान्तोच्छ्रिता वा स्यात् कुम्भमण्ड्यन्तकोदया।
मसूरकादिवर्गाढ्या खण्डहर्म्यादिमण्डिता॥
बुद्बुदार्धेन्दुशीर्षा वा ऋजुर्वा भित्तिरिष्यते।"

इति।

क्षुद्राल्पभित्तिविष्कम्भं हस्तादारभ्य पूर्ववत् ॥ ५० ॥
क्रमाद् द्वित्र्यङ्गुलाधिक्याद् वर्धयेत् सार्धहस्ततः।
सोत्तरा वाजनच्छत्रशीर्षवत्यश्च भित्तयः॥ ५१ ॥
उपरिष्टात् तु वप्राणां सर्वेषां तु शिवालये।
मनोरमतमां कुर्यात् परितो वृषभावलिम् ॥ ५२ ॥
मूलं जन्मस्थलं हस्तमुच्छ्रितं मूलसालतः।
द्वितीयं हीनषण्मात्रं प्रतिसालं च तत्क्रमात् ॥ ५३ ॥
हस्तार्धं पादजन्मोच्चं तस्माद् द्वित्र्यङ्गुलक्षयात्।
महामर्यादभित्त्यन्तमेवं ह्राप्यमथापि वा ॥ ५४ ॥
क्षुद्रे साष्टादशाङ्गुल्यं मध्यमे मूलपादुकम्।
क्षपयेत् तच्चतुर्मात्रैर्यावत् पश्चान्तसालकम् ॥ ५५ ॥

प्राकारलक्षणम्।

---

वृषस्थानं तु पुरतः स्यादाग्नेय्यां महानसम्।
मातॄणां तु यमोपान्ते गजवक्त्रस्य नैर्ऋते ॥ ५६ ॥
वारुणे वासुदेवस्य स्कन्दस्य तदनन्तरम्।
वायव्यामथवैशान्यामुमादुर्गालयः स्मृतः ॥ ५७ ॥
उत्तरे धनदस्य स्यात् कोष्ठागारं त्रिशूलिनि।
ईशेन्द्रमध्ये धातुः स्यान्नृत्तस्यैशेऽथवा पुरः ॥ ५८ ॥

---

१. 'तो', २. 'यावत्। म' ख. पाठः. ३. 'रां' क. ख. पाठः.

वह्निगोपुरयोर्मध्ये धान्यानामिति केचन ।
मध्येन वह्निमातॄणां स्नपनाम्बुगृहं स्मृतम् ॥ ५९ ॥
मठश्च याम्ये बाह्ये स्यात् पुष्पस्य यमविघ्नयोः ।
रक्षोम्बुमध्ये शस्त्राणां गोशाला वरुणे बहिः ॥ ६० ॥
वारुण्यां शयनस्यान्तर्ज्येष्ठाया वायुदक्षिणे ।
विद्यापीठं भवेन्मुख्ये पर्जन्ये क्षेत्रपस्य तु ॥ ६१ ॥
ऐशेऽन्तश्चण्डनाथस्याप्यादित्यानां विधेर्बहिः ।
लोकेशानां स्वदिक्ष्वेव चेन्द्राग्न्योर्मध्यतोऽश्विनोः ॥ ६२ ॥
बहिर्द्वितीय[1]हारायां विश्वेषां यमरक्षसोः ।
शास्तुश्च रक्षोदिग्भागे भद्रकाल्यास्तथा बहिः ॥ ६३ ॥
रक्षोवरुणयोर्मध्ये शेषनागालयः स्मृतः ।
वसूनामम्बुमरुतोर्मुनीनां वायुसोमयोः ॥ ६४ ॥
सोमेशमध्ये रुद्राणां क्रमेणैवं प्रकल्पयेत् ।
परिवारविमानानां मानं गर्भार्धमानतः ॥ ६५ ॥
त्रिभागाद् वा चतुर्थांशात् क्षुद्रेषु परिकल्पयेत् ।
एकमल्पे तु वर्म स्यात् परिवाराष्टकं तथा ॥ ६६ ॥
वृषो गणपतिर्ब्रह्मा मातरोऽथ गुहो हरिः ।
दुर्गा चण्डेश्वरश्चाष्टौ परिवाराः प्रकीर्तिताः ॥ ६७ ॥
अथापि दश लोकेशाश्चण्डोऽन्तर्मातरस्तथा ।
क्षुद्रे वा मध्यमे धाम्नि द्वादशैते भवन्ति हि ॥ ६८ ॥
एते द्वादश विघ्नश्च गुहो दुर्गा हरिस्तथा ।
स्वदिक्षु परिवाराः स्युर्मध्यमे धाम्नि षोडश ॥ ६९ ॥
उत्तमेषु विमानेषु परिवारानशेषतः ।
स्थापयेद् वास्तुदेवांश्च क्रमादीशानपूर्वकान् ॥ ७० ॥

द्वात्रिंशन्मध्यमहारायां स्वपदेष्विति यावत् ।

---

१. 'यं' ख. पाठः.

"परिवारप्रतिमोदयः पूजांशोदयाद् द्विगुणः श्रेष्ठस्तदध्यर्धं मध्यमस्तत्समं कनिष्ठः" इति पराशरः ।

स्थिते देवे स्थितास्ते स्युः परिवारास्तथासने ।
निषण्णाः शयनेऽपि स्युरिति प्राह पितामहः ॥ ७१ ॥

अत्र मयः —

"प्राक्प्रत्यङ्मुख उक्षा देवाभिमुखो न वाभिमुखः ।
शेषा ये परिवारा देवाभिमुखाः सदैव स्युः ॥"

इति ।

यद्यन्मुखो भवेद् देवस्तदग्रे वाहनध्वजम् ।
इन्द्रं चारभ्य लोकेशान् यजेदेव प्रदक्षिणम् ॥ ७२ ॥

निर्माल्यधारकं चैशे मातृरपि च दक्षिणे ।
सर्वत्र कल्पयेद् देवं प्रनालमपि चोत्तरे ॥ ७३ ॥

गोपुराद् बाह्यतः कुर्याद् बलिपीठं सलक्षणम् ।
अन्तरालं त्रिपादं वा प्रासादार्धमथापि वा ॥ ७४ ॥

गर्भार्धविस्तृतं पीठं त्रिपादोनं च सम्मितम् ।
त्रिद्व्येकहस्तमुच्चं तदुत्तमादिषु कल्पयेत् ॥ ७५ ॥

तदुच्चषोडशांशेन जन्माथ जगती त्रिभिः ।
वेदांशैः कुमुदं भागः पट्टिकांशैस्त्रिभिर्गलः ॥ ७६ ॥

कम्पस्त्वंशेन तु द्वाभ्यां वाजनं चोर्ध्वपट्टिका ।
भागेनेत्यथ तद्व्यासे दशांशे द्व्यंशहानितः ॥ ७७ ॥

ऊर्ध्वाब्जं विस्तृतं वाष्टभागेष्वेकोनमेव वा ।
द्व्यंशो वाब्जोदयः प्रोक्तः कर्णिका तत्त्रिभागतः ॥ ७८ ॥

सभद्रं वा विभद्रं वा सोपपीठमथापि वा ।
अलङ्कारैर्विमानोक्तैर्युक्तं वा बलिविष्टरम् ॥ ७९ ॥

हारायां मध्यमे वापि मर्यादायामथापि वा ।
बलिपीठाद् बहिः प्राच्यां ध्वजस्तम्भं तु विन्यसेत् ॥ ८० ॥

ध्वजाद् बहिर्वृषगृहं चतुर्द्वारं प्रकल्पयेत् ।
द्वारकिन्नसमः श्रेष्ठो मध्यो वेदांशहीनतः ॥ ८१ ॥

अर्धहीनः कनिष्ठः स्याद् वृषभो लक्षणान्वितः ।
द्वाराद्ध्यर्धमुच्चो वा सपादद्विगुणोच्छ्रितः ॥ ८२ ॥
मनोरमतराकारस्त्वासीनो वृषभो भवेत् ।
गोपुराणां तथा लक्ष्म यथावदथ कथ्यते ॥ ८३ ॥
प्रतिवप्रं तु कर्तव्यं द्वारे द्वारे तु गोपुरम् ।

अत्र मयः—

"क्षुद्राल्पमध्यमुख्यानां धिष्ण्यानां स्वप्रमाणतः ।
मूलप्रासादविस्तारे सप्ताष्टनवभागिके ॥
दशैकादशभागे च तत्तदेकांशहानितः ।
द्वारशोभादिविस्ताराद् गोपुरं तद् भवेत् क्रमात् ॥
क्षुद्राल्पकानां धाम्नां स्यान्मानमेवं यथोदितम् ।
मध्यानां मूलधाम्नस्तु व्यासे वेदेषुभागिके ॥
षट्सप्ताष्टांशके वा स्याद् भागोनं गोपुरं पृथक् ।
त्रिभागैकांशमर्धं च द्विभागं स्यात् त्रिभागिके ॥
चतुर्भागे त्रिभागं तु पञ्चांशे चतुरंशकम् ।
द्वारशोभादिविस्तारः श्रेष्ठानां गोपुरे[1] स्मृतः[2] ॥
तुङ्गं तु गोपुराणां स्यात् सप्तांशे रुद्रभागिकम् ।
चतुरंशे षडंशोच्चं पञ्चांशे सप्तभागिकम् ॥
सप्तांशैस्तु चतुर्भागे नवभागैस्तु पञ्चके ।
द्विगुणं वा यथासंख्यं द्वारायतनतुङ्गता ॥
गोपुरस्य तु विस्तारं त्रिभागादेकभागिकम् ।
चतुर्भागैकभागं वा पञ्चभागे द्विभागिकम् ॥
निर्गमो गोपुराणां स्याद् वप्रकुड्यस्य बाह्यतः ।
मूलात् सार्धं सत्रिपादं सार्धहस्तद्वयं तु वा ॥
निर्दिष्टो द्वारविस्तारो गोपुराणां समासतः ।"

अत्र पराशरः—"तस्य षण्णवद्वादशमात्रवृद्ध्या पञ्चसप्तनवहस्तान्तं द्वारं पञ्चदशभेदं पृथक् पृथक् क्षुद्रे मध्ये परे स्यात्" इति ॥

---

१. 'रं', २. 'तम्' ग. पाठः.

द्वाराणां तत्र विस्तारादुत्सेधः पञ्चधोच्यते ॥ ८४ ॥
पञ्चांशेभ्यश्च सप्तांशः सप्तांशेभ्यो दशांशिकः ।
द्विगुणोऽर्धाधिकः पादमधिकः पञ्चधोच्छ्रयः ॥ ८५ ॥
क्रमेण पञ्चसालानामेकात्रिंशरसप्तकम् ।
नवाङ्गुलं च संत्यज्य दक्षिणादक्षिणक्रमात् ॥ ८६ ॥
द्वारं वियोजयेत् तत्र मूलवस्तु निरीक्ष्य तु ।
पादाधिष्ठानतुङ्गत्वं वेदेष्वृषिभुजङ्गमैः ॥ ८७ ॥
नन्दपङ्क्तीशसूर्यांशान्मूलादेकांशहानितः ।
साधिष्ठानाङ्घ्रितुङ्गः स्याच्छेषं स्यादुपपीठकम् ॥ ८८ ॥
पादबन्धं मसूरं च यथावत् परिकल्पयेत् ।
पङ्क्तिकाङ्गमधिष्ठानस्तम्भमानं तु मूलवत् ॥ ८९ ॥
वसुनन्ददिगंशोनं गोपुरस्तम्भतुङ्गता ।
निखातपादं होमान्तं जित्वाधिष्ठानकं न्यसेत्(?) ॥ ९० ॥
उत्तरान्तसमानं तदर्धं वा विपुलं भवेत् ।
प्रवेशदक्षिणे गर्भं न्यसेदारूढभित्तिके ॥ ९१ ॥
पादाधिष्ठानयोस्तुङ्गादधिको मिश्रकोदयः ।
द्वारतुङ्गं पुरग्रामराजधान्यादिषूदितम् ॥ ९२ ॥
न्यसेद् गोपुरकुड्याग्रे श्लिष्टं योगं कवाटयोः ।
तत्सीमानं तु वमान्तं कुर्यान्मध्ये सुरालये ॥ ९३ ॥
एकादिपञ्चभूम्यन्तमल्पानां गोपुराणि हि ।
द्विभौमात् षट्तलान्तानि मध्यानां गोपुराण्यपि ॥ ९४ ॥
त्रितलात् सप्तभौमान्तमुत्तमानां तु गोपुरम् ।

तत्र

"सोपपीठमधिष्ठानं पादोर्ध्वं चोत्तरान्तकम् ।
शेषं तत्स्तूपिपर्यन्तं भागमानं विधीयते ॥"

इति मयः ।

स्तूप्यन्तमुत्तरादूर्ध्वं षोढा भक्तं ल गोपुरम् ॥ ९५ ॥

सपादांशेन मञ्चोच्चं भागेन प्रस्तरोदयः ।
भागेन कन्धरोत्सेधः सत्रिपादांशकं शिरः ॥ ९६ ॥
शिष्टेन तु शिखातुङ्गमित्येकतलगोपुरम् ।
ए(कं ? वं) तु द्वितलादीनां तलाधिक्यविभागतः ॥ ९७ ॥
आद्वादशतलादूर्ध्वं विदधीत यथाक्रमम् ।
गोपुरव्यासपञ्चांशे गर्भागारं त्रिभागतः ॥ ९८ ॥
भागाभ्यां भित्तिविष्कम्भं विदध्यादेकभूमिके ।
सप्तांशे गोपुरव्यासे गर्भं तु चतुरंशकैः ॥ ९९ ॥
कुर्याद् भित्तिं त्रिभिः शेषैरुदयेऽथ नवांशके ।
अंशेन कूटविस्तारं त्रिभिरंशैस्तु कोष्ठकम् ॥ १०० ॥
कूटकोष्ठकयोर्मध्ये पञ्चांशैः पञ्जरादिभिः ।
अलङ्कृत्य यथाशोभं द्वितलं गोपुरं भवेत् ॥ १०१ ॥
व्यासे नवांशे त्रितलं दशभागे चतुस्तलम् ।
रुद्रांशे शरभौमं स्यात् सूर्यांशे षट्तले तथा ॥ १०२ ॥
त्रयोदशे सप्ततलं कुर्याद् युक्त्या तु पूर्ववत् ।

अत्र पराशरः —

"एकतलादि सप्ततलान्तं सर्वत्रापि गोपुरेष्वलिन्दहर्म्यकूटशालामुख-पञ्जरनासीहस्तिपृष्ठपक्षशालामसूरस्तम्भवेदिकाजालतोरणैरलङ्करणीयम्" इति ।

मूलद्वारस्य विस्ताराद् वेदशोनं शरांशतः ॥ १०३ ॥
हीनं वोर्ध्वतलानां तु द्वाराणि परिकल्पयेत् ।
गर्भागारे तु सोपानमुपर्युपरि विन्यसेत् ॥ १०४ ॥
चतुष्कर्णे तु सोपानमुपपीठे प्रशस्यते ।
यथायुक्ति यथाशोभं तथा योज्यं विचक्षणैः ॥ १०५ ॥
गोपुराणामलङ्कारं मूलवस्त्वनुरूपतः ।
कुर्यादाकृतिशोभाद्यं विमानभवनादिषु ॥ १०६ ॥
सोपपीठमधिष्ठानं स्तम्भादिपरिमण्डितम् ।
द्वितलादियुतं रम्यं[1] महाद्वारं प्रदक्षिणम् ॥ १०७ ॥

१. 'म्यं' ग० पाठः.

साधिरोहणसोपानं सान्तरप्रस्तरान्वितम् ।
ऊहप्रत्यूहशोभाढ्यं द्विसप्तमु(प ? ख)पट्टिकम् ॥ १०८ ॥
दीर्घप्राकारविन्यासं श्रीमन्दिरमिति स्मृतम् ।
तदेव तु शिरः पार्श्वे त्यक्त्वा पूर्वतलं पुनः ॥ १०९ ॥
मुखे पट्टिकषट्केन युक्तं स्याच्छ्रीनिकेतनम् ।
एकदेवसभाशीर्षं षण्महानासिकान्वितम् ॥ ११० ॥
सुमङ्गलाभिधानं स्यात् विशालमथ कथ्यते ।
प्रागुक्तमेव परितो भागवृद्ध्या सगण्डिमम् ॥ १११ ॥
चूडहर्म्यान्वितं श्रीमद् विशालाख्यं तु गोपुरम् ।
तदेव परितो भक्त्या युक्तं भव्याभिधानकम् ॥ ११२ ॥
तदेव वृत्तशिखरं दीर्घाकारं मनोरमम् ।
वृत्ताग्रकूटं कर्णेषु पौष्टिकं नाम गोपुरम् ॥ ११३ ॥
तदेव हि मुखे वेदभागार्धान्मण्डपान्वितम् ।
खण्डहर्म्यपताकाढ्यं सुमण्डाख्यं तु गोपुरम् ॥ ११४ ॥
कपोतश्शालासंयुक्तं नाम्ना स्यात् पारिकूटकम् ।
एतानि गोपुराण्यष्टौ शुद्धमिश्रक्रियावशात् ॥ ११५ ॥
अथ त्रिभौमादियुतं षष्टिद्वितयनासिकम् ।
साधिष्ठानं च सस्तम्भकूटशालं सतोरणम् ॥ ११६ ॥
शालातः पञ्जरोपेतं गुह्यागुह्याधिरोहणम् ।
देवश्रेष्ठनरेन्द्रार्हं सुभद्रं नाम गोपुरम् ॥ ११७ ॥
द्वितलं तु विभागेन पार्श्वयोर्गर्भवेश्मनः ।
चतुरश्रं चतुर्नासीसाङ्गावयवसुन्दरम् ॥ ११८ ॥
भद्रकल्याणसंज्ञं तद् तदेव शिखरे यदि ।
अष्टाश्रकूटश्शालाढ्यं भद्रसुन्दरसंज्ञितम् ॥ ११९ ॥
मुखे मुखे तदेव स्याद् विनिर्गतसभामुखम् ।
परितो भागवृद्ध्या तु तलैः सप्तभिरन्वितम् ॥ १२० ॥

---

१. 'प' क. पाठः.

श्रीकरं नाम तत् प्रोक्तं गोपुरं सुमनोरमम् ।
इति गोपुरविधिः ।

---

इत्येवमुक्तमनुकर्मविधानमादौ शान्तिर्यथावदुदिताऽत्र तथाद्भुतानाम् ।
प्राकारलक्ष्म कथितं वृषलक्षणं च प्रोक्तश्च गोपुरविधिर्निखिलः समासात् ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे उपरिभागे
क्रियापादेऽनुकर्मादिलक्षणपटलः पञ्चत्रिंशः ।

---

अथ षट्त्रिंशः पटलः ।

अथ लिङ्गं त्रिधा ज्ञेयं निष्कलं सकलं तथा ।
मिश्रं चेति च तल्लिङ्गमचलं च चलं द्विधा ॥ १ ॥

निष्कलं केवलं लिङ्गं सकलं प्रतिमा स्मृता ।
मिश्राख्यं मुखलिङ्गं स्यान्मिश्रलक्षणलक्षितम् ॥ २ ॥

शैलं रात्नं तथा लौहं दारवं मार्त्तिकं पुनः ।
क्षणिकं चेति षोढा स्यात् क्रमाल्लिङ्गं तु निष्कलम् ॥ ३ ॥

ब्राह्मणक्षत्रविट्च्छूद्रशिलाः स्युर्धवलारुणाः ।
पीताः कृष्णाश्च लिङ्गानि कुर्यात् ताभिर्यथाक्रमम् ॥ ४ ॥

सर्वेषामथवा सर्वाः शिलाः स्युरिति केचन ।
मुक्तिं जयं धनं धान्यं दद्युः शुक्लादिकाः शिलाः ॥ ५ ॥

स्फटिकः पद्मरागश्च वज्रं नीलं हिरण्मयम् ।
वैडूर्यं विद्रुमं पुष्यं रत्नलिङ्गं तथाष्टधा ॥ ६ ॥

स्फटिकः सूर्यकान्तश्च चन्द्रकान्त इति त्रिधा ।
स्फटिकस्यैव भेदाः स्युः काममोक्षार्थदाः क्रमात् ॥ ७ ॥

श्रियं कामांस्तथारोग्यमृद्धिं पुत्रान् जयं सुखम् ।
लभते पद्मरागादिलिङ्गानां क्रमशोऽर्चनात् ॥ ८ ॥

रत्नानामिह सर्वेषां दोषाः सामान्यतो नव ।
रेखा बिन्दुः कलङ्कश्च काकाङ्ग्रिक्षतभूल्यः ॥ ९ ॥

तुषारत्रासरन्ध्राणि यत्नाद् रत्नेषु वर्जयेत् ।
सौवर्णं राजतं ताम्रं पैत्तलं कांस्यमायसम् ॥ १० ॥
सैसकं त्रापुषं चेति लौहं लिङ्गं तदष्टधा ।
भुक्तिमुक्तिप्रदं हैमं लिङ्गं रौप्यं तु पुष्टिदम् ॥ ११ ॥
शौल्बं पुत्रप्रदं कांस्यं सौख्यदं त्वथ पैत्तलम् ।
आयुरारोग्यदं विद्यादायसं मरणं स्मृतम् ॥ १२ ॥
सैसकं त्रापुषं चापि विद्वेषोच्चाटमारणे ।
मुख्यलोहानि चत्वारि हेमादीनि शुभानि हि ॥ १३ ॥
पिशाचलोहान्यन्यानि कांस्यादीनि विवर्जयेत् ।
चन्दनं देवदारुश्च शमीपिप्पलशिंशपाः ॥ १४ ॥
खदिरासनमालूरमधूकबकुलास्तथा ।
पद्मकः कर्णिकारश्च विप्रादीनां त्रयस्त्रयः ॥ १५ ॥
क्रमाद् दारवलिङ्गानां विज्ञेयास्तरवः शुभाः ।
तीर्थक्षेत्राचलारामपुण्यदेशोद्भवां मृदम् ॥ १६ ॥
शुक्लां रक्तां तथा पीतां कृष्णां वादाय चूर्णयेत् ।
यवगोधूममाषाणां चूर्णानां गुग्गुलोरपि ॥ १७ ॥
लाक्षाश्रीवेष्टकश्यामासर्जानां तु समांशकैः ।
कुन्दुरुष्कस्य चांशेन मृच्चूर्णं सर्वतः समम् ॥ १८ ॥
कपिलापञ्चगव्येन सतैलेन तु मर्दयेत् ।
तां मृदं मृदितां पक्षं मासमात्रोषितं पुन. ॥ १९ ॥
आदाय लिङ्गं कुर्वीत सपीठं स्वेष्टमानतः ।
मासं तु शोषयेद् घर्मे लिङ्गमामं तु मार्त्तिकम् ॥ २० ॥
अथवा केवलां मृत्स्नां कर्मयोग्यां विचूर्णिताम् ।
मर्दितां पञ्चगव्याद्भिर्मासमात्रं तथोषिताम् ॥ २१ ॥
गृहीत्वा कारयेल्लिङ्गं सपीठं लक्षणान्वितम् ।
विपचेत् कुशलैरग्नौ पक्वं लिङ्गं तु तद् भवेत् ॥ २२ ॥

---

१. 'मान् स' क. पाठः.

सैकतं गोमयं पैष्टमाम्लं गौलं तथा फलम् ।
नावनीतं च लिङ्गानि सप्तैव क्षणिकानि तु ॥ २३ ॥
मोक्षारोग्यधनान्नाद्यपुष्टिश्रीवश्यदानि तु ।
भवन्ति क्षणलिङ्गानि यजतां प्रतिवासरम् ॥ २४ ॥
नैतेषां पिण्डिका कार्या कुर्याल्लिङ्गं तदासने ।
नैषां त्रिखण्डं मानं वा न शिरोवर्तनादिकम् ॥ २५ ॥
नैषां कालमुहूर्ताद्यं नाधिवासादिकाः क्रियाः ।
निर्माय सद्यस्तल्लिङ्गे शिवमावाह्य पूजयेत् ॥ २६ ॥
विसृज्य निरपेक्षं तल्लिङ्गमप्सु विनिक्षिपेत् ।

क्षणिकलिङ्गविधिः ।

---

स्वयोनिः पिण्डिकैव स्याच्छैलादीनामकृत्रिणा ॥ २७ ॥
अभावे त्वैष्टकी शैले रत्नजानां हिरण्मयी ।
राजती ताम्रजा वा स्याच्छ्रेष्ठमध्याधमक्रमात् ॥ २८ ॥
स्वलोहैरेव लोहानामिष्टकाभिश्च दारवे ।

लिङ्गपीठोपादानाधिकारः ।

---

उत्तरायणसंस्थेऽर्के शुक्लपक्षे गुणान्विते ॥ २९ ॥
तिथौ वारे च नक्षत्रे शिलादेर्ग्रहणं स्मृतम् ।
भोजयित्वा द्विजानग्रे वाचयित्वाशिषस्ततः ॥ ३० ॥
साङ्गं सम्पूज्य देवेशमस्त्रयागं विधाय च ।
व्रजेत् प्राचीमुदीचीं वा निमित्तान्युपलक्षयन् ॥ ३१ ॥
ज्वलदग्निप्रदीपेभवृषा वेश्याश्च कन्यकाः ।
पुष्पान्नपूर्णकुम्भाज्यशङ्खक्षीरदधीनि च ॥ ३२ ॥
व्रीहयः शालयो मांसं मधुच्छत्रं च चामरम् ।
मङ्गल्ययोषितो राजा ध्वजपूर्णधनूंषि च ॥ ३३ ॥
क्षीरिणी गौस्तुरङ्गश्च दृश्येताभिमुखं यदा ।
यातुरिष्टार्थसिद्ध्यै स्यात् सुतरां तत् प्रदक्षिणम् ॥ ३४ ॥

गौलिकावायसस्तं प्रयाणे वामतः शुभम् ।
प्रवेशे दक्षिणे शस्तं क्षुतं पादावशोभनम् ॥ ३५ ॥

अन्यत्र पृष्ठे वामे च शस्तं नृणां च कूजितम् ।
स्रोतांसि भरटादीनां वामे शस्तं तु दक्षिणे ॥ ३६ ॥

गानं च दिशि शान्तायां पिङ्गलानां द्वयं हितम् ।
सृगालवायसव्याघ्रचकोरबकपोतकाः ॥ ३७ ॥

वामाद् दक्षिणगाः शस्ताः फणी सर्वत्र निन्दितः ।
शशकौशिकगृध्राश्च श्येनाश्च मृगडुण्डुभाः ॥ ३८ ॥

दक्षिणाद् वामगाः शस्ताः शुभा वाचः शुभप्रदाः ।
बालेयगोध्वनिर्वामे गतिर्दक्षिणतः शुभा ॥ ३९ ॥

अशनिर्दुर्दिनं वर्षं प्रतिकूलास्तथा गिरः ।
प्रतिशुक्रबुधौ वात्या कलहश्चेति निन्दिताः ॥ ४० ॥

ताडनं शिरसोऽङ्गानां दक्षिणाङ्घ्रेर्विशेषतः ।
वर्णवाहनवेषाणां मन्त्रस्य च दिशामपि ॥ ४१ ॥

अप्रसादोऽश्व दिग्दाहपरिवेषाः शिवारुतम् ।
प्रतिसूर्योपरागोल्काभूकम्पेन्द्रधनूंषि च ॥ ४२ ॥

वृक्षध्वजायुधच्छत्रयानभङ्गा विनिन्दिताः ।
चक्रिक्षपणनग्नाश्च मुण्डितामङ्गलाङ्गना ॥ ४३ ॥

विप्रास्तपस्विनो व्रात्या यतयो वामनादयः ।
विकला जालिकाः सूनाः पाषण्डा दण्डपाणयः ॥ ४४ ॥

कापालिकाः काष्ठधरा मुक्तकेशाश्च दुःखिनः ।
आर्द्रवस्त्राश्च निन्द्याः स्युर्दृष्टाः प्रतिमुखागताः ॥ ४५ ॥

अशुभेषु निमित्तेषु मासं नीत्वा शुभे व्रजेत् ।
शिलाकरं यदुद्दिष्टं गिरिक्षेत्रवनादिकम् ॥ ४६ ॥

हिमाद्रिविन्ध्यश्रीशैलाः पारियात्रश्च शुक्तिमान् ।
महेन्द्रसह्यमलयाः कलशो वेदपर्वतः ॥ ४७ ॥

ऋक्षः कुमारशैलश्च मुख्याः प्रोक्ताः शिलाकराः ।
नद्यो गङ्गादिकाः क्षेत्राण्यमरेशादिकान्यपि ॥ ४८ ॥

आकरा मध्यमास्त्वन्ये शिलादारुपरिग्रहे ।
कनिष्ठाः स्युर्यथालाभं शिलाग्रहणमारभेत् ॥ ४९ ॥

वारुण्यैन्द्री तथाग्नेयी वायवी भूश्चतुर्विधा ।
तद्भवाश्च शिला ज्ञेयास्तत्तन्नामोपलक्षिताः ॥ ५० ॥

या कोमलतरुव्राता स्वतःपुष्पितकानना ।
जलाशयैश्च सर्वत्र युक्ता भूर्वारुणी स्मृता ॥ ५१ ॥

या क्षीरवृक्षबहुला सौम्ये यस्या जलं महत् ।
व्रीहिक्षेत्राणि याम्यां च सा माहेन्द्री क्षितिः स्मृता ॥ ५२ ॥

गृध्रकङ्कवराहर्क्षश्येनगोमायुवायसैः ।
संयुक्ता दूरपानीया भूराग्नेयी विनिन्दिता ॥ ५३ ॥

अक्षस्नुहिकुलिङ्गाक्षपीलुश्लेष्मातकण्टकैः ।
युक्ता या निर्जला भूमिरशुभा वायवी स्मृता ॥ ५४ ॥

अनलानिलभूमिष्ठाः शिला लिङ्गेषु वर्जिताः ।
वारुण्यामपि माहेन्द्र्यां सम्भूताः सर्वसिद्धिदाः ॥ ५५ ॥

चण्डालपुल्कसव्याधपुलिन्दाद्यैर्विदूषिता ।
वल्मीकादिश्मशानाढ्या निन्द्या भूरपि तच्छिका ॥ ५६ ॥

भूपरिग्रहणे पूर्वमुक्तलक्षणभूमयः ।
प्रशस्ताः स्युः शिलायाश्च ग्रहणे निन्दितास्त्यजेत् ॥ ५७ ॥

प्रशस्तां भुवमासाद्य गुरुः शिल्पिभिरन्वितः ।
अन्वेषयेच्छिलां तत्र मन्त्रं चेदमुदीरयेत् ॥ ५८ ॥

ओं त्रिणेत्राय रुद्राय भूतानां पतये नमः ।
शिलां दर्शय देवेश! प्रसन्नो वृषभध्वज! ॥ ५९ ॥

ततः स्नात्वा सशिष्यस्तु गुरुः स्थपतिरप्यथ ।
शुक्लगन्धस्रगालेपौ भूषितौ शिल्पिभिर्वृतौ ॥ ६० ॥

शिलाप्रदेशमासाद्य भूतान्यामन्त्रयेद् गुरुः ।
अपक्रामन्तु भूतानि देवताश्च सगुह्यकाः ॥ ६१ ॥

युष्मभ्यं सुबलिर्भूयाद् भूमिर्दिशतु मे शिलाम् ।
कर्मैतत् साधयिष्यामि क्रियतां वासपर्ययः ॥ ६२ ॥

इत्यामन्त्रयेत् ।

दारुग्रहणे तु सोमो दिशतु पादपानिति विशेषः । ततो गन्धादिभिरभ्यर्च्य पञ्चवर्णौदनैर्दधिक्षीरमधुसर्पिःफलभक्ष्यैर्मांसरुधिरप्रतिनिधिभिर्भूतक्रूरबलिभिर्भूतेभ्यो वनदेवताभ्यश्च बलिं निर्हृत्य कृतमण्डले कलशं संस्थाप्य प्राङ्मुख उदङ्मुखो वा भुवं खात्वा भुवि निगूढामर्करश्मिभिरस्पृष्टां कलशजलैरभिषिच्य पञ्चगव्येन पवमानैः संप्रोक्ष्य पञ्चब्रह्मभिर्निवेश्यान्तामिष्ट्वाहतवस्त्रेण दर्भैरप्याच्छाद्योत्तरेणाग्निमाधाय हृदयेशानाघोरैः समिदाज्यचरूनष्टोत्तरशतं हुत्वा व्याहृतिभिः स्विष्टकृतं च परिषेचनान्तं कुर्यात् ।

अथाष्टौ कलशान् दिक्षु लोकपालाधिदैवतान् ।
विन्यस्येष्ट्वा तदम्भोभिरभिषिच्य शिलां पुनः ॥ ६३ ॥

मध्वाज्यशर्करातिक्तपायसेन दिशास्वथ ।
बलिं प्रक्षिप्य चाच्छाद्य पश्चिमेऽग्नौ जुहोति च ॥ ६४ ॥

शिवैकादशदिक्पालशस्त्रमन्त्रैश्चरुं घृतम् ।
हुत्वा पाशुपतास्त्रेण शतं हुत्वा पुनर्घृतम् ॥ ६५ ॥

छेदनोचितशस्त्राणि संस्थाप्यास्त्रेण शाययेत् ।
तेनैवेष्ट्वात्र दर्भेषु स्वपेद् रात्राविमं जपन् ॥ ६६ ॥

नमः शम्भो! त्रिनेत्राय रुद्राय वरदाय च ।
शिवाय विश्वरूपाय स्वप्नाधिपतये नमः ॥ ६७ ॥

आचक्ष्व देवदेवेश! प्रपन्नोऽस्मि तवान्तिकम् ।
स्वप्ने सर्वाणि कार्याणि हृदयस्थानि यानि वै ॥ ६८ ॥

शूलपाणये हिलि हिलि स्वाहा स्वप्नमाणवकाख्योऽयं मन्त्रः ।

ज्वलन्तीं वा शिलां पश्येत् स्वप्ने स्वां देवतां तु वा ।
अन्यद् वा शोभनं ग्राह्या स्याच्छिला लिङ्गकर्मणि ॥ ६९ ॥

स्वप्नश्चेदशुभस्त्याज्या सान्या ग्राह्या शिला भवेत् ।
प्रातः स्नात्वाभिपूज्येशमाचार्यः स्थपतिस्तथा ॥ ७० ॥
हेमसूच्यष्ठिलाभ्यां तु च्छिन्द्यात् प्रथममस्त्रतः ।
अधोभागो मुखं तस्याः पृष्ठमूर्ध्वं तु पूर्वतः ॥ ७१ ॥
उत्तरे वा शिरो घण्टाध्वनिश्छेदे स्फुलिङ्गवत् ।
कोणशीर्षा शिला त्याज्या भर्तुर्दुःखकरी यतः ॥ ७२ ॥
इष्टप्रमाणां छित्वा तु चतुरश्रां समां शुभाम् ।
मुखमूलशिरःपृष्ठान्यङ्कयित्वाम्बरावृताम् ॥ ७३ ॥
दर्भैश्चाच्छाद्य तु रथे समारोप्यालयं नयेत् ।
शस्त्रासहा पेलवा च शिला बाला विनिन्दिता ॥ ७४ ॥
हीनस्वरा चातिरूक्षा वृद्धा त्याज्यातिजर्झरा ।
नानावर्णा रोमरेखा चण्डाली सा च वर्जिता ॥ ७५ ॥
घण्टानादा दृढा स्निग्धा युवतिः स्याच्छिलोचिता ।
पुंशिला लिङ्गयोग्या स्याद् वृत्ता वृत्तायता च सा ॥ ७६ ॥
चतुरश्रा च दीर्घाश्रा स्त्रीशिला पिण्डिकोचिता
त्र्यश्रा त्र्यश्रायता चापि षण्डा पादशिलोचिता ॥ ७७ ॥
स्त्रीशिलाकल्पिते लिङ्गे राष्ट्रं राजा च नश्यति ।
पुंलिङ्गपीठे च तथा लिङ्गपीठे च षण्डके ॥ ७८ ॥
स्त्रिया पुंसा च भूपीठे कृते स्याद् राष्ट्रनाशनम् ।
इत्थं पादशिलापीठलिङ्गानां त्रिविधाः शिलाः ॥ ७९ ॥
रथयानादिना नीत्वा कौबेर्यां दिशि मण्डपे ।
शाययेद् दारुयुगले ततो लिङ्गं तु कारयेत् ॥ ८० ॥

लिङ्गानि लोहमणिशैलजदारवाणि मार्त्स्नक्षणानि शकुनानि निमित्तजातम् ।
स्त्रीपुन्नपुंसकशिलाग्रहणानि चास्मिन् सन्दर्शितानि शिवशास्त्रनिरूपितानि ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे उपरिभागे क्रियापादे
लिङ्गविशेषपटलः षट्त्रिंशः ॥

अथ गर्भास्तु वक्ष्यन्ते त्यजेल्लिङ्गं सगर्भकम् ।
गर्भांस्तु लक्षयेल्लिङ्गं सगर्भं चेत् परित्यजेत् ॥ १ ॥

तुल्यांशैः क्षीरपिष्टैस्तु विषकासीसगैरिकैः ।
आलिप्य लिङ्गं निश्शेषमेकरात्रोषितं ततः ॥ २ ॥

प्रक्षाल्य गर्भान् दोषांश्च मण्डलैस्तत्र लक्षयेत् ।
अथवा ब्रह्मविष्ण्वीशवैष्णवीः परिपेष्य[1] तु ॥ ३ ॥

क्षीराज्यतुल्यमधुना विधूतेन विलेपयेत् ।
त्रिरात्रमुषिता क्लिन्ना शिला यत्र तु लक्ष्यते ॥ ४ ॥

तत्र गर्भं वदेत् सर्पं गोधां वा वृश्चिकं तु वा ।
कासीसचोरौ गोक्षीरपिष्टा वालिप्य या शिला ॥ ५ ॥

त्रिरात्रमुषिता रक्ता स्याच्चेत् कूर्मोऽत्र दर्दुरः ।
मांसीकुष्ठहया रात्रिं त्रिफलां वारिदाम्बुभिः ॥ ६ ॥

पिष्ट्वा स्तन्यार्दितं लिम्पेत् त्रिरात्राद् विकृतिर्यदा ।
गर्भे तु कालकूटाख्यं विषं तत्र विनिर्दिशेत् ॥ ७ ॥

तस्य स्पर्शेन मृत्युः स्याद् यतोऽतस्तं न संस्पृशेत् ।
पूर्वोक्तविषकासीसगैरिकक्षीरलेपतः ॥ ८ ॥

मण्डलैर्निर्दिशेद् गर्भानेकद्वित्रिदिनोषिते ।

तद्यथा —

मञ्जिष्ठाभे मण्डले दर्दुरः स्यात् पीते गोधा कापिले मूषिकाश्च ।
कृष्णे सर्पः पाण्डरे चेति केचित् कापोताभे गौलिका वृश्चिको वा ॥ ९ ॥

रक्ते तु कृकलासः स्यात् खद्योतो मधुसन्निभे ॥ १० ॥

मिश्रे पिपीलिकागर्भः शङ्खोऽम्भो धूसरे द्रवत् ।
गौरे तु विमला धूम्रे पतङ्गः सिकतास्तु वा ॥ ११ ॥

नीलपीते भवेत् कूर्मो[2] गर्भदोषान् वदाम्यतः ।
भयं तोये च मण्डूके कर्तुश्च नृपतेरपि ॥ १२ ॥

---

१. 'वेष्ट्य तु', २. 'कच्छपः' ग. पाठः.

राज्यनाशस्तु गोधां चेत् सर्पे कर्तुः कुलक्षयः ।
कुलीरालिपतङ्गेषु रोगदुःखादिसम्भवः ॥ १३ ॥

विमलासु सदा चौर्यं परचक्रभयानि वा ।
पिपीलिकाः प्रवासाय विमला स्थाननाशनम् ॥ १४ ॥

कूर्मैः कुर्यात् तु दारिद्र्यं रत्नगर्भेषु सम्पदः ।
रेखाश्च लक्षयेल्लिङ्गे शोभनाश्चाप्यशोभनाः ॥ १५ ॥

शिलासवर्णरेखास्तु वर्णानां क्रमशो मताः ।
इन्द्रायुधनिभाः शस्ता रेखाः शङ्खाम्बुजोपमाः ॥ १६ ॥

नानावर्णाः कृशाः स्थूला रूक्षा रेखाश्च निन्दिताः ।

अत्र मञ्जर्यां—

"नन्द्यावर्तवसुन्धराधरहयश्रीवत्सकूर्मोपमाः
शङ्खस्वस्तिकहस्तिगोवृषनिभाश्चक्रेन्दुसूर्योपमाः ।
छत्रस्रग्ध्वजलिङ्गतोरणमृगप्रासादपद्मोपमा
वज्राभाः शफरोपमाश्च शुभदा रेखाः कपर्दोपमाः ॥

अग्नेश्च बीजं पवनस्य बीजं भूयः स्वराण्यत्र नपुंसकानि ।
हित्वा प्रशस्ताः शुभदाः समस्ता रेखास्तु लिङ्गेऽक्षरतुल्यरूपाः ॥

काकश्येनवृकोष्ट्रवानरनिभा मार्जारगृध्रोपमाः
सर्पोलूकसृगालकीटसदृशाः कोलाश्च भेकोपमाः ।
रेखास्तिर्यगवस्थिताश्च सकलाश्चान्याश्च दोषावहाः
सन्त्यज्य प्रतिगृह्य शोभनशिलां लिङ्गं तथा कल्पयेत् ॥

आरभ्य हस्तं नवहस्तकान्तं लिङ्गं विधेयं नरदैत्यदेवैः ।
हस्तादिकं पञ्चकरान्तमादौ लिङ्गं मनुष्यस्य तु वर्णभेदात् ॥
दैत्यस्य षट्सप्तकरं तु लिङ्गं गीर्वाणलिङ्गं तु नवाष्टहस्तम् ।"[1]

इति ।

हस्तोपमानादारभ्य पादवृद्धिक्रमेण तु ॥ १७ ॥

---

१. 'च' क. पाठः.

त्रिहस्तान्तं कनिष्ठादिलिङ्गानि स्युर्नवैर्बहिः।
चतुर्हस्तायताल्लिङ्गात् प्राग्वत् पादविवर्धनात् ॥ १८ ॥
षड्ढस्तान्तं मध्यमानि लिङ्गानि नव कल्पयेत्।
सप्तहस्तोच्चमारभ्य पादवृद्ध्या तु पूर्ववत् ॥ १९ ॥
श्रेष्ठानि नवहस्तान्तं लिङ्गानि स्युर्नव क्रमात्।
त्रिचतुर्हस्तयोर्मध्ये प्राग्वल्लिङ्गत्रयं भवेत् ॥ २० ॥
मध्ये षट्सप्तकरयोस्तथा लिङ्गत्रयं स्मृतम्।
एवं प्रसिद्धलिङ्गानां त्रयस्त्रिंशदुदाहृतम् ॥ २१ ॥
प्रासादमानाच्च तथा वेदबाणर्तुभागतः।
लिङ्गायामोऽथवा कार्यः प्रकारोऽन्यश्च कथ्यते ॥ २२ ॥
गर्भागारे तु पञ्चांशे लिङ्गं भागत्रयोच्छ्रितम्।
गर्भे वा नवभागे स्याल्लिङ्गं पञ्चांशमायतम् ॥ २३ ॥
गर्भरामांशतोंऽशेन गर्भार्धोच्चं तु वा स्मृतम्।

लिङ्गस्य दैर्घ्यमिति यावत्।

तत्रैकहस्तलिङ्गस्य चतुर्हस्तं तु विस्तृतम ॥ २४ ॥
विमानं स्यात् तथा पञ्चगुणं षड्गुणमेव वा।
विस्ताराद् द्विगुणोच्चं तु नागरं त्रिगुणं यदि ॥ २५ ॥
भूमिजाख्यं स्मृतं तस्माद् द्विगुणं शिखरं यदा।
नागरं वलभिर्नाम विमानं भवति स्फुटम् ॥ २६ ॥
लिङ्गायामे विकारांशे भूतवेदाग्निविस्तरम्।
जयदं पौष्टिकं सार्वकामिकं नागरे स्मृतम् ॥ २७ ॥
गर्भे त्रिसप्तभागे तु दशांशं द्राविडेऽधमम्।
त्रयोदशांशकं मुख्यं गर्भेऽष्टांशे तु पूर्ववत् ॥ २८ ॥
त्रिसप्तांशे निजायामे षट्पञ्चचतुरंशकम्।
जयदं पौष्टिकं सार्वकामिकं द्राविडे भवेत् ॥ २९ ॥
[illegible] गर्भे षोडशांशं तदुत्तमम्।
त्रयोदशांशमधमं तयोर्मध्येऽष्टभागतः ॥ ३० ॥

नवलिङ्गानि सिध्यन्ति वेसरे तानि कल्पयेत् ।
पञ्चपञ्चांशके दैर्घ्ये वसुसप्तषडंशकैः ॥ ३१ ॥
विस्तारे वेसरे विद्यात् पूर्ववज्जयदादिकम् ।
अथ स्थिराणां लिङ्गानां ब्रह्मविष्ण्वीशदैवतम् ॥ ३२ ॥
मूलं मध्यं तथैवाग्रं चतुरष्टाश्रवर्तुलम् ।
त्रिभागमेवं विज्ञेयं तेषां भेदश्च लिख्यते ॥ ३३ ॥
सर्वतोभद्रकं लिङ्गं वर्धमानं शिवाधिकम् ।
स्वस्तिकं च चतुर्धा स्यात् तल्लक्ष्म पृथगुच्यते ॥ ३४ ॥
विप्राणां सर्वतोभद्रं भूभुजां वर्धमानकम् ।
शिवाधिकं विशामिष्टं शूद्राणां स्वस्तिकं हितम् ॥ ३५ ॥
स्ववर्णविहितं लिङ्गं स्थाप्यं स्यादिष्टसिद्धये ।
अन्यवर्णोदितं लिङ्गमिहामुत्रार्थनाशनम् ॥ ३६ ॥

अत्र मयः—

"आद्यं तत् सर्वतोभद्रं द्वितीयं वर्धमानकम् ।
शिवाधिकं तृतीयं स्याच्चतुर्थं स्वस्तिकं भवेत् ॥
अथ धरणिसुराणां सर्वतोभद्रमिष्टं
सुखदमवनिपानां वृद्धिदं वर्धमानम् ।
धनदमिह विशां वै शम्भुभागाधिकं य-
च्छुभदमिह परेषां स्वस्तिकं शूद्रकाणाम् ॥"

परेषामपीत्युक्तत्वादनुलोमप्रतिलोमादीनामपि स्वस्तिकलिङ्गमेवेष्टमिति यावत् ।

गर्भागारे त्रिभागेंऽशः पीठं पीठे त्रिभागिके ।
भागेन लिङ्गविस्तारः परिणाहस्तु तस्य यः ॥ ३७ ॥
स्याल्लिङ्गोच्चं तु तत्तुल्यं लिङ्गायामं समं त्रिधा ।
विभज्य ब्रह्मविष्ण्वीशभागाः सर्वसमे मताः ॥ ३८ ॥
कांशः पादशिलायां स्याद् विष्ण्वंशः पिण्डिकासमः ।
ऊर्ध्वः शिवांशः पूज्यः स्यात् सर्वलिङ्गेष्वयं विधिः ॥ ३९ ॥

अत्र पिङ्गलामते —

"सममाना भवद् वेदी लिङ्गस्यावारिका यथा।"

इति। तद्यथा —

पूजांश एव निर्दिष्टो लिङ्गशब्देन चात्र हि।
वेदाश्रपिण्डिकायास्तु लिङ्गे सर्वसमे त्विदम्॥ ४०॥
तल्लिङ्गपरिणाहस्थब्रह्मसूत्रचतुष्टये।
विस्तारः सम एव स्याच्छायादोषोऽन्यथा भवेत्॥ ४१॥
अतो लिङ्गसमं पीठं स्याच्छायादोषवर्जितम्।
वेदाश्रपिण्डिकाक्षेत्रापेक्षया वर्तुलादिषु॥ ४२॥
पीठेषु लिङ्गतुल्या स्यात् परिणाहान्तविस्तृतिः।
तथा कृशेषु लिङ्गेषु पिण्डिकाधिकविस्तृतम्॥ ४३॥
अवगम्य शिवांशे तु वर्धयेत् तत्समं यथा।
यावद् वृद्धं शिवांशे तु ब्रह्मांशे हापयेत् तु तत्॥ ४४॥
तद्वत् स्थूलेषु लिङ्गेषु न्यूनतां पीठविस्तृतेः।
विज्ञाय पूजाभागं तु कुर्याद्ध्रस्वं तदंशतः॥ ४५॥
ब्रह्मांशे वर्धयेद् भागं वृद्धिहानी न वैष्णवे।

यथा बृहत्तन्त्रे —

"कृशेषु वर्धयेद् रुद्रं स्थूललिङ्गेषु ह्रासयेत्।
ह्रासयेद् वर्धयेत् कांशं न वृद्धिर्न च्युतिर्हरेः॥"

इति।

छायादोषविचारोऽयं लिङ्गे सर्वसमे स्मृतः॥ ४६॥
वर्धमानादिलिङ्गेषु नैतदित्येव केचन।
तद्वद् व्यक्तेषु लिङ्गेषु व्यक्ताव्यक्ते च रत्नजे॥ ४७॥
स्वयम्भुवि तथा बाणेऽप्यार्षे च नियमो न हि।
वर्धमानादिलिङ्गानां त्रयाणामप्ययं विधिः॥ ४८॥
मयसूत्रे तु कथितच्छायादोषं विना यथा।
लिङ्गायतिप्रमाणानीत्यादिना पीठविस्तृतिः॥ ४९॥

शिवभागसमा कार्या व्याख्यातं सङ्ग्रहे तथा ।
"यावाल्लिङ्गस्य वै दैर्घ्यं तावत् पीठस्य विस्तृतिः ॥"

इति ।

संकृत्यंशे तु लिङ्गोच्चे सप्ताष्टनवभिः क्रमात् ॥ ५० ॥
अंशैर्ब्रह्महरीशानभागाः स्युर्वर्धमानके ।
लिङ्गायामे प्रकृत्यंशे षट्सप्ताष्टांशकल्पिताः ॥ ५१ ॥
क्रमाद् ब्रह्मादिभागाः स्युरेवं वा वर्धमानके ।
पञ्चषट्सप्तभागैर्वा चतुष्पञ्चषडंशकैः ॥ ५२ ॥
वर्धमानं भवेल्लिङ्गं श्रेष्ठमध्याधमं क्रमात् ।
लिङ्गायामे तु पङ्क्त्यंशे रामाग्निश्रुतिसम्मितैः ॥ ५३ ॥
अंशैर्ब्रह्मादिभागाः स्युः क्रमाल्लिङ्गे शिवाधिके ।
लिङ्गोत्सेधे तु नन्दांशे षट्सप्तवसुभागिकैः ॥ ५४ ॥
ब्रह्मविष्ण्वीशभागानां क्रमान्नाहाः प्रकीर्तिताः ।
लिङ्गं त्रैराशिकं नाम भवेत् सर्वसमे तु तत् ॥ ५५ ॥
स्वायामार्धार्धविस्तारं स्वस्तिकं वा शिवाधिकम् ।
वर्धमानं च तल्लिङ्गं नाम्ना सुरगणार्चितम् ॥ ५६ ॥
तत्सार्वदेशिकं ज्ञेयं सर्ववर्णहितावहम् ।
पौष्करे कारणाख्ये च यथोक्तं तत्र कथ्यते ॥ ५७ ॥

तद्यथा —

चतुरंशादि विप्राणां पञ्चांशादि नृपोचितम् ।
षड्भागादि विशां योग्यं सप्तांशाद्यं तु वार्षलम् ॥ ५८ ॥
वर्धमानं चतुर्भेदमेवं वर्णक्रमाद्धितम् ।

अथ शिवाधिकं च ।

आकृत्यंशे तु लिङ्गोच्चे सप्तसप्ताष्टभागिकम् ॥ ५९ ॥
ब्रह्माद्यंशेषु यल्लिङ्गं विप्राभीष्टं शिवाधिकम् ।
त्रयोदशांशे लिङ्गोच्चे वेदवेदशरांशकैः ॥ ६० ॥

षोडशांशे तु लिङ्गोच्चे पञ्चभिः पञ्चभिः क्रमात्।
षड्भिश्च भागैर्ब्रह्माद्यैः क्षत्रयोग्यं शिवाधिकम्॥ ६१॥
कादिभागैर्विशां योग्यं लिङ्गमुक्तं शिवाधिकम्।
लिङ्गतुङ्गे दशांशे तु गुणाग्निश्रुतिभागिकम्॥ ६२॥
ब्रह्माद्यंशेषु शूद्राणामिष्टं लिङ्गं शिवाधिकम्।
पूर्वोक्तसमलिङ्गे तु धारालिङ्गं विकल्पतः॥ ६३॥
चतुरश्रं द्विरष्टाश्रं तन्मूले परिकल्पयेत्।
वैष्णवांशे च शैवांशे धाराद्विद्विगुणीकृते॥ ६४॥
सर्वेषामपि वर्णानां धारालिङ्गं त्रिधा मतम्।
"मूलेऽष्टाश्रं वा कलाश्रं युगाश्रं तस्मादूर्ध्वे द्विगुणाः स्युश्च धाराः"
इति मयः।
सर्वतोभद्रलिङ्गे तु धाराः स्युः पञ्चविंशतिः॥ ६५
सप्तपर्णदलाकाराः समाः सर्वाः समान्तराः।
एकैकस्यां तु धारायां चत्वारिंशत्प्रसंख्यया॥ ६६॥
कुर्यात् समानि लिङ्गानि स्यात् तल्लिङ्गसहस्रकम्।

लिङ्गविकल्पाधिकारः।

---

ब्रह्मादिभागसिद्धौ तु वेदाश्रं मोक्षमार्गतः॥ ६७॥
कृत्वा लिङ्गमशेषेण ब्रह्मभागाद्यथोपरि।
चतुरश्रस्य कोणार्धसूत्रलाञ्छनमध्यतः॥ ६८॥
कोणत्यागात् तदष्टाश्रं कुर्याद् विष्ण्वंशसिद्धये।
अथवा लिङ्गविस्तारं सप्तधा विभजेत् समम्॥ ६९॥
मध्ये त्रिभागं संस्थाप्य द्विद्विभागविवर्जनात्।
वस्वश्रं सिद्ध्यति सममथ वृत्तं निगद्यते॥ ७०॥
चतुरश्रस्य लिङ्गस्य शिरोमध्ये निधाय तु।
सूत्रं दिगन्तमानेन भ्रामयेद् वृत्तसिद्धये॥ ७१॥
लिङ्गानामथ सर्वेषां शिरोवर्तनमिष्यते।
छत्राभं त्रपुषाकारं कुक्कुटाण्डनिभं तथा॥ ७२॥

अर्धेन्दुसदृशं चाथ बुद्बुदं पञ्चमं स्मृतम् ।

अत्र सर्वतोभद्रवर्धमानादिलिङ्गानां यथाप्रमाणावस्थितशिरसामेव वर्तनेन पूजांशायामे न्यूनतया तत्तत्प्रमाणभङ्गाद् दोषः सिद्धः । तस्मादुक्तप्रमाणकिङ्गनेत्रसूत्रादूर्ध्वमेव शिरोवर्तनेन सकले मकुटादिवल्लिङ्गमस्तकं सम्पादनीयम् । अत्र मयः—

"सर्वेषामपि चैताः सामान्यास्तत्र लिङ्गानाम् ।
शिरसो वर्तनभागत्र्यंशैकं चाधिरोप्य निजतुङ्गे ॥
लिङ्गायामे षट्षड्भागयुते तेन सार्धमतः ।
अवरे मध्यमलिङ्गे श्रेष्ठे लिङ्गे तथा शिरोमानम् ॥
इन्द्वब्धिनिगुणभागाः प्रोक्ताः सर्वेष्वपि क्रमशः ।"

इति । तथथा—

पूजांशायामतस्त्वांशादेकद्वित्र्यंशकात् क्रमात् ॥ ७३ ॥

नीचे मध्ये तथा श्रेष्ठे लिङ्गे तन्मानतोऽधिकम् ।
संस्थाप्योपरि नेत्रोर्ध्वे शिरसः सिद्धये पुनः ॥ ७४ ॥

उक्तवर्तनभागानां त्र्यंशैकांशं तथोपरि ।
शिखामारोप्य तन्मध्ये बिन्दुं सम्पाद्य शास्त्रतः ॥ ७५ ॥

तस्मिन् सूत्रं निधायाथ वक्ष्यमाणक्रमेण तु ।
शिरसो वर्तनं कुर्याच्छत्राकारादिसिद्धये ॥ ७६ ॥

लिङ्गे व्यासात् षोडशांशादेकद्वित्रियवांशकान् ।
आरोप्य केऽधः संलम्ब्य लिङ्गस्योभयपार्श्वयोः ॥ ७७ ॥

वर्तयेत् तत्र चत्वारिच्छत्राभाणि भवन्ति हि ।
प्रथमं च द्वितीयं च समलिङ्गे नियोजयेत् ॥ ७८ ॥

शिवाधिके तृतीयं तु चतुर्थं वर्धमानके ।
वर्तनाः सङ्करं नैव कुर्यात् तदशुभं यतः ॥ ७९ ॥

"सङ्करमन्योन्यस्याप्यशुभं स्याद् वर्तनानां च ।"

इति मयः ।

षडंशे लिङ्गविस्तारे सार्धत्र्यंशेन वर्तनात् ।
त्रपुषाभं शिरः सिध्येद् रामांशैः कुक्कुटाण्डकम् ॥ ८० ॥
लिङ्गव्यासतृतीयांशवर्तनादर्धचन्द्रकम् ।
लिङ्गव्यासेऽष्टधा भक्ते सार्धांशत्रयवर्तनात् ॥ ८१ ॥
बुद्बुदाभं तु लिङ्गस्य शिरः सिध्यति शोभनम् ।
सामान्याः सर्वलिङ्गेषु वर्तनास्त्रपुषादिकाः ॥ ८२ ॥
छत्राकारोक्तभेदास्तु लिङ्गेषु नियताः पृथक् ॥ ८२½ ॥

अत्र मञ्जर्यां मये च वर्तनाप्रकार उक्तः—

"लिङ्गानां शिरसीप्सितांशमुभयोः संलङ्घ्य तत्पार्श्वयोः
कृत्वा मत्स्ययुगं तदास्यजघनान्निष्क्रान्तसूत्रद्वये ।
तस्माद् यत्र च संयुतिर्मतिमता बिन्दुत्रयाढ्यं यथा
तत्तद् वर्तयितव्यमत्र बहुधा सोपायमीशोदितम् ॥"

इति ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे उपरिभागे क्रियापादे मानुषशिलालिङ्गलक्षणपटलः सप्तत्रिंशः ।

---

अथाष्टात्रिंशः पटलः ।

अथ लिङ्गं स्थूलमूलं स्थूलमध्यं कृशं तथा ।
आर्षं स्थूलशिरस्कं च चतुर्धेति मयोदितम् ॥ १ ॥
लिङ्गव्यासेऽष्टधा भक्ते मूले मध्याग्रयोरपि ।
भागाधिकं च हीनं च स्थूलमूलादिकं स्मृतम् ॥ २ ॥
वेदाश्रौ ब्रह्मविष्ण्वंशौ लिङ्गेष्वार्षेषु संमतौ ।
शिवांशो वृत्त एव स्याच्छिरसो वा न वर्तनम् ॥ ३ ॥
अथ स्वयम्भुलिङ्गानि जर्जराणि कृशानि च ।
ह्रस्वानि चातिदीर्घाणि फलकासदृशानि च ॥ ४ ॥
अनेकाग्राणि गोकर्णमातुलुङ्गनिभान्यपि ।
षट्पञ्चत्रिदशाग्राणि मानोन्मानादिभिर्विना ॥ ५ ॥

शृङ्गाभाण्यपि वक्राणि नानावर्णाकृतीनि च ।
सपीठान्यप्यपीठानि साक्ष्यान्यगृह्याणि वा ॥ ६ ॥
वनपर्वतनद्यब्धितीर्थक्षेत्रगतान्यपि ।
दर्शनस्पर्शनार्चाभिरेषां सिद्धिरनुत्तमा ॥ ७ ॥
विधात् स्वयम्भुलिङ्गानि येषु नित्यं स्थितः शिवः ।
मूलं न शोधयेत् तेषां शोधनं सर्वनाशकृत् ॥ ८ ॥
अमीमांस्यानि तान्याहुः पूज्यान्येव यथास्थिति ।
नैषां मूर्तिविभागोऽस्ति न च स्यान्मन्त्रसङ्करः ॥ ९ ॥
मानुषेष्वेव लिङ्गेषु मन्त्रमूर्त्यादिसङ्करः ।

अत्र मयः—

"आस्थापनमपि लिङ्गं पूजाभागेन पीठभागसमम् ।
वृत्तं वाथ सधारं पूजाभागं तु पूजयेन्मुक्त्यै ॥"

इति ।

बाणलिङ्गं तु यत् सर्वं यथाजातं निधापयेत् ॥ १० ॥
स्वोच्चार्धं वाथ रामांशं पञ्चांशं वा द्विभागिकम् ।
पीठे सलक्षणे शैले सौधे वा स्थापयेच्छुभे ॥ ११ ॥

अत्र योगशिवीये—

"कोट्यस्तिस्रस्तु लिङ्गाद्रौ तिस्रः श्रीपर्वते स्थिताः ।
तिस्रश्च कालिकागर्ते तिस्रश्चाप्यमरेश्वरे ॥
कन्यातीर्थे महेन्द्राद्रौ नेपाले कन्यकाश्रमे ।
एष्वेकैका स्थिता कोटिरेवं कोट्यस्तु षोडश ॥
सपीठं वाप्यपीठं वा सर्वप्रासादपीठगम् ।
सर्वसङ्करहीनं तत् सर्वेषां भुक्तिमुक्तिदम् ॥
पूजयेद् बाणलिङ्गं तत् प्रतिष्ठाप्य विधानतः ।
अन्यान्यपि च लिङ्गानि नद्यब्धिगिरिजान्यपि ॥
अकृतानि विशिष्टानि पूज्यान्येव हि बाणवत् ।
लिङ्गमूर्ध्नि क्षतं स्याच्चेद्ग्राह्यः कर्तुश्च नाशनम् ॥

छिद्रं भार्यां सुतं शङ्कु वक्त्रे हन्याच्च शिल्पिनम् ।
मध्ये दुःखं च दुर्भिक्षं कोटरे वृष्टिनाशनम् ॥
अत्यायतं चातिह्रस्वं कृशं स्थूलं नृपान्तकृत् ।”

अथ लक्षणोद्धार उच्यते—

पर्याप्तकर्म यल्लिङ्गं शाणाभिर्वालुकादिभिः ।
गोवालरज्जुभिश्चैव घर्षयेन्निर्व्रणं समम् ॥ १२ ॥

मुकुरोदरवच्छ्लक्ष्णं दृश्यच्छायं सुवर्तुलम् ।
ततः शुद्धाम्बुगोक्षीरनालिकेरेक्षुवारिभिः ॥ १३ ॥

प्रक्षाल्य तीर्थतोयैश्च प्रोक्तचिह्नानि लक्षयेत् ।
रजः सर्षपमात्रं चेद् यत्र स्युः स्वर्णबिन्दवः ॥ १४ ॥

लिङ्गे वा पिण्डिकायां वा सर्ववर्णहितावहाः ।
अल्पदोषमपि त्याज्यं लिङ्गं पीठं च तद् भवेत् ॥ १५ ॥

निर्दोषमन्यत् सम्पाद्य लक्षणोद्धारमाचरेत् ।
तिथिनक्षत्रकरणमुहूर्तादौ गुणान्विते ॥ १६ ॥

मूलात् प्राच्यामुदीच्यां वा कृत्वा वेदाश्रमण्डपम् ।
सवितानं चतुर्द्वारं प्रदीपाद्यैरलङ्कृतम् ॥ १७ ॥

तन्मध्ये स्थण्डिलं कृत्वा शालिभिः शुक्लतण्डुलैः ।
सितवस्त्रयुगास्तीर्णे तस्मिँल्लिङ्गं तु शाययेत् ॥ १८ ॥

आचार्यः स्थपतिश्चोभौ सुस्नातौ समलङ्कृतौ ।
प्राक्छिरस्कं तु तल्लिङ्गं नमस्कृत्याभिपूज्य च ॥ १९ ॥

ध्यात्वा तस्मिञ्छिवं सूक्ष्ममनेनाभिप्रसादयेत् ।
अज्ञानाद् वा मया ज्ञानात् त्वयि यद् दुरनुष्ठितम् ॥ २० ॥

तत् सर्वमिह सर्वात्मन्! क्षन्तुमर्हसि शङ्कर! ।
इत्यनुज्ञाप्य देवेशं लिङ्गे लक्षणमुद्धरेत् ॥ २१ ॥

आचार्यः प्रथमं तत्र नेत्रमन्त्रमनुस्मरन् ।
लिङ्गमध्ये ब्रह्मसूत्रं पार्श्वसूत्रे शिवाग्रतः ॥ २२ ॥

ततः सुवर्णशस्त्रेण स्थपतिर्लघुहस्तवान् ।
लघुशस्त्रेण च समं सूत्राण्यालम्बयेत् स्फुटम् ॥ २३ ॥
मध्वाज्यदुग्धैः सहितैर्विलिख्याहतवाससा ।
आच्छाद्य तु सवत्सां गां द्विजं स्वर्णं च कन्यकाम् ॥ २४ ॥
दर्शयेद् धान्यराशिं च गन्धाद्यैश्चाभिपूजयेत् ।

अत्र मयः—

"प्रथमे नागरलिङ्गे षोडशभागीकृते शिवायामे ।
षड्भूतवेदभागांस्त्यक्त्वोर्ध्वे कन्यसाद्युदयम् ॥
एवं त्रिकमुत्सेधं बुद्ध्वाथ त्र्यंशकात् तु सर्वेषाम् ।
विष्ण्वंशाभिमुखे द्वे सूत्रे संलम्बयेत् पार्श्वे ॥
पृष्ठे तयोर्युतिः स्याद्धीने वेदाग्निदस्रेषु ।
मध्ये भूतवनानलपाशेषु युतिस्तयोः पृष्ठे ॥
ज्येष्ठे षड्भूतवनानलपाशेषूदिता तु युतिः ।
तेषु ग्रीवैकांशं त्रियंशं सूत्रविष्कम्भम् ॥
यावदधो विष्ण्वंशः प्रोक्तोत्सेधे नयेत् तु समम् ।
एवं नागरलिङ्गे सूत्रं सम्यक् मयेनोक्तम् ॥"

इति ।

पादोनभागमर्धं वा ब्रह्मसूत्रविशालता ॥ २५ ॥
भवेद् विष्ण्वंशपर्यन्तं ब्रह्मसूत्रस्य तु स्थितिः ।
तदर्धं पार्श्वसूत्रस्य रेखा मध्ययवा भवेत् ॥ २६ ॥
तथा द्राविडलिङ्गाद्ये त्रिपञ्चांशे क्रमेण तु ।
नन्दद्विरुद्रभागोच्चं हीनाद्युच्चमिहोदितम् ॥ २७ ॥
सप्ताष्टनवभागेभ्यः क्रमात् सूत्रे तु लम्बयेत् ।
नीचे युगाग्निद्वितये मध्ये बाणयुगाग्निषु ॥ २८ ॥
द्वयोश्चाथोत्तमे लिङ्गे रसेषु श्रुतिवह्निषु ।
युतिः स्याद् द्राविडे सूत्रव्यासः स्वांशार्धतः समः ॥ २९ ॥

तदर्धं पंक्षसूत्रस्य व्यासोऽगाधश्च पूर्ववत् ।

द्राविडस्यान्यः प्रकार उच्यते—

षोडशांशे शिवायामे सूत्रायामो दशांशतः ॥ ३० ॥
ऊर्ध्वांशस्तु चतुर्भागः स्यादधश्च द्विभागिकः ।
मुकुलाकारमारभ्य पार्श्वसूत्रद्वयं क्रमात् ॥ ३१ ॥
त्र्यंशं विहाय पृष्ठे तु युतिरुक्ता तु सूत्रयोः ।
अथवा षोडशांशेऽधो भागं वेदांशमूर्ध्वतः ॥ ३२ ॥
त्यक्त्वा सूत्रं तु रुद्रांशैरुच्चं प्राग्वद् युतिः स्मृता ।
इत्थं द्राविडलिङ्गस्य लक्षणोद्धारणं स्मृतम् ॥ ३३ ॥
अथ वेसरलिङ्गस्य त्रिपञ्चांशे शिवोच्छ्रये ।
नालायामो दशांशः स्याद् वस्वंशप्रभृति क्रमात् ॥ ३४ ॥
सूत्रयोर्लम्बनं कुर्याद् भूतवेदगुणांशकैः ।
तयोर्युतिर्भवेच्छ्रेष्ठे विष्कम्भः षोडशांशतः ॥ ३५ ॥
मध्येऽशे वसुभागोच्चे वेदांशैर्नालमुन्नतम् ।
ऊर्ध्वे त्र्योंऽशाश्चाधोंशा गुणभागात् प्रभृत्यधः ॥ ३६ ॥
सूत्रे तु लम्बयेत् त्रिद्विभागेषु स्यात् तयोर्युतिः ।
गृहीतांशे त्रिधा भक्ते व्यासो भागद्वयेन तु ॥ ३७ ॥
एवं मध्यममुक्तं स्याल्लिङ्गे वेसरसंज्ञिते ।
कनिष्ठवेसरस्याथ द्वादशांशे शिवोच्छ्रये ॥ ३८ ॥
अधोंशमंशानूर्ध्वे तु सूत्रायामो नवांशतः ।
सङ्गमः पूर्ववज् ज्ञेयो व्यासे वै षोडशांशके ॥ ३९ ॥
भागेन सूत्रव्यासः स्यात् तदर्धं पक्षसूत्रयोः ।
कनिष्ठवेसरस्यैवं लक्षणोद्धरणं स्मृतम् ॥ ४० ॥

अत्र मयः—

"आद्यांशे नवभागे भागेन व्यासगम्भीरा ।
रेखाप्यकर्कशोक्ता सर्वेषामेव लिङ्गानाम् ॥
अष्टौ यवान् गृहीत्वा नवधा विभजेत् समं दृढधीः ।
एकांशेनैककरोत्तुङ्गे लिङ्गे विधातव्या ॥

---

१. 'चा स्यात् क' क. ख. पाठः.

एकैकभागवृद्ध्या नवहस्तान्ते तु लिङ्गे तु ।
अष्टयवान्तरगाढा सा रेखा सम्यगुद्दिष्टा ॥

अर्धयवेनाप्युदिता रेखार्धयवेन पूर्ववद् वृद्धिः ।
सार्धचतुर्यवतारावनतिः श्रेष्ठे तु लिङ्गे स्यात् ॥

मध्यमसूत्रव्यासादर्धततिः पक्षयोस्तु पृथक् ।
सर्वासां रेखाणां व्यासावनती समे स्याताम् ॥"

इति ।

सामान्यं नागरादीनां सूत्रलक्षणमुच्यते ।
शिवायामे तु भूत्यंशे वेदांशानुपरि त्यजेत् ॥ ४१ ॥

एकादशांशैर्नालं स्यान्मुकुलं त्वेकभागतः ।
अधो यवांशं तथा पृष्ठे भागाभ्यां तु भ्रुतिर्भवेत् ॥ ४२ ॥

अथवा षोडशांशोंशे भागवृद्ध्येमकस्तथा ।
साग्रं नालं दशांशैः स्याद्द्व्यंशैः पार्श्वयोर्भ्रुतिः ॥ ४३ ॥

पञ्चषट्सप्तभागे तु भागवत् पृष्ठे भ्रुतिर्भवेत् ।
अविच्छिन्नमतिस्निग्धमकर्कशमनाकुलम् ॥ ४४ ॥

कलशोद्धारणं कुर्याद् विपरीतं विवर्जयेत् ।
सूत्रेण भस्मना पूर्वमास्फाल्य मुकुलं ततः ॥ ४५ ॥
विलिख्य घटिकाग्रेण पार्श्वे सूत्रे लिखेत् ततः ।

अथ सूत्राग्रलक्षणमुच्यते —

छत्राभमस्तके लिङ्गे सूत्राग्रं स्याद् गजाक्षवत् ॥ ४६ ॥
खण्डेन्दुमस्तके लिङ्गे सूत्राग्रं बुद्बुदोपमम् ।
लिङ्गाग्रे त्रपुषाभे तु सूत्राग्रं कुक्कुटाण्डवत् ॥ ४७ ॥
कुक्कुटाण्डशिरोलिङ्गे सूत्राग्रं छत्रसन्निभम् ।
सामान्येन तु लिङ्गानां सूत्राग्रमथ कथ्यते ॥ ४८ ॥
कदलीमुकुलाभं वा सरोजमुकुलाकृति ।
अश्वत्थपत्रसदृशं सामान्यं हि यवोपमम् ॥ ४९ ॥

अन्त्यद्व्यंशे लिङ्गनाहे भागं त्रेधा विभज्य तु।
मध्यसूत्रततिर्यंशस्तदर्धं पक्षसूत्रयोः ॥ ५० ॥

लक्षणोद्धाराधिकारः।

---

गृहीतोत्सेधमानं तु मानाङ्गुलविभाजिते।
गृह्णीयादङ्गुलिविच्छेदं परिहृत्याङ्गुलिं पुनः ॥ ५१ ॥
वर्धयित्वा तु वसुभिर्हरेन्नक्षत्रसंख्यया।
अश्विन्यादीनि भानि स्युः शिष्टान्यत्र यथाक्रमम् ॥ ५२ ॥
तस्मिंश्चतुर्गुणे नन्दैर्हृत्वांशास्तस्करादिकाः।
तस्करो भोजनं शक्तिर्धनं राजा नपुंसकम् ॥ ५३ ॥
विपद् विषं समृद्धिश्चाप्यंशकाः स्युर्नव क्रमात्।
तस्करश्च विपत् षण्डो विषमित्याः परे शुभाः ॥ ५४ ॥
लिङ्गोच्चे वसुनन्दाग्निगणेऽर्काशाष्टभिर्हरेत्।
शिष्टं धनमृणं चैव योनिश्च स्याद् यथाक्रमम् ॥ ५५ ॥
धनाधिकं च क्षीणार्णं कर्तृभर्तृहितावहम्।
ध्वजसिंहवृषेभाश्चेच्छुभाश्चान्ये त्वशोभनाः ॥ ५६ ॥
शिवतुङ्गे नवगुणे वाराः स्युर्मुनिभिर्हृते।
सूर्याद्यास्तेषु शुभदाः शुभाः क्रूरास्त्वशोभनाः ॥ ५७ ॥
ग्रामादीनां तथा कर्तुर्नक्षत्रेणाविरोधि यत्।
लिङ्गं राज्ञश्च देशस्य तदुक्तं सम्पदां पदम् ॥ ५८ ॥
आर्षाणि लिङ्गानि च लक्षणैः स्वैः स्वायम्भुवान्यप्यनुकीर्तितानि।
पूर्वोदितानामिह मानुषाणां तल्लक्षणोद्धारविधिश्च गीतः ॥ ५९ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे उपरिभागे क्रियापादे आर्षादिलिङ्गलक्षणपटलोऽष्टात्रिंशः।

---

अथ एकोनचत्वारिंशः पटलः।

अथ पीठानि वक्ष्यन्ते लक्षणैः स्वैः पृथग्विधैः।
यैः संयोगं तु लिङ्गानां प्रतिष्ठेति विदुर्बुधाः ॥ १ ॥
एकजैव तु जात्या स्यात् पीठं लिङ्गं च नान्यथा।
शैले च दारवे लिङ्गे सजातिश्चेत्र कल्प्यते ॥ २ ॥

इष्टकाभिः सुधाबन्धः पीठं वा स्यात् सलक्षणम् ।
खण्डेन स्यात् पादशिला स्त्रीशिला पिण्डिका भवेत् ॥ ३ ॥
लिङ्गं पुंशिलया कुर्यादिति शास्त्रस्य निश्चयः ।
पूजांशद्विगुणं हीनं श्रेष्ठं लिङ्गोन्नतेः समम् ॥ ४ ॥
नवैते पीठविस्तारास्तयोर्मध्येऽष्टभागिके ।
विस्तारार्धोन्नतं नीचं श्रेष्ठं द्विन्त्र्यंशकं ततः ॥ ५ ॥
विष्कम्भं त्रिगुणं वाथ नाहतुल्यविशालकम् ।
गर्भव्यासात् त्रिभागैकं चतुर्थांशमथापि वा ॥ ६ ॥
विष्कम्भकर्णद्विगुणं त्रिगुणं वापि विस्तृतम् ।
पीठं कुर्यात् तु विष्ण्वंशसमानोच्चं हि सर्वथा ॥ ७ ॥
मण्डनाय स्वविस्तारादष्टांशमधिकं ततः ।
सर्वेषामपि पीठानां जन्मान्तं मूलविस्तृतिः ॥ ८ ॥
पीठाग्रस्यापि विस्तारः स्यान्महापट्टिकान्तकम् ।

सामान्यपीठविधिः ।

---

नागरादित्रयाणां तु पीठलक्षणमुच्यते ॥ ९ ॥
त्रिखण्डलिङ्गायामेन तुल्यव्यासमिहोत्तमम् ।
पीठं स्याद् द्व्यंशतो नीचं तयोर्मध्येऽष्टभागिके ॥ १० ॥
पीठव्यासा नवैव स्युस्तद्व्यासे रामभागिके ।
पीठं श्रेष्ठं द्विभागोच्चं नीचं व्यासार्धमुन्नतम् ॥ ११ ॥
तयोर्मध्येऽष्टभागे तु पीठोत्सेधा नवैव हि ।
द्राविडेऽपि त्रिखण्डेन तुल्यव्यासमिहोत्तमम् ॥ १२ ॥
लिङ्गायामे नवांशे तु सप्तांशैर्नीचविस्तृतिः ।
तयोर्मध्येऽष्टभागे तु पीठव्यासा नव स्मृताः ॥ १३ ॥
अष्टांशे ब्रह्मविष्ण्वंशे त्रिद्व्येकांशमधस्त्यजेत् ।
शेषांशोच्चं तु नीचादि पीठोच्चो द्राविडे मतः ॥ १४ ॥

अथ वेसरलिङ्गस्य द्व्यष्टांशे परिणाहके ।
मुख्यं हि तत्समं व्यासं जगत्यंशैस्तथाधमम् ॥ १५ ॥
विष्णुतुल्योच्छ्रितं तत् स्याच्चतुर्थांशाधिकं तु वा ।
सर्वेषामपि लिङ्गानां पीठोच्चादवशेषितम् ॥ १६ ॥
ग्राह्यं लिङ्गस्य मूलं यत् तत् स्यात् पादशिलागतम् ।
पीठमूलस्य विस्ताराद् वसुनन्ददिगंशकैः ॥ १७ ॥
हीनपीठाग्रविस्तारो हीनमध्ये तथोत्तमे ।

नागरादित्रयपीठम् ।

---

अथ पीठसंस्थानानि कथ्यन्ते —

चतुरश्राणि वस्वश्रवृत्तानीति त्रिभेदतः ॥ १८ ॥
पीठानि स्युः क्रमात् तेषां प्रथमं मेरुसुन्दरम् ।
वर्धमानं द्वितीयं स्याल्लक्ष्मीसुन्दरमप्यथ ॥ १९ ॥
विष्णुसम्मिलनाख्यं च पद्मभद्राह्वयं ततः ।
पीठं समाङ्गभद्राख्यं रुद्रकान्तं ततः परम् ॥ २० ॥
सोमकान्तं च सर्वाङ्गभद्राख्यं श्रीकरं तथा ।
पुष्टिवर्धनसंज्ञं च सर्वसौम्यं ततः परम् ॥ २१ ॥
एवं द्वादशभेदानां पीठानां लक्ष्म कथ्यते ।
पीठं निष्कललिङ्गानां विज्ञेयं सर्वतः समम् ॥ २२ ॥
आयतं प्रतिमानां स्यात् सकले वार्धचन्द्रकम् ।
चतुर्दशांशे पीठोच्चे भागात् स्यान्मूलपट्टिका ॥ २३ ॥
पद्मं त्रिभिर्युगर्धांशमर्धेनाब्जं ततो भवेत् ।
वृत्तं द्व्यंशं पुनः पद्ममर्धमर्धेन कम्पकम् ॥ २४ ॥
सार्धद्व्यंशेन कण्ठः स्यादर्धेनोर्ध्वाम्बुजं स्मृतम् ।
अर्धेन कम्पो द्व्यंशात् स्यात् क्रमेणैवोर्ध्वपट्टिका ॥ २५ ॥
कम्पाज्यधारिण्यर्धेन स्यादेवं मेरुसुन्दरम् ।
अष्टादशांशे पीठोच्चे जन्मद्व्यंशमिहोदितम् ॥ २६ ॥

चतुर्भिर्जगतीं कुर्यात् कुमुदं त्रिभिरेकतः ।
कम्पं कण्ठं त्रिभिस्तद्वत् कम्पमेकेन पट्टिकाम् ॥ २७ ॥
त्रिभिरंशैस्तथांशेन वाजनं वर्धमानके ।
सङ्कृत्यंशे तु पीठोच्चे जन्मसार्धांशतो भवेत् ॥ २८ ॥
अंशेन पद्ममर्धेन कम्पं वप्रं च पञ्चभिः ।
दलमेकेन धृत्यंशादेकेनाब्जं तु कारयेत् ॥ २९ ॥
वृत्तं चतुर्भिस्त्वंशेन पद्ममर्धेन कम्पकम् ।
त्रिभिः कण्ठं तथांशेन वाजनं त्वथ भागतः ॥ ३० ॥
निद्रां तु पट्टिकां द्व्यंशादर्धात् पद्माज्यभृद् भवेत् ।
लक्ष्मीसुन्दरसंज्ञं तु पीठमेवं प्रसिध्यति ॥ ३१ ॥
पीठोच्चे षोडशांशेऽश्विभूतदस्रश्रुतिद्वयैः ।
एकेन च जगत्यब्जवेत्रपङ्कजपट्टिका ॥ ३२ ॥
तथाज्यधारिणीं कुर्याद् विष्णुसंमीलने क्रमात् ।
अष्टादशांशे पीठोच्चे भवेत् सार्धांशतः खुरम् ॥ ३३ ॥
सार्धत्रयेण जगती सार्धेनाब्जं धृगर्धतः ।
पट्टं चार्धेनोपपट्टं कण्ठस्त्र्यंशस्तदूर्ध्वतः ॥ ३४ ॥
उपपट्टं भवेदर्धं पट्टमर्धेन चोपरि ।
द्व्यंशं वाजनमुद्दिष्टमर्धं पट्टाज्यभृद् भवेत् ॥ ३५ ॥
पद्मभद्रामिदं पीठं विज्ञेयमतिशोभनम् ।
धृत्यंशे पीठतुङ्गे तु घृतवार्यर्धतः स्मृताः ॥ ३६ ॥
अर्धेन कम्पः सार्धाभ्यां भागाभ्यां वाजनं भवेत् ।
पट्टोपपट्टावर्धाभ्यां कण्ठोंऽशौ पट्टमर्धतः ॥ ३७ ॥
उपपट्टोऽर्धमष्टाश्रः कुम्भः स्याच्चतुरंशतः ।
पञ्चांशा जगती तद्वत् सार्धांशेन खुरं भवेत् ॥ ३८ ॥
एतत् समाङ्गभद्राख्यं पीठं भवति शोभनम् ।
अत्यष्ट्यंशे तु पीठोच्चे खुरं भागेन वप्रकम् ॥ ३९ ॥

चतुर्भिश्च दलं सार्धार्धं कम्पो धृगंशकम् ।
कम्पोऽर्धमर्धेनाम्भोजं वृत्तं द्व्यर्धतो दलम् ॥ ४० ॥
पद्ममर्धेन कण्ठोंऽशः कम्पोऽर्धेनार्धमम्बुजम् ।
त्र्यंशं वाजनमर्धेन पद्मं क्षेपणमर्धतः ॥ ४१ ॥
एतद्धि रुद्रकान्ताख्यं पीठमुक्तं सुशोभनम् ।
अतिधृत्यंशपीठोच्चे भागो भूगतमंशकौ ॥ (?)४२ ॥
वप्रं महाब्जं वेदांशैर्धृगर्धं वेत्रमंशतः ।
अर्धं गलं चार्धमब्जं वृत्तमत्यर्धतो भवेत् ॥ ४३ ॥
अर्धेनोर्ध्वदलं कुर्याद् वेत्रमंशो धृगर्धतः ।
अंशेन वेत्रं सार्धांशैस्त्रिभिरूर्ध्वाम्बुजं भवेत् ॥ ४४ ॥
अध्यर्धं घृतभृच्चेति सोमकान्तमुदीरितम् ।

नागरादित्रयस्यापि तुल्यमेतत् ।

पीठोच्चे षोडशांशे तु भागाभ्यां मूलपट्टिका ॥ ४५ ॥
महापद्मं तु वेदांशैर्धृगर्धेनांशतो गलम् ।
अर्धेन पद्मं वृत्तं तु भागेनार्धेन पङ्कजम् ॥ ४६ ॥
धृगर्धमूर्ध्वपद्मं तु चतुर्भिरथ पट्टिका ।
द्व्यंशेन घृतभृत् प्रोक्तमेतत् सर्वाङ्गभद्रकम् ॥ ४७ ॥

सर्वलिङ्गेषु समानमिदम् ।

पीठोच्चे षोडशांशेऽब्धिशरार्धैकार्धसागरैः ।
नेत्रेन्दुभिर्जगत्यब्जधृग्वेत्रं धृक् च पङ्कजम् ॥ ४८ ॥
पट्टिका चाज्यभृच्चेति श्रीकरे स्याद् यथाक्रमम् ।
एकस्मिन्नेव सार्धांशाज्जगत्यर्धेन कम्पकम् ॥ ४९ ॥
पट्टिकाधः स्ववेदांशात् सकम्पा पुष्टिवर्धने ।
पीठादये षोडशांशे खुरं त्र्यंशमथार्धतः ॥ ५० ॥
क्षेपणं सार्धवेदांशैः पद्ममर्धेन कम्पकम् ।
धृगर्धं वज्रमेकं स्यादूर्ध्वाब्जं वेदभागतः ॥ ५१ ॥

अर्धं क्षेपणमंशौ द्वौ पट्टिकार्धेन चाज्यभृत् ।
सामान्यं नागरादीनां सौम्यं पीठमुदीरितम् ॥ ५२ ॥

द्वादशपीठानि ।

---

"सर्वेषामेव पीठानामङ्गप्रवेशनिर्गमबहुलतुल्यं त्रिपादमर्धं वा शोभाबलवशादेव गृह्णीते"ति पराशरः ।

पीठव्यासात् त्रिवेदांशं नालमूलस्य विस्तृतिः ।
आयामस्तत्समस्तस्मात् त्रिचतुर्भागहापनात् ॥ ५३ ॥
कुर्यान्नालाग्रविस्तारमुन्नताग्रमनातुरम् ।
नालव्यासस्य रामांशात् खातं व्याससमोन्नतिः ॥ ५४ ॥
पीठमन्ये तु कौबेर्यां नालमित्थं प्रयोजयेत् ।
स्यादूर्ध्वपट्टबहुलं समं पादाधिकं तु वा ॥ ५५ ॥
अध्यर्धं वाज्यभृद्व्यासो मूलखातं च तत्समम् ।
आलिङ्ग्य मूलपर्यन्तं तत्क्रमेणोन्नतं भवेत् ॥ ५६ ॥
पीठोपलं त्वेकभागेऽप्येकमेवोर्ध्वमण्डनम् ।
अधोमण्डनमेकं वा स्यान्नैकं चोपपत्तितः ॥ ५७ ॥
तत्र मध्यं विना कोणं सन्धयेत् सुन्दरं यथा ।
उपर्यन्तावसानं तदूर्ध्वसन्तानमाचरेत् ॥ ५८ ॥
चतुर्दश प्रकाराणि पीठानत्यब्रवीन्मयः ।
वेदर्तुवसुसूर्याश्रैः षोडशाश्रं च वर्तुलम् ॥ ५९ ॥
एतेषां चायतैः षड्भिस्त्र्यश्रं चार्धेन्दुसन्निभम् ।

एतच्चतुर्दश । अपिच मयः —

"भद्रपीठं च पद्मं च वज्रपीठं महाम्बुजम् ।
श्रीकरं पीठपद्मं च महावज्रं च सौम्यकम् ॥
श्रीकाम्यं चेति नवधा पीठानि प्रभवन्ति हि ॥"

तद्यथा —

पीठोत्सेधे त्रिपञ्चांशे जन्मद्व्यंशं युगांशकैः ॥ ६० ॥
वप्रं पद्मं तु सार्धेन भृगर्धं द्व्यंशतो घटः ।
अर्धं क्षेपणमध्यर्धं कण्ठोऽर्धं क्षेपणं पुनः ॥ ६१ ॥

व्यंशं पट्टं तु घृतमृदर्धे स्याद् भद्रपीठके ।

सर्वलिङ्गसामान्यमेतत् ।

व्यष्टांशपीठोन्नतिदस्रबाणद्विवेददस्रेन्दुभिरेव पट्टम् ।

अब्जं च वृत्तं सुदलं च पट्टमाधारभृत् स्यादिति पद्मपीठम् ॥ ६२ ॥

पीठतुङ्गे तु मन्वंशे सार्धे जन्मार्धतोऽवटम् ॥ ६३ ॥

सार्धत्रिभागं पद्मं स्यादर्धाभ्यां पट्टनिम्नके ।

भागो वज्रं निम्नमर्धं कम्पोऽर्धं त्रिभिरम्बुजम् ॥ ६४ ॥

निम्नमर्धं ततोऽध्यर्धात् पट्टिकार्धेन चाज्यभृत् ।

वज्रपद्माह्वयं पीठं सर्वलिङ्गसमं भवेत् ॥ ६५ ॥

धृत्यंशे पीठतुङ्गे तु द्व्यर्धं जन्माथ पङ्कजम् ।

चतुर्भिः पट्टमर्धं स्यादर्धं निम्नं तु सार्धतः ॥ ६६ ॥

पद्मं व्यर्धेन वृत्तं स्यादर्धार्धेऽब्जं च निम्नकम् ।

त्रिभिरूर्ध्वाम्बुजं पट्टमर्धमध्यर्धमम्बुजम् ॥ ६७ ॥

श्रीपट्टस्नेहभृत्सार्धं महापद्माह्वयं भवेत् ।

मानुषार्षलिङ्गानां समानमेतत् ।

पीठोत्सेधे षोडशांशे चन्द्राग्निश्रुतिसंख्यया ॥ ६८ ॥

जन्मवप्रं च पद्मं च धृगर्धं व्यंशवर्तुलम् ।

अर्धं धृक् पङ्कजं त्र्यंशं पट्टिका सार्धभागिका ॥ ६९ ॥

घृतवार्यर्धतः खातं तावत् त्र्यंशं तु नालकम् ।

तद्व्यासनिर्गमौ त्र्यंशौ तथाग्रं श्रीकरं स्मृतम् ॥ ७० ॥

पङ्क्त्यंशोच्चे सार्धमर्धद्व्यार्धं त्रीण्यर्धानि व्यर्धके स्यात् क्षुरं च ।

निम्नं पद्मं पट्टनिम्ने च पट्टमब्जं निम्नं पट्टनिम्नेऽब्जपीठे ॥ ७१ ॥

त्रिपञ्चांशे तु पीठोच्चे द्व्यध्यर्धाभ्यर्धकेन्दुभिः ।

अध्यर्धेन्द्वर्धसार्धाग्निभागैरध्यर्धकार्धकैः ॥ ७२ ॥

जन्मनिम्नाब्जपट्टानि धृग्वज्रं धृगतः परम् ।

क्षेपणाम्भोजपट्टानि निम्नं चेति यथाक्रमम् ॥ ७३ ॥

महावज्रं तु पीठं तद् वृत्तवज्रेण सौम्यकम् ।

पीठोत्सेधे तु सूर्यांशे चन्द्रनेत्रार्धभागतः ॥ ७४ ॥

सार्धार्धार्धैश्च सार्धेन तथार्धार्धार्धकार्धकैः ।
अध्यर्धेन तथार्धेन जन्मपद्मकनिम्नकम् ॥ ७५ ॥
अब्जं धृक् च दलं वृत्तं पद्मं धृक् कमलं ततः ।
पट्टिकानिम्नकं पट्टं श्रीकाम्ये तु क्रमाद् भवेत् ॥ ७६ ॥

अत्र

"धाम्नि प्रोक्तान्यप्यधिष्ठानकानि तान्यप्यस्मिन् मण्डनीयानि युक्त्या ।"
इति मयः ।

यथाबलं यथाशोभं यथायुक्ति प्रवेशनम् ।
निर्गमं चापि पीठानामङ्गानां परिकल्पयेत् ॥ ७७ ॥
पीठव्यास(स्य) त्र्यंशैकं वेदांशैकमथापि वा ।
स्यान्निर्गमः प्रणालस्य मूलव्यासं च तत्समम् ॥ ७८ ॥
मूलादर्धं त्रिभागं वा प्रणालाग्रविशालता ।
गजौष्ठाकारमथवा गोमुखाभं च तद् भवेत् ॥ ७९ ॥
मूलाग्रविपुलं त्र्यंशव्यासं तत्खातनिम्नकम् ।
इष्टदिङ्मुखलिङ्गानां प्रणालं पीठमध्यतः ॥ ८० ॥
वामभागे तु तत् कुर्यात् साधारं वा यथारुचि ।
अग्रपट्टस्य विस्तारं सोच्चतुल्यं प्रकल्पयेत् ॥ ८१ ॥
सपादं वाथवा सार्धं सत्रिपादमथापि वा ।
यथाबलं तत् पट्टस्य समं खातं तु मूलतः ॥ ८२ ॥
क्रमेणोन्नतिमल्लिङ्गसङ्गमात् तत् प्रकल्पयेत् ।
व्याप्तमुखं त्वर्धचन्द्राख्ये पीठे स्याद् द्वारसम्मुखम् ॥ ८३ ॥
न द्वारसम्मुखं कोणं कुर्यात् पीठे त्रिकोणके ।
द्वारसूत्रस्य पीठाग्रं वेधसं न प्रशस्यते ॥ ८४ ॥
शिवभागं त्वधः पीठात् किञ्चिदप्यवकम्पितम् ।
उन्नतोऽपि च दोषाय स्यात् तत् परिहरेत् ततः ॥ ८५ ॥
निस्सन्धिकं भवेत् पीठं प्रशस्तं शिलयैकया ।
तदलाभेऽप्येकयैव प्रकुर्यादूर्ध्वमण्डनम् ॥ ८६ ॥

उपर्युपरि पीठानां सन्धिरङ्गावसानके ।
नालमध्ये तथा मध्ये कर्णे सन्धिर्न शस्यते ॥ ८६ ॥

युञ्जीयाद् दक्षिणे वामे दीर्घादीर्घं यथाक्रमम् ।
त्रिखण्डं नैकखण्डं वा युक्त्या कुर्यादधोगतम् ॥ ८७ ॥

लिङ्गायामसमव्यासा श्रेष्ठा ब्रह्मशिला स्मृता ।
पूजांशद्विगुणा नीचा तयोर्मध्येऽष्टभागिके ॥ ८८ ॥

प्राग्वन्नवप्रकाराः स्युः क्रमाद् ब्रह्मशिलाः शुभाः ।
स्वव्यासार्धोन्नता मुख्या नीचा वेदांशतो घनाः ॥ ८९ ॥

तयोर्मध्येऽष्टधा भक्ते घनाद् ब्रह्मशिला नव ।
अथवा लिङ्गविष्कम्भाच्छ्रेष्ठा स्याद् द्विगुणा घनात् ॥ ९० ॥

विस्ताराध्यर्धतो नीचा भवेद् ब्रह्मशिला क्वचित् ।
खातं ब्रह्मशिलामध्ये ब्रह्मभागोपमं भवेत् ॥ ९१ ॥

प्रविशेद् ब्रह्मभागस्तु नीरन्ध्रं च यथा भवेत् ।
रत्नन्यासान्वितं श्लिष्टं लिङ्गमूलेन तद् भवेत् ॥ ९२ ॥

नन्द्यावर्तसमाकाराश्चतस्रस्तु शिलाः क्रमात् ।
पीठब्रह्मात्मनोर्मध्ये प्रादक्षिण्येन योजयेत् ॥ ९३ ॥

स्थानासनविभागेन प्रतिमानां परेपरे ।
एकद्वित्रिचतुःपञ्चषण्मात्रं वाधिकं ततः ॥ ९४ ॥

आसनानां स्वविस्तारादष्टभागाधिकायतिः ।
द्विगुणान्तं निजायामा मण्डनं पिण्डिकास्विव ॥ ९५ ॥

रामवेदेषुभागोच्चे बेरदैर्घ्ये क्रमेण तु ।
विष्टरस्योदयः प्रोक्तः शयने वासने स्थिते ॥ ९६ ॥

यथोचितं तथा दैर्घ्यं व्यासश्च शयने स्मृतः ।
ब्रह्मविष्णुशिवानां च (शौ ? गौ)र्यादीनां तथासनम् ॥ ९७ ॥

सोपपीठं गुहाङ्घ्रिस्थसिंहासिंहासनं स्मृतम् ।
दैवार्षकाणां बाणानां लिङ्गानां च स्वयम्भुवाम् ॥ ९८ ॥

प्रासादरूपं पीठं वा यथेष्टं कारयेद् बुधः ।

अथ नागरादित्रयाणां पादशिलालक्षणमुच्यते—

द्विगुणं लिङ्गविस्ताराद् विस्तृतं वेदभागतः ॥ ९९ ॥
तुङ्गं व्यासत्रिपादांशाद् भवेल्लिङ्गे तु नागरे ।
गर्भकर्णचतुर्थांशव्यासा श्रेष्ठायतस्य तु ॥ १०० ॥
व्यासार्धार्धविहीना स्यान्नीचा मध्येऽष्टधा तयोः ।
भक्ते तु नवधा ब्रह्मशिलाः स्युर्द्राविडे शिवे ॥ १०१ ॥
व्यासार्धं तत्त्रिपादोनं तयोर्मध्येऽष्टभाजिते ।
तुङ्गं ब्रह्मशिलायाः स्यान्नवधा द्राविडाह्वये ॥ १०२ ॥
अथ गर्भगृहार्धेन त्रिचतुर्भागविस्तृता ।
व्यासार्धवेदभागोच्चा प्राग्वन्मध्येऽष्टभाजिते ॥ १०३ ॥
नव ब्रह्मशिलाः प्रोक्ता लिङ्गब्रह्मांशतोऽवटम् ।
द्वियवाधिकविस्तारं विस्ताराष्टांशतः स्मृतम् ॥ १०४ ॥
मूलेऽवटाभं रत्नाढ्यं वैसरव्यापि तद् भवेत् ।
इत्थमसौ पीठविधिर्नैकविधो लक्षणतः ।
प्रोक्त इहालङ्करणैस्त्वाष्ट्रविदां प्रीतिकरः ॥ १०५ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे उपरिभागे क्रियापादे पीठविधिलक्षणपटल एकोनचत्वारिंशः ।

---

## अथ चत्वारिंशः पटलः ।

अथोक्ताव्यक्तालिङ्गे तु शिवांशे दशभागिके ।
अश्विनेत्राग्निभागैः स्यात् स्कन्धः कण्ठस्तथाननम् ॥ १ ॥
उष्णीषोंऽशस्तु मकुटं त्र्यंशमूर्ध्वं तु भागतः ।
भागेन मुखविष्कम्भो विस्तृतश्चोर्ध्वलिङ्गवत् ॥ २ ॥
ललाटकर्णभ्रूनेत्रघ्राणगन्धमुखादिकम् ।
मानोन्मानप्रमाणेन सर्वं सकलवत् स्मृतम् ॥ ३ ॥

---

१. 'व्य' क. पाठः.

आर्षवद् ब्रह्मविष्ण्वंशौ वेदाश्रावेव मिश्रके ।
पुरुषादिमुखानां तु लक्षणं त्वथ कथ्यते ॥ ४ ॥

कुङ्कुमाभं विशालाक्षं त्रिणेत्रं नक्रकुण्डलम् ।
चन्द्राङ्कितजटाजूटं प्राचि तत्पुरुषाननम् ॥ ५ ॥

भिन्नाञ्जननिभं सिंहत्रिणेत्रं सिंहनासिकम् ।
दंष्ट्राकरालं दष्टोष्ठं संलिहद्रसनोज्ज्वलम् ॥ ६ ॥

पिङ्गश्मश्रुजटाजूटं सर्पप्रोतशिरस्स्रजा ।
सेन्दुखण्डमरालभ्रूः स्यादघोरं तु दक्षिणे ॥ ७ ॥

बन्धुजीवारुणं रम्यं स्त्रीविलासविभूषितम् ।
ललितभ्रूयुगं चारुतिलकं मणिकुण्डलम् ॥ ८ ॥

धम्मिल्लाबद्धमकुटं नीलालकविभूषितम् ।
उत्तरे वामदेवाख्यं मुखं कुर्यान्मनोरमम् ॥ ९ ॥

पूर्णेन्दुकुन्दधवलं प्रसन्नं रत्नकुण्डलम् ।
चन्द्राङ्कितजटाजूटं सद्योजातं तु पश्चिमे ॥ १० ॥

एकास्यं वा त्रिवक्त्रं स्यादेकद्वारे शिवालये ।
द्वाराभिमुखमेवास्यं त्रिमुखं चेत् तु पार्श्वयोः ॥ ११ ॥

न कुर्याद् द्विमुखं लिङ्गं तच्छस्तमभिचारके ।
चतुर्द्वारे तु भवने कुर्याल्लिङ्गं चतुर्मुखम् ॥ १२ ॥

पञ्चवक्त्रं द्विवक्त्रं वा लिङ्गं राष्ट्रान्तरे गिरौ ।
स्थापयेच्छत्रुनाशाय विजयाय च भूपतिः ॥ १३ ॥

अत्र पराशरः—

"अथैकत्र चतुर्वक्त्रं ग्रामादिष्वेव विन्यसेत् ।
द्विवक्त्रं पर्वतेऽरण्ये परराष्ट्रान्तिकेऽपि च ॥
स्थापयेत् तदरिध्वंसं विदधाति स्वरक्षणम् ॥"

इति ।

तथा योगशिवपद्धतौ च —

"बाणकोणगुणाश्व्येकमुखलिङ्गानि तु क्रमात् ।
चतुस्त्र्येकाननं भुक्त्यै पञ्चास्यं चाभिचारिके ॥
द्विमुखं चारिनाशाय स्थाप्यं शैलवनादिषु ।
सितोच्चानं त्रिणेत्रं च मौलिकुण्डलमण्डितम् ॥
ईशानं लिङ्गमूर्ध्नि स्यादूर्ध्वाभिमुखमेव तत् ॥"

इति ।

अव्यक्तस्यैव लिङ्गस्य कुर्यात् पीठादिकं समम् ।
मृद्वृक्षाश्ममयं लिङ्गं सर्वसिद्धिप्रदं सदा ॥ १४ ॥
मृन्मये हेमरत्नादि मध्ये संस्थाप्य कारयेत् ।
सर्वेषां मुखलिङ्गानां निर्गमः स्यात् पृथक् पृथक् ॥ १५ ॥
प्रविष्टा कन्धरा कार्या त्रिष्णुभागोपरिस्थिता ।
हस्तादिपञ्चहस्तान्तं मुखलिङ्गं प्रकल्पयेत् ॥ १६ ॥
अतः परं न कुर्वीत मिश्रलिङ्गं शुभेच्छया ।

मुखलिङ्गविधिः

---

अथ स्फाटिकलिङ्गमुच्यते—

एकाङ्गुलं समारभ्य क्रमाङ्गुलविवर्धनात् ॥ १७ ॥
षडङ्गुलान्तं स्फटिकलिङ्गषट्कमिहाधमम् ।
सप्ताङ्गुलादिकं लिङ्गं मध्यमा द्वादशाङ्गुलात् ॥ १८ ॥

लिङ्गषट्कमिति यावत् ।

त्रयोदशाङ्गुलादीनि लिङ्गान्याष्टादशाङ्गुलात् ।
उत्तमानि भवन्त्येषु मानं मात्राङ्गुलेन हि ॥ १९ ॥

अत्र मयः —

"तद्धीनादर्धमात्रेण वृद्ध्यैकादशसंख्यया ।
श्रेष्ठे मध्येऽवरे लिङ्गे त्रयस्त्रिंशत् समुन्नतम् ॥
पूजांशार्धं त्रिभागैकं गाढं वा स्फाटिकं मतम् ।
समं त्रिपादमर्धं वा पूजांशोच्चस्य विस्तृतिः ॥

सधारं वाथ वृत्तं वा लिङ्गं स्यात् स्फाटिकं शुभम्।
शिरोवर्तनकं प्राग्वद् ब्रह्मसूत्रं न वा भवेत्॥
ब्रह्मसूत्रं विनाप्येतत् तेजोढ्यं वरप्रदम्।"

इति।

स्वव्यासाद्द्विगुणं सार्धद्विगुणं त्रिगुणं ततः।
नीचं मध्यं च मुख्यं च पीठनालं हि पूर्ववत्॥ २०॥
पूजांशोच्चसमं वार्धं त्रिपादं पैण्डिकोच्छ्रयः।
मण्डनं निष्कलोक्तं हि पीठेषु स्फाटिकेष्वपि॥ २१॥
स्फाटिकैकशिलापीठलिङ्गं श्रेष्ठं स्वयोनिकम्।
स्फटिकान्यशिलापीठं लिङ्गं मध्यं स्वयोनिकम्॥ २२॥
स्वयोन्यभावे हैमं स्याद् राजतं ताम्रजं तु वा।
पीठं कनिष्ठं तत्रापि हैमाद्यं तूत्तमादिकम्॥ २३॥
रत्नानां स्फटिकादीनां दोषान् परिहरेद् बुधः।
सर्वनाशकरं यस्मात् सदोषं तं न पूजयेत्॥ २४॥
द्वादशैव स्मृता दोषाः स्फटिकादिषु तद् यथा।
रेखा बिन्दुः कलङ्कश्च त्रासः काकपदं क्षतम्॥ २५॥
खद्योतो मक्षिकाच्छायभेदः सन्धिस्तुषाकरः।
निम्नमस्तकता चेति रत्नदोषास्तु वर्जिताः॥ २६॥
पद्मरागादिरत्नानां दोषान् परिहरेदिमान्।
पद्मरागादिलिङ्गानां पीठं श्रेष्ठं स्वयोनिकम्॥ २७॥
तदभावे हिरण्यादिपीठं स्यादुत्तमादिकम्।
एकाङ्गुलादिद्वियववर्धनेना षडङ्गुलात्॥ २८॥
मध्यानि नव लिङ्गानि रत्नजानीह कल्पयेत्।
सप्ताङ्गुलादिद्वियववर्धनेना नवाङ्गुलात्॥ २९॥
श्रेष्ठानि नव लिङ्गानि रत्नजानि भवन्ति हि।
कनिष्ठमध्यलिङ्गानि रत्नानि स्फाटिकान्यपि॥ ३०॥

1. 'ठं' ख. पाठः.

चलान गेहे पूज्यानि स्थिराण्येवोत्तमानि हि ।
तान्यालये प्रतिष्ठाप्य स्थिरलिङ्गानि पूजयेत् ॥ ३१ ॥

रत्नलिङ्गाधिकारः ।

---

रामाङ्गुलादितो लोहं लिङ्गमा षोडशाङ्गुलात् ।
चललिङ्गं स्मृतं तस्मात् स्थिराण्यूर्ध्वं भवन्ति हि ॥ ३२ ॥
अष्टाङ्गुलं समारभ्य चाष्टाङ्गुलविवर्धनात् ।
लौहानि नव लिङ्गानि त्रिहस्तान्तानि कल्पयेत् ॥ ३३ ॥
तथाष्टाङ्गुलमारभ्य द्विद्व्यङ्गुलविवर्धनात् ।
त्रिहस्तान्तानि लिङ्गानि त्रयस्त्रिंशद् भवन्ति हि ॥ ३४ ॥

लौहलिङ्गानि ।

---

षोडशाङ्गुलमारभ्य दारुलिङ्गान्यनुक्रमात् ।
षोडशाङ्गुलवृद्ध्या स्युः' षड्ढस्तान्तानि वै नव ॥ ३५ ॥
षोडशाङ्गुलमारभ्य चतुरङ्गुलवर्धनात् ।
दारवाणि त्रयस्त्रिंशल्लिङ्गान्या रसहस्ततः ॥ ३६ ॥
यस्य यस्मिन् भवेदास्था विभूतिर्यस्य यादृशी ।
लिङ्गं तदनुसारेण सततं तत् समाश्रयेत् ॥ ३७ ॥
इति मिश्रलिङ्गमणिलिङ्गवि(धान ? धौ कन)कादिलोहमयलिङ्गविधिः ।
इह दारुलिङ्गविधिरप्युदितः शिवतन्त्रदर्शनविनिश्चयतः ॥ ३८ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे उपरिभागे क्रियापादे मिश्रलिङ्गरत्नलिङ्गविधिपटलश्चत्वारिंशः ॥—

---

अथैकचत्वारिंशः पटलः ।

अथो सकललिङ्गानां लक्ष्म सम्यक् निगद्यते ।
अचलं तच्चलं चैव चलाचलमिति त्रिधा ॥ १ ॥
सौधं च पार्थिवं शैलं शार्करं च स्थिरं स्मृतम् ।
रत्नजं दारवं लौहं त्रयं चैतच्चलं स्मृतम् ॥ २ ॥

धातुवर्णाद्यमालेख्यं सकलं तच्चलाचलम् ।
सर्वं च चित्रं चित्रार्धं चित्राभासमिति त्रिधा ॥ ३ ॥

सर्वाङ्गदृश्यं यच्चित्रं चित्रार्धं चार्धदर्शनात् ।
लिखितं पटभित्त्यादौ चित्राभासाह्वयं स्मृतम् ॥ ४ ॥

चित्रादीनां तु बेराणां श्रेष्ठमध्याधमं फलम् ।
लिङ्गगर्भगृहद्वारस्तम्भाधिष्ठानकिष्कुभिः ॥ ५ ॥

तालमूलाङ्गुलैश्चाथ मानं मानाङ्गुलैरपि ।
यजमानोच्चतो मानमित्येकादशधा स्मृतम् ॥ ६ ॥

तद् यथा —

पूजांशोच्चं च नाहं विततिमपि पृथग् व्यष्टभागं तु कृत्वा
तैरेवांशैस्त्रिभेदैर्गुणशरमुनिभिर्नन्दरुद्रांशकैर्वा ।
न्यूनं चैवाधिकं वा सममपि कथितं लिङ्गतो बेरमानं
भेदैर्गीर्वाणसंख्यैर्नवविधमपि तद् गर्भगेहे नवांशे ॥ ७ ॥

द्वाराधिष्ठानपादानां समं पादाधिकं तु वा ।
पादहीनमथैतेषां द्व्यन्तरे वेदभागिके ॥ ८ ॥

पृथक् कृत्वाऽथ तैरंशैः स्यान्मानं नवधा पृथक् ।
हस्तादिनवहस्तान्तं तन्मानं नवधा स्मृतम् ॥ ९ ॥

तालादि नवतालान्तं तालमानं च कीर्तितम् ।
पूजांशोच्चे चतुर्विंशत्यधिकं शतभागिके ॥ १० ॥

मूलबेराङ्गुलं भागस्तेन बेरोच्छ्रयं नयेत् ।
मूलबेराङ्गुलकृतप्रतिमायास्तदङ्गुलैः ॥ ११ ॥

गणयेद् योनिभागाद्यमन्यथा चेद् विनाशकृत् ।
तिर्यग्यवोदरैः षड्भिः सप्तभिश्चाष्टभिः क्रमात् ॥ १२ ॥

कनिष्ठं मध्यमं श्रेष्ठं स्मृतं मानाङ्गुलं पृथक् ।
शाल्यायतैस्त्रिभिस्तैश्च सार्धैस्तैर्वेदसम्मितैः ॥ १३ ॥

मानाङ्गुलानि चाप्येवं कनिष्ठादीनि कल्पयेत् ।
कर्तुर्दक्षिणकरे मध्यमान्मध्यपर्वणः ॥ १४ ॥

दैर्घ्यान्मात्राङ्गुलं श्रेष्ठं नचिं तद्व्यासतः स्मृतम् ।
यजमानसमं तस्य नेत्रास्यहनुदोस्समम् ॥ १५ ॥
स्तनान्तं हृदयान्तं च तन्मानं सप्तधा स्मृतम् ।
मानुषे निष्कले लिङ्गे पूजाभागे शिरो विना ॥ १६ ॥
यदुच्चं तेन बेराणामुत्सेधात् परिकल्पयेत् ।
स्वायम्भुवे यदा लिङ्गे शिरोमानं न लभ्यते ॥ १७ ॥
तच्छिरोन्तं तदुत्सेधः स्यान्नाहः स्थूलदेशतः ।
व्यासश्च तद्वदार्षादौ शिरोविस्तारवर्जिते ॥ १८ ॥
उत्सेधनाहव्यासाः स्युस्तैस्तैर्बेरोदयं नयेत् ।
अङ्गुलैः प्रतिमामाने क्रमात् सप्ताङ्गुलादितः ॥ १९ ॥
द्विद्व्यङ्गुलविवृद्ध्या स्युः प्रतिमोच्चानि वै पृथक् ।
सचतुर्विंशतिशतं यावत् प्रोक्ताङ्गुलैरिह ॥ २० ॥
गृहार्चास्विह मानं स्यान्मात्राख्यैरेव नान्यथा ।
अङ्गुलैर्यजमानस्य तत्रापि विधिरीरितः ॥ २१ ॥
त्रिविधाङ्गुलमानानां जात्यंशं नातिरोपयेत् ।
बेराणां तेषु योन्याद्यं नयेत् स्वैः स्वैरिहाङ्गुलैः ॥ २२ ॥
लिङ्गादिशिष्टमानेषु जात्यंशारोपणं मतम् ।
माने चतुरशीत्यंशे द्विषष्ट्यंशे समुच्छ्रये ॥ २३ ॥
सङ्कृत्यंशे विकारांशे विप्रादीनां यथाक्रमम् ।
एकांशारोपणादुक्तं जात्यंशारोपणं हि तत् ॥ २४ ॥
उक्तविप्रादिमानेषु (वसुवृषद्व्येषुभैर्हृते ? वस्वृष्यृतिषुभिर्हृते) ।
शेषं विप्रादिजातीनामृक्षं विद्याद् यथाक्रमम् ॥ २५ ॥
यजमानर्क्षमारभ्य गण्यमानेषु भेषु वै ।
नवाष्टषट्चतुर्युग्मताराः शस्तास्तु नेतरे ॥ २६ ॥

मानं तु रामवसुनन्दभुजङ्गनन्दै-
वेंदैश्च वृद्धमहितारकधातुसूर्यैः ।
दिङ्नन्दकैश्च हृतशिष्टमिह क्रमात् तद्
योन्यृक्षवारविभवर्णनवांशकाः स्युः ॥ २७ ॥

ध्वजसिंहवृषेभाख्या योनयः शोभनाः स्मृताः ।
तथैवाशोभना वर्ज्या धूमश्वखरवायसाः ॥ २८ ॥
नक्षत्राण्याश्विनादीनि यजमानदिनादितः ।
जन्मसम्पद्विपत् क्षेमः प्रत्यरं साधको वधः ॥ २९ ॥
मैत्रं परममैत्रं च जन्मेत्याद्यं पुनःपुनः ।
सम्पत्साधकमैत्राणि क्षेमं परममैत्रकम् ॥ ३० ॥
जन्माख्यं च शुभानि स्युरशुभानीतराणि तु ।
चन्द्रबुधगुरुशुक्राणां वाराः शस्तास्तु नेतरे ॥ ३१ ॥
धनाधिकं च हीनार्णं श्रेष्ठं मध्यं समं यदा ।
ऋणाधिकं चेद् वर्ज्यं स्याद् विपत्तस्करषण्डकाः ॥ ३२ ॥
भिन्नास्तादीतरे सर्वे श्रेष्ठा ग्राह्याः स्युरंशकाः ।
तस्करो भुक्तिशक्ती च धर्मः राजा नपुंसकम् ॥ ३३ ॥
अभयं च विपच्चैव समृद्धिश्च नव[1] क्रमात् ।
ग्रामवास्तुनृपादीनां यजमानस्य चाप्युत ॥ ३४ ॥
उक्तमानविभागेन योन्यादिघटनां नयेत् ।
प्रस्तुतप्रतिमोत्सेधं त्रिंशदंशादितः क्रमात् ॥ ३५ ॥
शतांशान्तं विभज्यैषु भागैरन्यतमैर्बुधः ।
योनितारादिघटनां योजयेच्छोभनं यथा ॥ ३६ ॥
देवादीनां तथान्येषां बेरमानं पृथक् पृथक् ।
मानं प्रमाणमुन्मानं परिमाणं तथा पुनः ॥ ३७ ॥
उपमानं लम्बमानमिति मानं तु षड्विधम् ।
बेरायामस्तु मानं स्यात् प्रमाणं तिर्यगर्पितम् ॥ ३८ ॥
उन्मानं तु तदावृत्तिर्नाहस्तु परिमाणकम् ।
निम्नोन्नतं तूपमानं लम्बमानं प्रलम्बितम् ॥ ३९ ॥
श्रेष्ठेन दशतालेन शिवकेशववेधसाम् ।
मध्येन दशतालेन गौरीलक्ष्मीगिरां मतम् ॥ ४० ॥

---

१. 'व' क. पाठः

दुर्गायाश्चापि मातृणां मध्येनैव प्रकल्पयेत् ।
मध्येन दशतालेन त्रिमूर्तीर्वा प्रकल्पयेत् ॥ ४१ ॥
तद्देवीनां तदा मानं कनिष्ठदशतालतः ।
सूर्येन्द्रस्कन्दचन्द्राणां चण्डक्षेत्रेशनन्दिनाम् ॥ ४२ ॥
ऋषीणां चाश्विनोः शास्तुः कनिष्ठदशतालतः ।
लोकपालाष्टमूर्तीशविद्येशवसुभोगिनाम् ॥ ४३ ॥
रुद्राणां चैव मानं स्यादुत्तमान्नवतालतः ।
मरुद्गणानप्सरसोऽप्यस्त्रमूर्तींश्च गुह्यकान् ॥ ४४ ॥
मध्येन नवतालेन कुर्याद् विद्याधरान् पितॄन् ।
सिद्धानसुरगन्धर्वान् कनिष्ठनवतालतः ॥ ४५ ॥
गणेशं वामनं चाथ पञ्चतालाख्यमानतः ।
चतुस्तालेन भूतानि त्रितालाद [1]क्षाकेश्वरान् ॥ ४६ ॥
द्वितालेनैव कूश्माण्डांस्तालात् कूर्माकृतिं हरिम् ।
प्रतिमाकरणं तत्तद्देहलब्धाङ्गुलेन तु ॥ ४७ ॥
सिध्येत् तत्रोच्यते पूर्वमुत्तमं दशतालकम् ।
तदुत्सेधे चतुर्विंशत्यधिकं शतभागिके ॥ ४८ ॥
एकांशो देहलब्धाख्यमङ्गुलं तदथाष्टधा ।
विभज्य विद्यादेकांशं यवमेवं परत्र च ॥ ४९ ॥
मध्यमे दशताले तु सविंशतिशतांशतः ।
सविकारशतांशेऽशः कनिष्ठदशतालके ॥ ५० ॥
अष्टोत्तरशतांशेऽशो नवतालोत्तमेऽङ्गुलम् ।
स वेदांशशतांशेऽशो नवताले तु मध्यमे ॥ ५१ ॥
शतांशेऽशोऽङ्गुलं ज्ञेयं कनिष्ठनवतालके ।
षण्णवत्यंशकेऽशः स्याच्छ्रेष्ठे तु वसुतालके ॥ ५२ ॥
प्रतिवेदाङ्गुलह्रासादेतन्मध्याधमे स्मृते ।
स्वस्वतालविभागेन सप्ततालादिषु क्रमात् ॥ ५३ ॥

1. 'य' क. पाठः

एकतालान्तकं विद्याद् देहलब्धाङ्गुलं पृथक् ।
इन्दुः स्वमंशो मात्रं चाप्यङ्गुलं च समं स्मृतम् ॥ ५४ ॥
कोलकं च कलाभागः स्याद् द्वित्रिचतुरङ्गुलम् ।
अक्षिगोलकपक्षस्तु द्व्यङ्गुलस्याभिधायकः ॥ ५५ ॥
मुखं तालं वितस्तिश्च द्वादशाङ्गुलवाचकम् ।

संज्ञापर्यायाः ।

अथ श्रेष्ठात् पङ्क्तितालात् प्रतिमामानमुच्यते ॥ ५६ ॥
सांशत्रियव उष्णीषः केशान्तोंऽशैस्ततस्त्रिभिः ।
ततोऽक्षिसूत्रं वेदांशैः सयवत्रितयैस्ततः ॥ ५७ ॥
नासापुटान्तं तन्मानं चिबुकान्तं च तावता ।
तस्माद् गलं वेदयवं ततः कण्ठस्तु सप्तभिः ॥ ५८ ॥
यवैरग्न्यङ्गुलैश्चास्माद्धृदयं त्रियवान्वितैः ।
त्रयोदशाङ्गुलैस्तस्मान्नाभिस्तावद्भिरङ्गुलैः ॥ ५९ ॥
नाभेर्मेढ्रं च तावद्भिस्ततो नक्षत्रसंमितैः ।
अङ्गुलैरूरुमानं स्यात् तस्माद् भागेन जानुनी ॥ ६० ॥
तस्मादूरुसमे जङ्घे पादमानं तु भागतः ।
अथाङ्गुष्ठात् तु पार्ष्ण्यन्तं तलं सप्तदशाङ्गुलम् ॥ ६१ ॥
हिक्कासूत्रादधो बाहू सप्तविंशतिमात्रकैः ।
द्व्यङ्गुलं कोर्परं तस्मात् त्रिसप्तांशैः प्रकोष्ठकम् ॥ ६२ ॥
सार्धत्रयोदशैर्मात्रैर्मध्याग्रान्तं तलं स्मृतम् ।
मुखस्य तिर्यग्विस्तारः कर्णान्तो द्वादशाङ्गुलः ॥ ६३ ॥
ग्रीवामूलाग्रविस्तारः सार्धनन्दनवाङ्गुलैः ।
एकाशीतेरर्धमात्रैः सबाह्वन्तरविस्तृतिः ॥ ६४ ॥
सार्धनन्दैर्बाहुमूलजान्वोर्व्यासं तु कल्पयेत् ।
कक्षयोरन्तरव्यासो द्वाविंशत्यङ्गुलैर्मतः ॥ ६५ ॥
स स्तनान्तरविस्तारः सार्धविंशतिमात्रतः ।
हृदयावधिविस्तारः सार्धाष्टादशमात्रिकः ॥ ६६ ॥

मध्यव्यासः षोडशांशैः सार्धैरष्टादशाङ्गुलैः ।
श्रोणेर्व्यासः कटिव्यासो विंशत्यङ्गुलसंमितः ॥ ६७ ॥

सार्धत्रयोदशांशा स्यादूरुमूलस्य विस्तृतिः ।
भान्वंशैरूरुमध्यस्य जङ्घामूलेऽष्टमात्रकैः ॥ ६८ ॥

जङ्घामध्यं सार्धषट्कं नलका सार्धभागतः ।
विस्तृताथाक्षिगुल्फान्तं स यवेष्वंशविस्तृतम् ॥ ६९ ॥

सार्धवेदाङ्गुलैः पार्ष्णी विस्तृता तद्वदुच्छ्रिता ।
षडंशः प्रपदव्यासस्तलाग्रस्य सषड्यवः ॥ ७० ॥

सयवद्वयवेदांशैः पादाङ्गुष्ठायतं स्मृतम् ।
तद्विस्तारं तदर्धेन तदर्धोन्नखविस्तृतिः ॥ ७१ ॥

तत्पादोनो नखायामो वृत्तोदग्राग्रमण्डितः ।
वेदरामाग्निदृङ्मात्रैः सत्रिषट्कचतुर्यवैः ॥ ७२ ॥

तर्जन्यादिकनिष्ठान्तमङ्गुल्यायाम ईरितः ।
तद्व्यासोऽपि क्रमाज्ज्ञेयो नवभिः सार्धसप्तकैः ॥ ७३ ॥

सप्तभिश्च यवैः षड्भिः स्वव्यासार्धात् तता नखाः ।
सपादाष्टांशसप्तांशैर्दोर्मध्ये कोर्परे ततिः ॥ ७४ ॥

सार्धेषुसार्धरामांशैः प्रकोष्ठमणिबन्धयोः ।
तलं सप्ताङ्गुलायामं मध्या सार्धषडङ्गुला ॥ ७५ ॥

+ + + + + + तर्जा ज्येष्ठा वेदाङ्गुलायता ।
सपादेष्वङ्गुलानामा कनिष्ठाब्ध्यंशपादयुक् ॥ ७६ ॥

सपादांशांशसयवमात्रमात्रैश्च पञ्चयवैः ।
अङ्गुष्ठादिकनिष्ठान्तमङ्गुलीनां ततिर्भवेत् ॥ ७७ ॥

स्वस्वमूले विकारांशे ह्यप्योंऽशस्तत्तदग्रके ।
अङ्गुल्यग्रततेऽन्यंशे द्व्यंशव्यासा नखाः पृथक् ॥ ७८ ॥

स्वस्वव्यासचतुर्थांशायताः स्युर्नखाः पृथक् ।
द्विगुणं स्वनखायामादग्रपर्व पृथक् पृथक् ॥ ७९ ॥

सपादद्व्यंशतोऽङ्गुष्ठे तर्जनानामोर्दृगंशतः ।
मध्यायाः सत्रिपादाक्षि सपञ्चयवमात्रतः ॥ ८० ॥

कनिष्ठायाश्च कथित आयामो मूलपर्वणः ।
मध्यपर्व च यच्छिष्टं मध्ये मूलाग्रपर्वणोः ॥ ८१ ॥
सपर्वद्वयमङ्गुष्ठं शेषाः पर्वत्रयान्विताः ।
सार्धत्रिरससार्धेषुमात्रव्यासस्तलस्य तु ॥ ८२ ॥
मूले मध्ये तथाग्रे स्यादथाङ्गुष्ठस्य मूलतः ।
आ तर्जीमूलतोऽन्यंशैस्तथाङ्गुष्ठस्य मूलतः ॥ ८३ ॥
शुकोदराख्यो वेदांशैर्मणिबन्धान्तमायतः ।
तद्घनं सार्धयुग्मांशं करपार्ष्ण्या घनं कला ॥ ८४ ॥
तदग्रं षोडशांशोनमथाग्रं यत् तलस्य तु ।
मांसलं सार्धकोलं स्यात् पार्ष्णिरत्रांशविस्तृतः ॥ ८५ ॥
शुकोदरतिर्यंशाच्छेषान्निम्नं तले स्मृतम् ।
चक्रशङ्खाब्जमकरस्वस्तिकाद्यङ्कवत् तलम् ॥ ८६ ॥
कर्णोर्ध्वे स्याच्छिरोनाहः स चाष्टात्रिंशदङ्गुलैः ।
कर्णयोर्मध्यनाहः प्राग् द्वाविंशत्यङ्गुलैः स्मृतः ॥ ८७ ॥
तत्पृष्ठनाहः सूर्यांशैः कर्णौ कोलकतः पृथक् ।
मूर्ध्नो मध्यात् तु केशान्तमानमुक्तं नवाङ्गुलम् ॥ ८८ ॥
पार्श्वयोस्तावदेव स्यादथ केशाक्षिसूत्रयोः ।
मध्ये तु भ्रूयुगं कुर्यात् सज्यचापानतं शुभम् ॥ ८९ ॥
कर्णोर्ध्वसूत्रं भ्रूतुल्यं ततो मात्राद् भ्रुवोर्नतिः(?) ।
भ्रुवोरन्तरमर्धांशाच्छरांशैरायतं भ्रुवोः ॥ ९० ॥
भ्रूमध्यतारं द्वियवं कृशमग्रं तयोः क्रमात् ।
कनीनिका कलायामव्यासा स्यादथ पक्ष्मवः ॥ ९१ ॥
सितांशः कृष्णबिम्बश्च शुक्लांशोऽन्ते च तत्समः ।
पक्ष्मवो नेत्रविस्तारो नेत्रान्तोऽर्धयवोऽरुणः ॥ ९२ ॥
कृष्णदृष्टिर्यूकसमा ज्योतिर्मण्डलकं यवम् ।
ऊर्ध्वाधोवर्मविस्तारो यवं चार्धयवं भवेत् ॥ ९३ ॥

१. 'क्षा', २. 'भ्र' क. पाठः.

नेत्रयोरन्तरं युग्ममात्रं सद्विंयवं भवेत् ।
नासापुटान्तसीमान्तव्यासपादांशपक्षतः ॥ ९४ ॥
मध्यव्यासस्ततोऽर्धेन तदूर्ध्वे तस्य चार्धतः ।
गोजीमूलात् तु नासाग्रं द्व्यङ्गुलोच्चं पुटोर्ध्वतः ॥ ९५ ॥
सयवांशततं नासापुटौ[1] यवघनौ स्मृतौ ।
नासाद्वारोच्चविस्तारौ पञ्चसप्तयवैर्मतौ ॥ ९६ ॥
तिलपुष्पसमौ नासापुटौ निष्पावसन्निभौ ।
मध्यकुड्योच्चतांशेन तद्व्यासोऽर्धयवः स्मृतः ॥ ९७ ॥
अध्यर्धयवलम्बं स्यान्नासाग्रं पुटसूत्रतः ।
सार्धवेदयवायामा गोजी[2] तस्यार्धतस्तता ॥ ९८ ॥
सपादभागदीर्घं स्यादुत्तरोष्ठं तु पालिका ।
यवव्यासा च तद्व्यासः सार्धत्रियव ईरितः ॥ ९९ ॥
आसृक्वान्तायतं तारमानुपूर्व्या कृशं भवेत् ।
पाली त्रिवक्रावनता तावदास्यायतं भवेत् ॥ १०० ॥
नन्दाष्टादशघार्धर्तुयवतारायतोच्छ्रितम् ।
अधरं स्यात् तु तत्पाली त्वधः सार्धयवं ततः ॥ १०१ ॥
अधराधस्तु चिबुकं सार्धाष्टयवमानतः ।
चिबुकस्य तथा निम्नं हनुस्त्रियवमुन्नता ॥ १०२ ॥
हनुरर्धायतं वृत्ता सार्धरामाङ्गुलात् तता ।
कर्णबन्धाद्धनोर्मध्यं दशाङ्गुलमुदीरितम् ॥ १०३ ॥
गलवेशः सपादांशाद्धनोस्ताद्विगुणं गलात् ।
कर्णवेशस्तु नेत्रान्तात् सप्तांशैः श्रवणान्तरम् ॥ १०४ ॥
कर्णव्यासो नेत्रदैर्ध्याद् दृक्सूत्रोर्ध्वोन्नतिस्तथा ।
तदधः कर्णबन्धः स्यात् सयवांशद्वयायतः ॥ १०५ ॥
पूर्वापरे कर्णनाळे सार्धवेदांशमायते ।
मात्रार्धमात्रविस्तारे स्यातां सार्धांशतो घने ॥ १०६ ॥

1. 'द्यो', 2. 'उजी' क. पाठः.

षड्यवं नालरन्ध्रं स्यात् पिप्पल्यंशायता[1] स्मृता ।
तदर्धविस्तृता वाथ पिच्चूषी स्यात् कलायता ॥ १०७ ॥
तद्व्यासोऽशादक्षिसूत्रादधश्छिद्रं चतुर्यवम् ।
चतुर्यवायता कर्णपाली सार्धयवाद् घना ॥ १०८ ॥
सार्धमात्रं ततः पृष्ठकर्णपृष्ठविधुस्तथा ।
पश्चात् कण्ठोर्ध्वकेशान्तेऽर्धांशनिम्ना कृकाटिका ॥ १०९ ॥
कृकाटिकाप्रदेशे तु कण्ठव्यासोऽष्टमात्रतः ।
साष्टार्धमात्रं तदधः स्कन्धसीम्नि दशाङ्गुलैः ॥ ११० ॥
पश्चात् कण्ठस्य चायामो वेदांशैश्च त्रिभिर्यवैः ॥
हिक्कासूत्रोर्ध्वतः स्कन्धसन्धिर्वेदांशमुन्नतः ॥ १११ ॥
आ हिक्कासूत्रतो नीचौ (न?) स्कन्धौ सप्तांशतो घनौ ।
पश्चात् कण्ठादधोंशेन ककुत् तस्मादधोङ्गुलैः ॥ ११२ ॥
सप्तविंशतिभिः पृष्ठवंशस्त्वाःकटिसन्धितः ।
ककुद्देशादधो हित्वा वेदांशात् कक्षयोः स्थितिः ॥ ११३ ॥
पृष्ठे तु कक्षयोर्मध्यव्यासः स्यात् तारकाङ्गुलैः ।
रसाङ्गुलयवैः कक्षादूर्ध्वं बाह्वोः समुच्छ्रयः ॥ ११४ ॥
स्कन्धसन्धेरंसपीठं सार्धबाणांशकैर्भवेत् ।
पश्चादास्तनसूत्रान्तमर्कांशे फलकेऽसयोः ॥ ११५ ॥
ककुदोऽधोंऽसफलकामध्यव्यासो दशाङ्गुलः ।
तदधस्त्र्यङ्गुलो व्यासो वंशो द्व्यङ्गुलनिम्नवान् ॥ ११६ ॥
वंशपार्श्वादांसपीठं बृहती सप्तमातृके ।
बृहत्योरास्तनं मध्ये घनं षोडशमात्रकैः ॥ ११७ ॥
अधो बृहत्याः कट्यन्तमायामः सप्तमातृकः ।
विकारांशैर्घनं तस्मादधश्चात्यष्टिमात्रकैः ॥ ११८ ॥
सार्धत्रयोदशांशैः स्यात् कट्यास्तत्खण्डकान्तरम् ।
अर्धोनकृतिमात्रा स्यात् कटिबन्धस्य विस्तृतिः ॥ ११९ ॥

---

१. 'श', २. 'प' क. पाठः.

सार्धनन्दांशविस्तारौ स्फिजोः पिण्डौ सुवर्तुलौ ।
सार्धवेदांशतश्चोरुमूलात् स्फिक्पिण्डनिर्गतिः ॥ १२० ॥
स्फिक्पिण्डौ मेढ्रसूत्राधः सार्धवेदांशलम्बनौ ।
वृत्ता ग्रीवाथ तन्नाहे युग्मरेखा समन्विता ॥ १२१ ॥
स्तनमन्तरयोर्हिक्काकक्षसन्धिस्ततोऽपि च ।
सार्धत्रयोदशांशैः स्युः कक्षात् कक्षधरा ततिः ॥ १२२ ॥
सपादांशद्वयं सार्धमात्रं हृदयनिम्नतः ।
स्तनपीठोन्नतिर्द्व्यंशात् सयवं कुचवर्तुलम् ॥ १२३ ॥
द्वियवोच्चततं चारुवर्तुलं स्तनचूचुकम् ।
हिक्का द्वियवनीचा स्याज्जानुयुग्मं द्विमात्रकम् ॥ १२४ ॥
षड्यवव्यासनिम्ना स्याद् रम्या नाभिः प्रदक्षिणा ।
नाभेः सयवबाणांशा श्रोणी पार्श्वे रसांशका ॥ १२५ ॥
सार्धत्र्यंशा कटिः श्रोण्या तच्छेषो मेढ्रमण्डलम् ।
सयवद्वयबाणांशदीर्घं सयववृत्ततः ॥ १२६ ॥
लिङ्गं बीजावलम्बस्तु सवेदांशयवद्वयः ।
तद्व्यासस्तावतैव स्यान्मेढ्रादूर्ध्वोरुबन्धनम् ॥ १२७ ॥
त्र्यङ्गुलं त्रियवोत्तुङ्गं जानुवृत्तं तु भागतः ।
तद्घनं सार्धकलया पार्श्वबन्धस्तु भागतः ॥ १२८ ॥
जानुपश्चिमभागोच्चं सार्धत्र्यंशं तु भागतः ।
विस्तृतं तुच्छनिम्नाद्यमन्यदूह्यमतः परम् ॥ १२९ ॥
सर्वतः परिपूर्णाङ्गं मानोन्मानादितः समम् ।
श्रेष्ठेन दशतालेन बेरं कुर्वीत सुन्दरम् ॥ १३० ॥
इत्थं दशतालेन तु मुख्ये यथालक्षणम् ।
उक्तं खलु बेरोचितपुम्मानमशेषादिह ॥ १३१ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे क्रियापादे
उत्तमदशतालपुरुषमानविधिपटलं
एकचत्वारिंशः ।

अथ द्विचत्वारिंशः पटलः।

मध्येन दशतालेन स्त्रीमानं कथ्यतेऽधुना।
भागः कचान्त उष्णीषात् तस्माद् भागः सपञ्चयवः॥ १॥
नेत्रान्तः स्यात् ततो नासापुटान्तः सचतुर्यवः।
भागः स्यादथ हन्वन्तं रामांशैस्तु सपञ्चयवैः॥ २॥
हनोर्भागस्तु(?) कण्ठान्तस्ततो हृन्नाभियोनयः।
पृथक् त्रयोदशांशैः स्युरूरू षड्विंशदङ्गुलैः॥ ३॥
भागेन जानुस्तस्माच्च जङ्घे षड्विंशदङ्गुलैः।
भागेन पादौ च तलौ भागायामौ प्रकल्पयेत्॥ ४॥
अङ्गुष्ठतर्जनी चोभे भागायामे पृथक् स्मृते।
क्रमादर्धाङ्गुलोनाः स्युः शेषास्त्वङ्गुलयः पृथक्॥ ५॥
अङ्गुष्ठो द्व्यङ्गुलव्यासस्तर्जैकाङ्गुलविस्तृता।
सार्धसप्तयवा मध्यानामा सप्तयवैस्ततः॥ ६॥
कनिष्ठा पञ्चयवव्यासा स्वव्यासार्धतता नखाः।
उदञ्चिताग्राः किञ्चित् ते पार्ष्णिव्यासस्तु भागतः॥ ७॥
तावदुच्चो भवेत् पार्ष्णिस्तलव्यासः शराङ्गुलैः।
रसाङ्गुलैस्तलाग्रं स्यादक्षगुल्फौ शराङ्गुलैः॥ ८॥
नलका भागविस्तारा जङ्घाव्यासो रसाङ्गुलैः।
जानुव्यासः सप्तमात्रैरूर्वोर्व्यासस्तु तालतः॥ ९॥
कटिर्द्वितालविस्तारा सप्तांशैर्जघनोर्ध्वतः।
चतुर्मात्रैरधोव्यासस्तच्चाश्वत्थदलाकृति॥ १०॥
पीवरं तद् भवेच्चारु श्रोणी कृत्यङ्गुलैस्तता।
पञ्चयवव्यासनिम्ना स्यान्नाभिर्मध्येऽन्ततस्तनुः॥ ११॥
रुद्रमात्रैस्तु विस्तीर्णरोमराज्या च शोभिता।
स्तनाधोऽतिजगत्यंशैर्नन्दांशैः स्यात् प्रतिस्तनम्॥ १२॥
रामांशैश्चूचुकव्यासः सार्धभागोन्नतौ स्तनौ।
स्तनाक्षमर्धमात्रं स्याद् द्वियवः स्यात् तदुन्नतिः॥ १३॥

कक्षयोरन्तरव्यासो भवेत् सप्तदशाङ्गुलैः ।
सबाहुसीमाविस्तारः स्यादेकत्रिंशदङ्गुलैः ॥ १४ ॥
उत्कृत्यंशैर्भुजायामः कोर्परः स्यात् कलासमः ।
धृत्यंशैस्तु प्रकोष्ठं स्यात् तलं सप्ताङ्गुलायतम् ॥ १५ ॥
वेदेष्वृतुशराम्नायैरायताङ्गुलयः क्रमात् ।
नन्दर्षिवस्वृषिरसयवैरङ्गुलयस्तताः ॥ १६ ॥
स्वाग्रव्यासे षडंशे तु वेदांशैर्नखविस्तृतिः ।
यवाधिको नखायामस्तलव्यासो रसाङ्गुलैः ॥ १७ ॥
रामेषुषट्सप्तमात्रैर्मणिबन्धश्च कोर्परः ।
बाहुमध्यं च मूलं च विस्तीर्णं स्यात् क्रमेण तु ॥ १८ ॥
ग्रीवा सप्ताङ्गुलव्यासा रुद्रांशैर्मुखविस्तृतिः ।
वृत्तायतं भवेद् वक्त्रं सार्धांशकलया भ्रुवोः ॥ १९ ॥
केशान्तात् संस्थितिर्दैर्घ्यं तयोः सद्वियवा कला ।
सयवांशात् पुटादास्यं गोजिदैर्घ्यं तदर्धतः ॥ २० ॥
ओष्ठपाली यवतता तच्छेषेणौष्ठविस्तृतिः ।
भागेन स्यात् तदायामस्त्रिवर्गोत्तरपालिका ॥ २१ ॥
तावदास्यायतं प्रोक्तमधरः सयवाङ्गुलः ।
तत्पाली यवविस्तीर्णा सयवद्वयभागतः ॥ २२ ॥
तद्दैर्घ्यं षड्यवैस्तुङ्गं तस्मात् सार्धांशतो हनुः ।
चिबुकं द्वियवं तत्र कण्ठवेशस्ततो हनोः ॥ २३ ॥
सार्धत्रिमात्रैः कथितः कर्णव्यासः कलास्यं तु ।
दैर्घ्यं सद्वियवाध्यंशैर्नाललम्बः शरांशकैः ॥ २४ ॥
तच्च साभरणं कुर्याद् भुजौ गोवालसुन्दरौ ।
ऊरू करिकराकारौ स्याद् वपुः सर्वसुन्दरम् ॥ २५ ॥
अनुक्तं पूर्ववच्छीर्षं सर्वमूह्यं विपश्चिता ।

## मध्यमदशतालस्त्रीमानम् ।

मध्येन दशतालेन मानं पुंसोऽथ कथ्यते ॥ २६ ॥

---

१. 'ध्यह' क. पाठः.

सयवद्वयभागेन शिरःकण्ठाङ्घ्रिजानुषु ।
स्यादुच्चमथ केशान्तान्नेत्रान्तं च पुटान्तकम् ॥ २७ ॥
हन्वन्तं प्रोक्तमानेन स्यात् कण्ठेऽर्धाङ्गुलं गलम् ।
हिक्काया(?) हृदयान्तं स्याज्जगत्यंशैः सषड्यवैः ॥ २८ ॥
तस्मान्नाभिस्ततो मेढ्रं साङ्गुलैर्द्वादशाङ्गुलैः ।
सषड्यवाभिकृत्यंशैरूर्वोर्दैर्घ्यमुदाहृतम् ॥ २९ ॥
जङ्घादैर्घ्यं च तत्तुल्यमत्यष्ट्यंशैस्तलायतिः ।
उत्कृत्यंशैर्बाहुदैर्घ्यं कलायामस्तु कोर्परः ॥ ३० ॥
विंशत्यंशैः प्रकोष्ठः स्यादामध्यामं तलायतिः ।
त्रयोदशाङ्गुलैश्चाथ सबाह्वन्तरविस्तृतिः ॥ ३१ ॥
सनन्दत्रिंशदंशैः स्यात् सार्धरुद्राङ्गुलैर्मुखम् ।
मूलानि कण्ठबाहूनां जानुमध्यद्वयं त्वधः ॥ ३२ ॥
हिक्कासूत्राच्च कक्षान्तं प्रत्येकं नवमात्रकम् ।
कक्षाधरस्तु कलया प्रकृत्यंशैरुरस्ततिः ॥ ३३ ॥
स्तनान्तरं स्तनाद्धिक्का हिक्काकक्षान्तरेऽङ्गुलैः ।
त्रयोदशैः कुक्षिमध्यं सार्धपञ्चदशाङ्गुलैः ॥ ३४ ॥
तस्मात् कलाधिकव्यासा श्रोणितः स्यात् कलाधिका ।
कटिव्यासस्तथैवोर्वोर्मूलेऽशैस्तु त्रयोदशैः ॥ ३५ ॥
तयोर्मध्ये च रुद्रांशैः सप्तांशैर्जङ्घयोस्ततिः ।
श्रुत्यंशैर्नलकाव्यासः सपादैस्तु शराङ्गुलैः ॥ ३६ ॥
अक्षगुल्फद्वयव्यासः पार्ष्णिव्यासोच्चता ततः ।
सयवद्वयवेदांशैः सपादेष्वङ्गुलैस्ततः ॥ ३७ ॥
पदमध्यं पदाग्रं च ततं सार्धरसाङ्गुलैः ।
सपादवेदांशोऽङ्गुष्ठस्तर्जन्यस्माद् यवाधिका ॥ ३८ ॥
सार्धत्र्यंशायता मध्या त्र्यंशदीर्घा त्वनामिका ।
सार्धद्व्यंशा कनिष्ठा च विस्तारेऽपि यथाक्रमम् ॥ ३९ ॥
कलया सयवांशेन मात्रात् सप्तयवैरपि ।
पञ्चयवैश्च नखव्यासा वस्विषुश्रुतिसंमितैः ॥ ४० ॥

यवैः सार्धाभिरामैः स्यात् स्वव्यासार्धात् तदायतिः ।
अथ वस्वृषिसार्धेषुसार्धरामाङ्गुलैः क्रमात् ॥ ४१ ॥
बाहुकोर्परयोर्व्यासः प्रकोष्ठमणिबन्धयोः ।
मणिबन्धात् तलायामः सप्तांशैः स्यात् षडङ्गुलैः ॥ ४२ ॥
मध्यायास्तु सपादेषुमात्रे दाशन्यनामिके ।
कनिष्ठाङ्गुष्ठयोर्दैर्घ्यं सपादैश्चतुरङ्गुलैः ॥ ४३ ॥
सार्धद्व्यंशैस्तलव्यासः सार्धद्व्यंशघनं तलम् ।
अङ्गुष्ठाद्यङ्गुलीनां तु स्यात् सूर्यवसुनन्दकैः ॥ ४४ ॥
यवैर्वसुरसैस्तासां विस्तारः क्रमशो मतः ।
स्वाग्रव्यासे तु रामांशे द्व्यंशा स्यान्नखविस्तृतिः ॥ ४५ ॥
स्वस्वव्यासान्नखायामः प्रशस्तो द्वियवाधिकः ।
शिश्नायामः शरांशः स्यात् तद्व्यासो द्व्यङ्गुलः स्मृतः ॥ ४६ ॥
मुष्कव्यासोच्छ्रयौ भागौ भालं नन्दांशमायतम् ।
पश्चात् कर्णान्तरायामो भवेन्मात्रैस्त्रयोदशैः ॥ ४७ ॥
नेत्रायामान्तरायामौ सेपादांशद्वयेन हि ।
षडयवा नेत्रविस्तारस्तावत् स्यात् कृष्णमण्डलः ॥ ४८ ॥
तत्पार्श्वमण्डले श्वेते स्यातां पञ्चयवायते ।
यवप्रमाणं ज्योतिः स्यात् कृष्णमण्डलमध्यगम् ॥ ४९ ॥
यूकामात्रा तु दृष्टिः स्याद् यवमाना कनीनिका ।
अपाङ्गेऽर्धयवे रक्ते द्वियवेनोर्ध्ववर्म यत् ॥ ५० ॥
अधोवर्मार्धयवतो भ्रूमध्यं नेत्रसूत्रतः ।
सपादकलया कार्यं तावान् कर्णोच्छ्रयो भवेत् ॥ ५१ ॥
शराङ्गुलं भ्रुवोर्दैर्घ्यं तन्मध्यं द्वियवात् ततम् ।
तदन्तरं स्यादर्धांशात् तयोरानतिरङ्गुलात् ॥ ५२ ॥
भ्रुवौ चापाकृता दीर्घे कर्णौ द्वियवभागतः ।
नाळालम्बोऽपि तावान् स्यात् साधिकांशः समूषणः ॥ ५३ ॥

---

१. 'ल' क पाठः.

पूर्वनालततिर्मात्रात् पश्चान्नालं तदर्धतः ।
तयोर्घनं त्वर्धमात्रात् कर्णमूलमपाङ्गतः ॥ ५४ ॥

सप्ताङ्गुलं भवेद् गोर्जामूलान्नासाग्रतुङ्गता ।
यवोनकलया कार्या षड्यवः पुष्करोच्छ्रयः ॥ ५५ ॥

तद्विस्तारो यवोनः स्यादूर्ध्वनासाङ्गविस्तृता ।
पुटावर्धाङ्गुलसमौ स्यातां यवघनौ च तौ ॥ ५६ ॥

गोज्यायामोऽर्धमात्रं स्यात् तद्व्यासो द्वियवः स्मृतः ।
उत्तरोष्ठततिस्त्वर्धमात्रात् पाङ्क्तिततिर्यवात् ॥ ५७ ॥

तद्दैर्घ्ये सयवाद् भागात् सयवांशाधरे ततिः ।
तद्दैर्घ्ये द्विगुणं तस्मात् तत्पाली यवसंमिता ॥ ५८ ॥

तदुच्चं षड्यवं शेषो हनुश्च स्याद्धनोर्गलः ।
साध्यर्धयवमात्रः स्यात् ततः सार्धद्विमात्रतः ॥ ५९ ॥

कण्ठवेशो भवेच्छेषं प्राग्वदूह्यं विचक्षणैः ।

मध्यमदशतालपुरुषमानम् ।

---

कनिष्ठदशतालेन स्त्रीमानमथ कथ्यते ॥ ६० ॥

सार्धेनांशैर्मुखायामः केशान्ताक्ष्यन्तविस्तृतिः ।
भागात् ततः पुटान्तं च सयवैर्वेदमात्रकैः ॥ ६१ ॥

ततो हन्वन्तरं तावत् कण्ठान्तं च हनोस्तथा ।
कण्ठादधूच्च हृदो नाभिः सार्धसूर्याङ्गुलान्तरम् ॥ ६२ ॥

वेरे समविभक्ते तु सषोडशशताङ्गुलैः ।
उष्णीषकक्षजान्वङ्घ्रितलोच्चं वेदमात्रकैः ॥ ६३ ॥

सार्धेनांशैर्मुखायामः केशान्तादक्षिसूत्रतः ।
सपादवेदमात्रैः स्यात् ततः सयवभागतः ॥ ६४ ॥

पुटान्तोऽस्माच्च हन्वन्तमथाकण्ठादधूदन्तकम् ।
हृदो नाभिस्ततो योनिः सार्धसूर्याङ्गुलैः पृथक् ॥ ६५ ॥

अभिक्रत्यंशकैरूरू जङ्घे चोर्वोः समे मते ।
षोडशांशैः पदायामो बाहू चोर्वोः समौ मतौ ॥ ६६ ॥

कोर्परौ तु कलायामौ प्रकोष्ठोऽष्टादशाङ्गुलैः ।
सार्धत्र्यंशैस्तलायामः षडंशैर्मध्यमायता ॥ ६७ ॥
तर्जनामे शरांशैः स्तां भागाद् ज्येष्ठाकनिष्ठिके ।
ज्येष्ठादिकाङ्गुलिव्यासो नन्दर्घ्यष्टर्षिषड्यवैः ॥ ६८ ॥
स्वाग्रव्यासे त्रिभक्ते द्व्यंशौ[2] नखविस्तृतिः ।
अतो यवाधिकं दैर्घ्यं तलव्यासो रसांशतः ॥ ६९ ॥
घनं तलस्य कलया म[ ]न्धप्रकोष्ठयोः ।
मध्यकोर्परबाह्वोश्च त्रिवदेपुरसस्ततम् ॥ ७० ॥
रुद्रमात्रैर्मुखव्यासो [ ]वा सप्ताङ्गुलैस्तता ।
बाहुमूलस्य जान्वोश्च व्यासः सप्तांशतस्ततिः ॥ ७१ ॥
कक्षान्तरस्यात्यष्ट्यंशैर्नन्दांशैः स्तनविस्तृतिः ।
तयोस्तदर्धमुत्सेधश्चूचुके तु त्रिमात्रक ॥ ७२ ॥
अर्धांशतः स्तनाक्षः स्यात् तदुच्चं द्वियवं स्मृतम् ।
स्तनाधोऽतिजगत्यंशैर्मध्ये रुद्राङ्गुलैस्ततिः ॥ ७३ ॥
श्रोणः कृत्यंशविस्तारा सक्कृत्यंशैः कटिस्तता ।
ऊर्वोर्व्यासस्तु सूर्यांशैर्जङ्घामध्ये षडंशकैः ॥ ७४ ॥
नलका भागविस्तारा त्वक्षगुल्फौ शराङ्गुलैः ।
पार्ष्णिव्यासोन्नतिर्भागात् तलमध्याग्रयोरपि ॥ ७५ ॥
व्यासः स्याच्छरषण्मात्रैर्ज्येष्ठोच्चं भागतो भवेत् ।
तत्समा तर्जनी मध्या सार्धरामाङ्गुलायता ॥ ७६ ॥
त्रिमात्रानामिका सार्धद्व्यङ्गुला स्यात् कनिष्ठिका ।
रसर्षिसार्धर्षिवसुविकारयवविस्तृताः ॥ ७७ ॥
पादाङ्गुल्यः कनिष्ठाद्याः स्वव्यासार्धतता नखाः ।
तत्पादोनायता वृत्ता उन्नताग्रा मनाक् च ते ॥ ७८ ॥
स्यात् केशान्ताद् भ्रुवोः सूत्रं सपादकलया ततम् ।
पुटादधोऽङ्गुलादास्यं गोज्यायामस्तदर्धतः ॥ ७९ ॥

१. 'ग' क. पाठः. २. 'द्योनख' ख. पाठः.

आस्यव्यासस्तु वेदांशैस्त्रिवर्गोचरपालिका ।
कलायतः स्यादधरस्तदर्धेन तु विस्तृतः ॥ ८० ॥

तत्पाली यवमाना स्याच्छेषं बिम्बफलाकृति ।
सयवद्व्यंशतो नेत्रदैर्ध्यं व्यासस्तु षड्यवः ॥ ८१ ॥

हनोस्तथा कण्ठवेशः सार्धरामाङ्गुलैः स्मृतः ।
गोजीमूलात् तु नासोच्चं स्यात् सषड्यवमात्रतः ॥ ८२ ॥

कर्णायामस्तु भागेन सपादकलया ततिः ।
भागेन नाळालम्बः स्याच्छेषमुक्तं हि पूर्ववत् ॥ ८३ ॥

मध्यमदशतालेन स्त्रीमानं चापि तेन पुंमानम् ।
दशतालात् तु कनिष्ठात् स्त्रीमानस्येह लक्षणं कथितम् ॥ ८४ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे
क्रियापादे स्त्रीपुंमानादिलक्षणपटलो
द्विचत्वारिंशः ॥

---

अथ त्रिचत्वारिंशः पटलः ।

अथ षोडशमूर्तीनामाकाराद्यं निगद्यते ।
तत्रोमास्कन्दयुक्तस्य शम्भोर्लक्षणमुच्यते ॥ १ ॥

ऋज्वागतं रजोभावमर्धपर्यङ्कमासनम् (?) ।
वामाङ्घ्रिं शाययेत् पीठे दक्षिणं तु प्रलम्बयेत् ॥ २ ॥

आसनान्ताच्च केशान्ताज्जान्वन्तं तु समं भवेत् ।
जानुनोर्बाह्यपार्श्वे च जान्वन्ताद् बाहुपार्श्वकम् ॥ ३ ॥

परहस्तद्वयस्यापि मध्यश्च मणिबन्धयोः ।
ऊर्ध्वकायसमं कुर्यात् सर्वमेतद् यथाक्रमम् ॥ ४ ॥

मध्यसूत्रं किरीटाग्राद् गुल्फमध्ये तु लम्बयेत् ।
प्रविष्टं दक्षिणं जानु सूत्राद् द्व्यङ्गुलं भवेत् ॥ ५ ॥

मध्यसूत्रादिनांशैस्तु तदङ्घ्रिनलकान्तरम् ।
मन्वंशैरन्तरं सूत्राद् दक्षिणात् पाणिमध्यतः ॥ ६ ॥

सूत्रात् पञ्चदशांशैः स्यात् तथा वामतलान्तरम् ।
असव्यपाणिमध्याग्रं स्तनसूत्रसमोन्नतम् ॥ ७ ॥
वामोरोर्वामहस्तस्य चान्तरं द्वित्रिमात्रतः ।
कर्तरीकरयोरग्रे हिक्कासूत्रसमे स्मृते ॥ ८ ॥
श्रोणीकोर्परयोर्मध्ये पञ्चांशं वा षडंशकम् ।
मेढ्रादक्षान्तरं तद्वत् कुक्षिस्पृग् प्राणसूत्रकम् ॥ ९ ॥
द्विसप्तातिजगत्यर्कमात्रैर्मध्यमसूत्रतः ।
मौल्यग्रं कर्तरीहस्तावन्तर्वा बहिराननौ ॥ १० ॥
परशुं च कुरङ्गं च कुर्याद् दक्षिणवामयोः ।
अभयं दक्षिणे हस्ते वामे तु कटकं करे ॥ ११ ॥
शङ्खपत्रकनक्राख्यमण्डले वामदक्षिणे ।
मौलितुङ्गं तु केशान्तात् सत्रिपादद्वितालकम् ॥ १२ ॥
सार्धद्वयं द्वितालं वा तच्च कुर्याद् सलक्षणम् ।
वामपार्श्वे सहासीनां कुर्याद् देवस्य पार्वतीम् ॥ १३ ॥
लम्बितं शयितं पादं कुर्याद् वामं च दक्षिणम् ।
किञ्चिद् देवाश्रिता नम्रवदना समलङ्कृता ॥ १४ ॥
वरदोत्पलसंयुक्ता वामदक्षिणहस्तयोः ।
वामोरुबाह्ये पीठस्थवामहस्ताथवा भवेत् ॥ १५ ॥
वेदांशैरुत्कृतिमितैः स्कन्दो मध्येऽनयोर्भवेत् ।
स्वतुङ्गं पञ्चतालेन विभज्याङ्गानि कारयेत् ॥ १६ ॥
अङ्गुलेन शिरोमानं केशान्तादक्षिसूत्रकम् ।
सार्धत्रिमात्रैस्तैरेव पुटान्तं च ततो हनुः ॥ १७ ॥
त्रिमात्रैः स्यात् तथा कण्ठो नन्दनागाब्धिमात्रकैः ।
हिक्काया हृत् ततो नाभिर्नाभेर्मेढ्रं च संमितम् ॥ १८ ॥
ऊर्वायामस्तु सूर्यांशैः कला जान्वथ जङ्घिका ।
रुद्रांशैः कलया पादस्तलायामो दशाङ्गुलः ॥ १९ ॥
मन्वङ्गुलायतौ बाहू प्रकोष्ठोऽपि दशाङ्गुलः ।
वेदांशैः स्यात् तलायामो मध्या च चतुरङ्गुला ॥ २० ॥
सार्धरामाङ्गुलायामा तर्जनी चाप्यनामिका ।
कनिष्ठाङ्गुष्ठिके त्र्यंशे सोत्पलं स्यात् करद्वयम् ॥ २१ ॥

आकुञ्चिताभ्यां पादाभ्यां स्थितं कुर्यात् सलक्षणम् ।
चन्द्रशेखरलक्ष्माथ समपादस्थितो भवेत् ॥ २२ ॥

उष्णीषे च ललाटे च नासाग्रे हनुमध्यमे ।
हिक्काहृदयगुह्यारःपादमध्येषु लम्बयेत् । २३ ॥

कर्तर्यग्रं तु हिक्कान्तं स्तनान्तमभयाग्रकम् ।
वरदं नाभिसीमान्तं कट्यन्तं वापि कारयेत् ॥ २४ ॥

सूत्रादभयमध्यान्तं त्रिपञ्चाङ्गुलविस्तृतम् ।
अर्कांशैः परहस्तान्तं दशाङ्गुलमथापि वा ॥ २५ ॥

अत्यष्टिधृतिमात्रैर्वा सूत्रात् कोर्परमध्यकम् ।
एकाङ्गुलेनोरुमूले जानुमध्यं तु भागतः ॥ २६ ॥

पञ्चांशैर्जङ्घयोर्मध्यभागात् पार्ष्ण्यन्तरं भवेत् ।
और्ध्वकर्तरिहस्तौ तु कुठारमृगधारिणौ ॥ २७ ॥

जटामकुटवामस्थबालचन्द्रोऽहिभूषणः ।
ऋज्वागतः प्रवालाभः कार्यः स्याच्चन्द्रशेखरः ॥ २८ ॥

समभङ्गोऽतिभङ्गो वा भवेद् वृषभवाहनः ।
ऋजुः स्थितो दक्षिणाङ्घ्रिर्वामपादोऽस्य कुञ्चितः ॥ २९ ॥

तिरश्चीनाङ्घ्रिजङ्घो वा लम्बसूत्रस्य चोच्यते ।
उष्णीषाद् वामभाले तु वामनेत्रे पुटान्तके ॥ ३० ॥

वामस्तने च नाभ्यूरुपार्ष्णिमध्यस्य लम्बनम् ।
स्यात् तिरश्चीनजङ्घोऽयमतिभङ्गे तु नान्यथा ॥ ३१ ॥

नाभेर्वामे च वामोरुमध्ये दक्षिणगुल्फके ।
सूत्रं तु पातयेन्नाभेरूर्ध्वं प्राग्वदिहापि च ॥ ३२ ॥

नतिमानं शरांशैः स्याद् देवस्य वृषमस्तके ।
न्यस्तव्यः कोर्परो वामो हिक्कातोऽष्टादशाङ्गुलः ॥ ३३ ॥

कोर्परावस्तथा पीठादूर्ध्वं यावद् वृषोन्नतिः ।
कटीदेशावलम्बी वा वामेतरकरो भवेत् ॥ ३४ ॥

---

१. 'त्रि' क. ख. पाठः.

परहस्तादिकं सर्वं चन्द्रशेखरवद् भवेत् ।
समभङ्गास्थिता देवी लम्बवामकरा भवेत् ॥ ३५ ॥
सोत्पला दक्षिणे हस्ते बाहुः स्तनमितो विभोः ।

सोमास्कन्दशिवलक्षणम् ।

---

नटेश्वरश्चतुर्बाहुस्त्रिणेत्रश्चन्द्रशेखरः ॥ ३६ ॥
गृहीतोऽसोऽर्धमानात्तु नतिमानं दशाङ्गुलम् ।
सूर्याङ्गुलं वा सूत्रस्य लम्बनं त्वथ कथ्यते ॥ ३७ ॥
उष्णीषात् सव्यभाले च तत्पुटे हनुमध्यतः ।
हिक्काना(भो? भ्यो)स्तथा मध्ये सव्यगुल्फे च पातयेत् ॥ ३८ ॥
प्रसारितभुजाग्रं तु विकारांशायतं ततः ।
भागात् परकराग्रं तदष्टपञ्चाशदङ्गुलैः ॥ ३९ ॥
सूत्रात् साग्निकराग्रं स्यात् ततो डमरुकाग्रकम् ।
चत्वारिंशाद्भिरष्टांशैः कर्णसीमासमो(भ? द)यम् ॥ ४० ॥
सूर्यांशैर्दक्षिणे पार्श्वे सूत्रात् कक्षान्तरं भवेत् ।
प्रसारितजटाभारः किञ्चित् प्रहसिताननः ॥ ४१ ॥
व्याघ्रचर्माम्बरः कार्यो ह्यपस्मारोपरि स्थितः ।
गणैर्देवर्षियक्षाद्यैर्विघ्नेशस्कन्दमातृभिः ॥ ४२ ॥
भृङ्गीशेन महाकाल्या पार्वत्या वृषभेण च ।
मृदङ्गं नादयन् नन्दी सूपविष्टश्चतुर्भुजः ॥ ४३ ॥
हलपल्लवपाणिः स्याद्वन्दनचा च समन्वितः ।

भुजङ्गत्रासनृत्तलक्षणम् ।

---

स्थितदक्षिणपादः स्यात् कुञ्चितान्यपदाम्बुजः ॥ ४४ ॥
उष्णीषाद् दक्षिणे भाले दक्षिणेऽथ पुटे ततः ।
हिक्कामध्ये नाभिदेशाद् दक्षिणे ह्यङ्गुले ततः ॥ ४५ ॥
मेढ्रमूले तथा पार्ष्ण्योर्मध्ये सूत्रं प्रलम्बयेत् ।
साचीकृतशरीरः स्याद् वामांशावनतातत:(?) ॥ ४६ ॥

दक्षिणे वरदोऽधस्तादूर्ध्वकर्तरिपाणिना ।
गङ्गां दधानो वामोर्ध्वकरेण हरिणं दधत् ॥ ४७ ॥
अधोवामकरेणोमामालिङ्ग्य समभङ्गिनीम् ।
भगीरथेन चान्यैश्च मुनिभिर्वन्दितो भवेत् ॥ ४८ ॥
इत्थं गङ्गाधरं कुर्याच्छेषमूह्यं तु पूर्ववत् ।

गङ्गाधरलक्षणम् ।

त्रिपुरान्तकदेवः स्याद् वैशाखस्थानकान्वितः ॥ ४९ ॥
वामङ्गसमभङ्गाभ्यामतिभङ्गेन वा भवेत् ।
रामवेदेषुमात्रैः स्यान्नतिमानं त्रिषु क्रमात् ॥ ५० ॥
विकारधृतिकृत्यंशैः पादाङ्गुष्ठान्तरं क्रमात् ।
सपिनाकः करो वामः कक्षान्तोच्चः करोऽपरः ॥ ५१ ॥
सबाणः परहस्तौ द्वौ सटङ्कमृगपोतकौ ।
यथापूर्वं तथा देवी वामपार्श्वे स्थिता भवेत् ॥ ५२ ॥

त्रिपुरान्तकलक्षणम् ।

---

कल्याणसुन्दरस्य स्यादुष्णीषाद् वामभालके ।
वामनेत्रे पुटान्ते च हिक्कामध्ये च दक्षिणे ॥ ५३ ॥
नाभेस्तु त्रिचतुर्मात्रे सूत्रं तद्गुल्फमध्यतः ।
प्रादक्षिण्येन देवस्य गन्तुकामस्य पावकम् ॥ ५४ ॥
सव्येतरकरो देव्या हस्तालम्बी तथा भवेत् ।
वरदो वामहस्तः स्यात् परहस्तौ यथापुरम् ॥ ५५ ॥
देवी सोत्पलहस्ता स्यात् त्रिभङ्गाङ्गी विभूषिता ।
श्रीभूमिभ्यामनुगता गौरी देवानुगामिनी ॥ ५६ ॥
होता ब्रह्मा भवेद् दाता विष्णुः सकलशोऽम्बुदः ।
सर्वदेवर्षिगन्धर्वयक्षाद्यैर्वन्दितो भवेत् ॥ ५७ ॥

कल्याणसुन्दरलक्षणम् ।

---

अर्धनारीश्वरस्यापि सूत्रं स्यात् समभङ्गवत् ।
चतुर्भुजो वा द्विभुजो दक्षिणाङ्घ्रिः स्थितोऽस्य तु ॥ ५८ ॥

कुञ्चितो वामपादः स्याद् वामार्धे तस्य पार्वती ।
अतः परं तु यत् सर्वं प्राग्वदूहेन कल्पयेत् ॥ ५९ ॥

अर्धनारीश्वरलक्षणम् ।

---

अथ पाशुपतस्यापि चन्द्रशेखरवत् स्थितिः ।
त्र्यक्षश्चतुर्भुजो रौद्र ऊर्ध्वकेशो बृहत्तनुः ॥ ६० ॥
साक्षमालात्रिशूलोर्ध्वकरः सवरदाभयः ।

पाशुपतलक्षणम् ।

---

कङ्काला गमनोद्युक्तश्चाक्रान्तमणिपादुकः ॥ ६१ ॥
अर्धर्जुवदनो ढक्कावाद्योद्यतकरद्वयः ।
दक्षिणापरहस्तेन मृगपोताननं स्पृशन् ॥ ६२ ॥
प्रोतमेलास्थिकङ्कालं शूलं वामेन धारयन् ।
भिक्षापात्रं तु शिरसा वहन्भूतपुरोगतः ॥ ६३ ॥
तथा मदनसंमूढाः कार्याः स्युर्मुनियोषितः ।
छत्रचामरकरगणाश्चैवानुयायिनः ॥ ६४ ॥

कङ्काललक्षणम् ।

---

ऋज्वागतः स्याद्धर्यर्धः समपाद्द्वयस्थितिः ।
ऊर्वाश्रितो वामकरः साभयो दक्षिणो भवेत् ॥ ६५ ॥
तथैव परहस्तौ द्वौ टङ्कशङ्खविभूषितौ ।
वामत स्यात् किरीटार्धे कपर्दार्धे च दक्षिणे ॥ ६६ ॥
हर्यङ्गवत् स्याद् वामार्धे दक्षिणार्धे हराङ्गवत् ।
यथा रम्या तथा कार्या ह्येका मूर्तिर्हरीशयोः ॥ ६७ ॥

हरिहरलक्षणम् ।

---

समभङ्गवदेव स्यात् सूत्रं भिक्षाटनस्य तु ।
विप्रकीर्णजटाभारो दिग्वासा गमनोद्यतः ॥ ६८ ॥
कुञ्चितो दक्षिणकरः कुरङ्गमुखसङ्गवत्(?) ।
[illegible]ः करो वामस्तथास्योर्ध्वकरद्वये ॥ ६९ ॥

दक्षिणे स्याड्डमरुकं पिञ्छमाला तथापरे ।
भुजङ्गहारोपवीतकटिसूत्रविभूषितः ॥ ७० ॥
शेषं कङ्कालवत् सर्वमत्रापि च समूहयेत् ।

भिक्षाटनलक्षणम् ।

उमासहितवत् कुर्याच्चण्डानुग्रहकं परम् ॥ ७१ ॥
वरदो दक्षिणकरश्चण्डेशशिरसीतरः ।
कृताञ्जलिपुटश्चण्ड आसीनोऽधः शिवासनः ॥ ७२ ॥

चण्डेशानुग्रहलक्षणम् ।

तथैव दक्षिणामूर्तिरुपविष्टः शिवासने ।
अर्धर्जुवदनश्चारुजटाजूटविभूषितः ॥ ७३ ॥
अर्धेन्दुगङ्गाधुर्धूरकपालोरगशेखरः ।
साक्षमालानलकरस्त्वधो दक्षिणवामयोः ॥ ७४ ॥
विलसद्बोधमुद्रः स्याज्जान्वारूढकरस्तथा ।
दक्षिणोरुस्थवामाङ्घ्रिर्लम्बितान्यपदाम्बुजः ॥ ७५ ॥
क्रान्तापस्मारकस्तेन मुनिवृन्दैर्निषेवितः ।
न्यग्रोधाधो विधातव्यो व्याख्यानव्यापृतो विभुः ॥ ७६ ॥

दक्षिणामूर्तिलक्षणम् ।

कालकालो युक्तिवशान्नृत्ताभिनयवान् भवेत् ।
सशूलो दक्षिणभुजो भवेदाकर्णमुद्धृतः ॥ ७७ ॥
तत्रापरः सवरदः-सूचीमुद्रस्तु वामतः ।
ना(प्य ? भ्य)न्तश्चापरस्तत्र हलपल्लवसंयुतः ॥ ७८ ॥
भवेदुष्णीषसीमान्तश्चरणो दक्षिणः स्थिरः ।
नाभ्यन्तोद्धृतजानुः स्याद् वामोऽङ्घ्रिः कालहृद्गतः ॥ ७९ ॥
सकपर्देन्दुशकलस्त्रिणेत्रो रौद्रवेषधृक् ।
व्याघ्रचर्माम्बरः कार्यो नागाभरणभूषणः ॥ ८० ॥
कालोऽपि नीलवर्णः स्यादुत्तानः पातितो भुवि ।
पाशहस्तो विरूपाक्षो व्यादितास्यो भयङ्करः ॥ ८१ ॥

दंष्ट्री पिङ्गोर्ध्वकेशः स्याद्वराङ्गत्रयङ्गुष्ठपीडितः ।

कालकाललक्षणम् ।

लिङ्गोद्भवो लिङ्गमध्ये चन्द्रशेखरवत् स्थितः ॥ ८२ ॥
नलकाधः पदद्वन्द्वं लिङ्गमूले तिरोहितम् ।
दक्षिणेनोर्ध्वगः कार्यो हंसरूपी पितामहः ॥ ८३ ॥
वराहस्तु हरिर्वामे साञ्जलिः स्याद्धोमुखः ।

लिङ्गोद्भवलक्षणम् ।

द्वारलिङ्गोच्छ्रितः श्रेष्ठो मध्यो वेदांशहानितः ॥ ८४ ॥
अर्धहीनः कनिष्ठः स्याद् वृषभो लक्षणान्वितः ।
द्वाराद्ध्यर्धमुखो वा सपादद्विगुणोऽथवा ॥ ८५ ॥
हस्तादिनवहस्तान्तं नीचमध्योत्तमत्रयम् ।
वृषोत्सेधे तु पञ्चाशदंशे भागोऽङ्गुलं स्मृतम् ॥ ८६ ॥
उत्सेधात् पञ्चमांशेन आयामो वृषभस्य तु ।
मूर्ध्नो गलान्तः पङ्क्त्यंशैर्दीर्घः कण्ठोऽष्टमात्रकैः ॥ ८७ ॥
कण्ठादुरो विकारांशैरूर्वोर्दैर्ध्यं षडङ्गुलैः ।
द्विमात्रं जानु षण्मात्रा जङ्घा द्व्यंशोन्नतं खुरम् ॥ ८८ ॥
श्रृङ्गान्तरं स्याद् वस्वंशैः श्रृङ्गोच्चं चतुरङ्गुलम् ।
भालं नन्दांशविस्तीर्णं मुखव्यासः शराङ्गुलैः ॥ ८९ ॥
मुखोत्सेधस्तु बाणांशैर्नेत्रायामस्तु कोलकात्(?) ।
तद्व्यासः सार्धमात्रोऽस्माद् भागोच्चं चतुरङ्गुलम् ॥ ९० ॥
नेत्रकर्णान्तरं तावत् कर्णायामः शरांशकैः ।
सार्धमात्रायतं घ्राणं तद्व्यासावटमङ्गुलात् ॥ ९१ ॥
द्वित्र्यंशावधरोष्ठौ तु जिह्वा त्रिद्व्येकमात्रतः ।
दीर्घाततोच्चाथ ककुत् षड्वेदांशतनोर्नता(?) ॥ ९२ ॥
अपरोर्वोः क्रमाद् व्यासो दशाष्टचतुरङ्गुलैः ।
तदायामः शरांशैः स्याद् द्व्यंशं जान्वथ जङ्घयोः ॥ ९३ ॥
रामेष्वंशैस्ततिर्दैर्घ्यं खुरोत्तुङ्गं त्रिमात्रकम् ।
पुच्छायामस्तु जङ्घान्तस्त्र्यंशैस्तन्मूलविस्तृतिः ॥ ९४ ॥

लाङ्गूलाग्रं तु सार्धांशं मुष्कव्यासं त्रिमात्रकैः।
तदायामो द्विमात्रः स्याच्छेफायामस्त्रिमात्रकः ॥ ९५ ॥
शेषमूहवशाद् युक्त्या कुर्याद् वा शयितं स्थितम्।

वृषलक्षणाधिकारः।

---

अथ त्रिशूलं द्वारोच्चं स्तम्भोच्चं वा विधीयते ॥ ९६ ॥
तदुच्चनन्दभागांशत्र्यंशोने मध्यमाधमे।
हस्तैर्वा वेदरामाश्विसंख्यैः श्रेष्ठादिकं त्रयम् ॥ ९७ ॥
त्रिशूलोत्सेधबाणांशादंशस्तत्पत्रतुङ्गता।
अर्धांशोच्चं मध्यपत्रं त्रिपर्वकुलिशाकृति ॥ ९८ ॥
पत्रोत्सेधे तु वस्वंशे स्यादंशात् पत्रविस्तृतिः।
मध्यपत्रे मध्यपर्व द्वियवेनाधिकं भवेत् ॥ ९९ ॥
पत्रोच्चशरभागेंऽशादधोनालस्य दीर्घता।
उत्तानाम्बुजवन्नालं नालोर्ध्वे पार्श्वपत्रके ॥ १०० ॥
सार्धत्र्यंशान्मध्यपत्रे स्थित्वा पार्श्वद्वयेऽभ्रमात्।
पत्राग्रावधि शूलाग्रात् पार्श्वपत्रे तु वर्तयेत् ॥ १०१ ॥
ततो मध्यमपत्रस्य स्थित्वा दक्षिणपार्श्वयोः(?)।
पार्श्वयोः पार्श्वपत्रान्तः सीमान्तं वर्तयेत् समम् ॥ १०२ ॥
मध्यपत्रस्य मूलं तु पत्रव्यासार्धविस्तृतम्।
पत्रात् पादोनमग्रं स्यात् त्रिपादाद् वाधतो घनम् ॥ १०३ ॥
शातप्रान्तानि पत्राणि तीक्ष्णधाराणि कारयेत्।
मध्यपत्रस्य मध्ये तु पद्ममन्यत्र पत्रकम् ॥ १०४ ॥
मध्यपत्राग्रतारं स्यात् पादांशान्मुकुलोपमम्।
वेणुपत्राकृती पार्श्वपत्राग्रे मध्यपत्रकः(?) ॥ १०५ ॥
तयोरन्तरमर्धांशाद् वृत्तमेवं प्रसाधयेत्।
स्वायामात् पञ्चपञ्चांशात् स्यादङ्गाद् दण्डविस्तृतिः ॥ १०६ ॥
सुवृत्तं निर्व्रणं चारु नालाधः फलकान्वितम्।
तदधो मण्डिकुम्भादिपादालङ्कारवद् भवेत् ॥ १०७ ॥

---

१. 'वं' क. पाठः.

दण्डमूलं सपद्मं स्यात् स्वव्यासत्रिगुणं तु तत् ।
ऊहप्रत्यूहतो युक्त्या शोभां सर्वत्र योजयेत् ॥ १०८ ॥
सौवर्णं राजतं ताम्रं लौहं वा स्यात् स्वशक्तितः ।

वृत्तत्रिशूललक्षणम् ।

अत्र स्वायम्भुवे —

"वृत्तं त्रिभङ्गि वेतालमिति शूलं त्रिधा स्मृतम् ।
शान्तिकं पौष्टिकं चाभिचारकं च क्रमेण तत् ॥"

इति ।

तत्र वृत्तं समाख्यातं त्रितयेऽपि च तत् समम् ॥ १०९ ॥
विशिष्टं तु त्रिभङ्गस्य पार्श्वपत्रद्वयस्य तु ।
मध्यं स्यादन्तरे भुग्नमर्धतः परिमण्डलात् ॥ ११० ॥

त्रिभङ्गशूलम् ।

वेतालस्यापि पत्राणि ऋज्वग्राण्यष्टमांशतः ।
वेतालो नालमूले तु तत्प्रोतः स्याच्छरांशतः ॥ १११ ॥
घण्टाचतुष्टयोपेतः फलकाश्रिचतुष्टये ।

वेतालशूललक्षणम् ।

वेतालशूलवत् सर्वं खट्वाङ्गस्यापि कारयेत् ॥ ११२ ॥
समुण्डं मध्यपत्रादौ प्राग्वद् वेतालसंयुतम् ।
मयूरपिञ्छवृत्ताढ्यं फलका मूलतो भवेत् ॥ ११३ ॥
अष्टाभिर्वा चतुर्भिर्वा घण्टाभिः प्राग्वदन्वितम् ।
खट्वेषावत् तु वेदाश्रो दण्डोऽस्य फलकाकृतिः ॥ ११४ ॥
लतापत्रादिचित्रः स्यादूहप्रत्यूहयुक्तितः ।

खट्वाङ्गस्याकारः ।

गणेशः पञ्चतालस्तु स्वासीनो वा स्थितो भवेत् ॥ ११५ ॥
उष्णीषाधो मुखं तालं सार्धतालायताः कराः ।
कण्ठो भुग्नस्तु गूढः स्याद् गजवक्त्रस्त्रिलोचनः ॥ ११६ ॥

सार्धद्वितालं कण्ठाधोमानमाकटिसूत्रतः ।
सार्धतालायतौ पादौ पीवरः सर्वतो भवेत् ॥ ११७ ॥
इति मानमशेषतः स्फुटं सकलानां कथितं यथाक्रमम् ।
इह षोडशमूर्तिलक्षणं पृथगुक्तं निखिलं समासतः ॥ ११८ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे क्रियापादे
षोडशमूर्तिलक्षणं नाम त्रिचत्वारिंशः पटलः ॥

---

अथ चतुश्चत्वारिंशः पटलः ।

प्रासादे परिनिष्ठिते त्वथ तथा लिङ्गे प्रतिष्ठोचिते
प्रासादं परिगृह्य तक्षककरात् सूत्रत्रयावेष्टितम् ।
कौसुम्भ चापि च मालया च परितः संवेष्ट्य धान्याक्षतैः
सर्वत्र प्रविकीर्य पूर्णकलशं दीपं च मध्ये न्यसेत् ॥ १ ॥
ततः कृणुष्वादिकमत्र सूक्तं त्वर्धर्चशोऽन्ते तु दहाशसायम् ।
अग्नेऽर्धमायोज्य जपेदशेषं रक्षोघ्नमेवं तु जपादिषु स्यात् ॥ २ ॥
कृत्वा पुनः स्थण्डिलमग्निभागे तत्राग्निमाधाय तथाविधानम् ।
हुत्वा पुरैवाभिमुखं जुहोतु रक्षोहणं वाजिनमित्युभाभ्याम् ॥ ३ ॥
पुनः कृणुष्वादिभिरत्र मन्त्रैराज्येन हुत्वा तु यथाक्रमेण ।
तद्वद् विभिन्नैरथ पञ्चभिर्यैदेवादिमन्त्रैर्जुहुयाच्चतुर्भिः ॥ ४ ॥
इषेत्वेत्यादिना तद्वदग्निमीलेति चादिना ।
अग्नआयाहिपूर्वेण शन्नोदेवीरभीति च ॥ ५ ॥
ततस्तु पञ्चदुर्गाभिर्वेदोक्ताभिर्जुहोतु च ।
जातवेदस इत्याद्या ऋग् दुर्गा प्रथमा भवेत् ॥ ६ ॥
तामग्निवर्णामित्याद्या द्वितीया समुदीरिता ।
अग्ने त्वं पारयानव्यो अस्मानाद्यं तृतीयकम् ॥ ७ ॥
विश्वानि नो दुर्गेहाद्यश्चतुर्थो मन्त्र ईरितः ।
पृतनाजितमित्यादिः पञ्चमो मन्त्र उच्यते ॥ ८ ॥
एताभिः पञ्चदुर्गाभिराज्येन जुहुयात् पृथक् ।
ततो व्याहृतिभिस्तद्वदघोराख्येन वै पुनः ॥ ९ ॥

पश्चादपामार्गसमिद्घृताभ्यामनेन चाज्येन शतं जुहोतु ।
अष्टोत्तरं स्विष्टकृतं च पश्चाच्छिष्टाज्यमादाय तथाम्बुशेषम् ॥ १० ॥
आदाय तद्भस्म च मिश्रयित्वा पात्रे त्वपामार्गरसेन युक्तम् ।
तेनाखिलं तद्भवनालयाद्यं संप्रोक्षयेत् तत्परितस्तु दर्भैः ॥ ११ ॥
तमग्निमादाय तथैशकोणे संस्थाप्य पश्चात् तु चतुष्पथे वा ।
विसर्जयेद् रक्तजलान्नपिण्डैर्दत्वा बलिं दिक्षु समाप्य चैवम् ॥ १२ ॥
तत्रैव वास्तूपशमं विदध्यात् पूर्वोत्तरस्यां दिशि मण्डपस्य ।
आधाय तु स्थण्डिलमध्यतोऽग्निं संस्तीर्य दर्भैस्तु यथावदिष्ट्वा ॥ १३ ॥
प्राच्यां तु वह्नेः कृतमण्डलायां भूमौ समं शालिभिरास्तृतायाम् ।
वस्त्रावृतं तण्डुलमत्र कृत्वा तथापि वस्त्रेण समास्तृतं स्यात् ॥ १४ ॥
शम्यङ्कुराद्यं विनिकीर्य तस्मिन् संस्थाप्य तत्राक्षतपूर्णकुम्भान् ।
जलेन चापूर्य घटं तथान्यं सहेमवस्त्राक्षतगन्धपुष्पम् ॥ १५ ॥

शन्नोदेवीति मन्त्रेण शान्तिं संस्मृत्य तं जपेत् ।
तस्मिन् स्वगृह्योक्तविधानतोऽग्निमाधाय तत्राग्निमुखं विधाय ।
गोक्षीरसिद्धं चरुमाज्यसिक्तं मन्त्रैरमीभिः क्रमशो जुहोतु ॥ १६ ॥
वास्तोष्पते प्रतिजानीह्यस्मानित्यादिमुक्त्वा तु पुरोनुवाक्याम् ।
वास्तोष्पते शमया संसदा तेत्याद्यं तु याज्यां जुहुयादुदीर्य ॥ १७ ॥

वास्तोष्पते ध्रुवा स्थूणात् ततो गृह्यंभयादिना ॥ १८ ॥

अक्षिस्पन्दादिना चैव दुःस्वप्नेत्यादिनापि च ।
वास्तोष्पते प्रतरणो न एधीत्यादिनापि च ॥ १९ ॥

अमीवहा वास्तोष्पतेत्यादिना च जुहोति वै ।
पञ्चभिरभिराज्येन शंनवर्गैर्जुहोति च ॥ २० ॥

शम्याश्च समिधः सर्पिश्चरुं चैव जुहोत्यथ ।
अपिताः पञ्चगव्येन दूर्वाश्चाष्टोत्तरं शतम् ॥ २१ ॥

शंनोदेवीति मन्त्रेण जयादीन् जुहुयात् ततः ।
कृत्वा स्विष्टकृतं पश्चादुपलिप्य च भूतलम् ॥ २२ ॥

तस्याग्नेः पुरतो दर्भानास्तीर्य हुतशेषितम् ।
नमो रुद्राय वास्तोष्पत इत्यादिना क्षिपेत् ॥ २३ ॥

अनेनैव तु मन्त्रेण स्थालीं संक्षाल्य तज्जलम् ।
पात्रे प्रक्षाल्य कस्मिंश्चिच्छेषाज्यं शेषमम्बु च ॥ २४ ॥
एकीकृत्य तु मन्त्रेण शाखयोदुम्बरस्य वा ।
पालाशशाखया वाथ दर्भमुष्ट्याथवा पुनः ॥ २५ ॥
प्रासादमण्डपादौ तु सर्वत्र त्रिः प्रदक्षिणम् ।
पर्युक्षन्नथ पर्येति ततः सम्पूज्य वै द्विजान् ॥ २६ ॥
त्वं विप्रस्त्वं कविरिति मन्त्रेणानेन भोजयेत् ।
आशिषो वाचयित्वाग्रे शिवं वास्त्विवति वाचयेत् ॥ २७ ॥
प्रासादशान्त्यर्थमपीह शुद्ध्यै रक्षोघ्नहोमोऽपि च वास्तुहोमः ।
लिङ्गप्रतिष्ठाविधिपूर्वकाले कर्तव्य इत्यत्र यथावदुक्तः ॥ २८ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे क्रियापादे
रक्षोघ्नहोमवास्तुहोमपटलश्चतुश्चत्वारिंशः ॥

---

अथ पञ्चचत्वारिंशः पटलः ।

लिङ्गानां निष्कलादीनां प्रतिष्ठा पञ्चधा स्मृता ।
प्रतिष्ठा स्थापनं तद्वत् स्थितस्थापनमित्यपि ॥ १ ॥
उत्थापनास्थापने च पृथक् तल्लक्ष्म लिख्यते ।
यत्र ब्रह्मशिलायां तल्लिङ्गमादौ निधाय तु ॥ २ ॥
क्रियते पिण्डिकायोगस्तां प्रतिष्ठां प्रचक्षते ।
स्थापनं बाणलिङ्गानामार्षाणां च स्वयम्भुवाम् ॥ ३ ॥
रत्नहेमादिलिङ्गानामेका चेत् पिण्डिका तदा ।
स्थितस्थापनमुद्दिष्टं जीर्णे चोत्थापनं भवेत् ॥ ४ ॥
आस्थापनं स्याद् व्यक्तानां विष्ण्वादीनां च तत् तथा ।
अथोत्तरायणे पूर्वपक्षे लग्ने गुणान्विते ॥ ५ ॥
प्रशस्ततिथिनक्षत्रवारयोगदिनादिके ।
दोषैर्गुणैश्च पूर्वोक्तैर्हीने युक्ते सुसम्मते ॥ ६ ॥
यजमानानुकूले च प्रतिष्ठाकर्म शस्यते ।
प्रासादस्याग्रतः कुर्याच्चतुरश्रं तु मण्डपम् ॥ ७ ॥

प्रशस्ततरुवंश्याद्यैर्नूतनैः सुमनोरमम् ।
हस्तादिनवहस्तान्तलिङ्गानां प्रथमत्रिके ॥ ८ ॥
वसुनन्ददिशाहस्तैरथार्कमनुषोडशैः ।
तृतीये स्याद् धृतिकृतिकरैश्चोत्कृतिसम्मितैः ॥ ९ ॥
पर्यन्तभित्तिसंयुक्तं चतुर्दिग्द्वारशोभितम् ।
एकाशीतिपदांशस्य स्यान्मध्यनवकेन तु ॥ १० ॥
रसार्कषोडशांशांशां वेदिं कुर्यान्मनोरमाम् ।
कुण्डाष्टकं तु पूर्वादिदिक्षु कुर्याद् यथाक्रमम् ॥ ११ ॥
वेदाश्रयोनिखण्डेन्दुत्र्यश्रं वृत्तं षडश्रकम् ।
पद्माकारं च वस्वश्रं नवमं चतुरश्रकम् ॥ १२ ॥
तच्चेन्द्रेशानयोर्मध्ये प्राङ्मुखेंऽशे विधीयते ।
रक्षोवरुणयोर्मध्ये लिङ्गे स्यात् पश्चिमामुखे ॥ १३ ॥
सर्वाणि चतुरश्राणि वृत्तानीत्यपि केचन ।
कनिष्ठादित्रिलिङ्गानां रत्न्यरत्निकराणि तु ॥ १४ ॥
कनिष्ठादीनि कुण्डानि स्युर्वात्राहुतिसंख्यया ।
स्युः पञ्चमूर्तिपक्षे तु पञ्च कुण्डानि तान्यपि ॥ १५ ॥
चतुरश्राणि दिक्ष्वीशशक्रमध्ये तु पञ्चकम् ।
एकं वैन्द्र्यां भवेत् कुण्डमशक्तौ वा कनिष्ठके ॥ १६ ॥
प्रागुदीच्यां तु वोदीच्यामधिवासनमण्डपात् ।
कुर्यादर्धप्रमाणेन तद्वत् स्नपनमण्डपम् ॥ १७ ॥
तस्यैककोष्ठपङ्क्तिं तु त्यक्त्वाथ परितो बहिः ।
स्नानवेदिं षडंशोच्चां परितस्तु रसांशकैः ॥ १८ ॥
उच्चव्याससमां कुर्याच्छोभनां तु वितर्दिकाम् ।
जलनिर्गमनालं च भवेदुत्तरतः शुभम् ॥ १९ ॥
कुम्भसंख्यासमं कुर्यात् सुक्स्रुवाद्यं पृथक् पृथक् ।
निद्राकुम्भं शान्तिकुम्भाञ्छिवकुम्भाद्यवर्धनीः ॥ २० ॥
विघ्नेशलोकपालानां कुम्भान् वा तोरणाभितान् ।
अभ्यञ्जपात्रं वस्त्राणि तद्वच्चैवाष्टमङ्गलम् ॥ २१ ॥

---

1. 'च' क. पाठः.

तण्डुलांश्च चरुस्थालीः कलशान् पञ्चगव्यकम् ।
नवरत्नानि च[1] वर्णे प्रभूते मधुसर्पिषी ॥ २२ ॥
पर्वताग्रनदीतीरकुलीरह्रदतीर्थजाः ।
वृषेभशृङ्गवल्मीकसरस्तीरभुवो मृदः ॥ २३ ॥
अष्टौ समुद्रसरितां तीर्थानां सलिलानि च ।
ततः क्षीरागजम्ब्वाम्रत्वचः किसलयानि च ॥ २४ ॥
रौप्यपात्रद्वयं हेमशलाके भद्रपीठकम् ।
सर्वौषधीर्धातुबीजलोहानि मुसलादिकम् ॥ २५ ॥
गृहोपस्करजातं यदनुक्तमपि चाहरेत् ।
अमत्रयन्त्रिकाधारान् गुलखण्डं च गुग्गुलुम् ॥ २६ ॥
चन्दनागरुकर्पूरकुङ्कुमं योगपट्टिकाम् ।
ताम्बूलं क्रमुकं तैलं खट्वां वा फलकां नवाम् ॥ २७ ॥
नवकम्बलदेवाङ्गपट्टाद्यं शयनोचितम् ।
सर्वमुत्तरवेद्यां तु लक्षणोद्धारमण्डपे ॥ २८ ॥
विन्यसेन्नवकोष्ठेषु शिवकोष्ठादिषु क्रमात् ।
मध्ये तु शिवकोष्ठं स्यात् प्रागाद्यष्टदिशास्वपि ॥ २९ ॥
सादेशेश्वरविद्याख्यमायाकालनियामिकाः ।
पुरुषः प्रकृतिश्च स्युस्तत्त्वान्तं कोष्ठकानि तु ॥ ३० ॥
दुग्धादिपञ्चगव्यानि मध्ये दिक्कोष्ठकेषु च ।
जलं होमोपकरणं वासो धूपोपयोगि यत् ॥ ३१ ॥
आग्नेये त्वथ नैर्ऋत्ये दीपनीराजनादिकम् ।
त्वक्कषायाद्यमानिले चैशे स्याच्चन्दनादिकम् ॥ ३२ ॥
अन्यच्च कारकव्रातं यथोद्देशं निधापयेत् ।
स्युः प्लक्षोदुम्बराश्वत्थन्यग्रोधैस्तोरणानि तु ॥ ३३ ॥
शान्तिभूतिबलारोग्यनामान्यैन्द्रादितः क्रमात् ।
कनिष्ठादित्रिलिङ्गानां शरर्तुमुनिकिष्कुभिः ॥ ३४ ॥
तुङ्गानि तु तदर्धान्तर्विस्ताराणि शुभानि च ।
नन्दरुद्रातिजगतीतुङ्गशूलान्यनुक्रमात् ॥ ३५ ॥

1. 'चाधिकारान्' ख. पाठः.

वसुपङ्क्तिजगत्यंशैस्तच्छूलान्तरविस्तृतिः ।
शूलानामर्यमा मित्रस्त्वष्टा भगपुरन्दरौ ॥ ३६ ॥
पर्जन्यविष्णू सविता धातेशो[1] वरुणस्तथा ।
पूषा च देवताः प्रोक्ताः प्रागाद्येषु त्रयस्त्रयः ॥ ३७ ॥
समूलान् कदलीस्तम्भान् फलपल्लवमण्डितान् ।
सार्द्रवालुजलान् द्वौ[2] द्वौ[3] स्थापयेत् तोरणाश्रयान् ॥ ३८ ॥
ततो दुकूलदेवाङ्गपट्टवस्त्रादिभिर्नवैः ।
यथाशोभं विभूष्योर्ध्वमधिवासनमण्डपम् ॥ ३९ ॥
स्तम्भानप्यहतैर्वस्त्रैराच्छाद्य क्षालितैः सितैः ।
मुक्तादामस्रगालम्बपूगपुष्पाद्यलङ्कृतम् ॥ ४० ॥
दर्भस्रजा च परितः संवेष्ट्यास्त्रमनुस्मरन् ।
दर्भसन्दर्भमार्जन्या सपलाशपलाशया ॥ ४१ ॥
ऐन्द्राद्यैशानपर्यन्तं मार्जयित्वा प्रदक्षिणम् ।
गायत्र्या चोपलिप्यान्तर्गालितोदकगोमयैः ॥ ४२ ॥
आपःपुनन्त्वित्याद्येन प्रोक्षयेद् गन्धवारिणा ।
इषेत्वेत्यादिना दर्भैरक्षतैः कुसुमैः सितैः ॥ ४३ ॥
विकीर्यास्त्रेण वा भूमौ सिद्धार्थैः परितोऽन्ततः ।
ततोऽधिवासनं कुर्यादाचार्यो मूर्तिपैर्युतः ॥ ४४ ॥
वेदविद्याव्रतस्नातान् कुलीनान् शुभलक्षणान् ।
नात्यन्तबालवृद्धांश्च श्रुतवृत्तादिभूषितान् ॥ ४५ ॥
पूर्वोक्तमन्त्रैस्तानष्टौ वरयित्वाभिपूज्य च ।
पञ्च वा पञ्चपक्षे तान् मन्त्रैस्तैरेव पञ्चभिः ॥ ४६ ॥
वस्त्राङ्गुलीयकटकैर्भूषयेदपि शक्तितः ।
सप्तमे पञ्चमे वाह्नि पूर्वं कृत्वाङ्कुरार्पणम् ॥ ४७ ॥
आचार्यो यजमानेन पूर्ववत् प्रार्थितोऽर्चितः ।
कृतनित्यक्रियः स्नात्वा वाग्यतो मण्डपान्तिके ॥ ४८ ॥

१. 'तेशाद्य', २. 'का', ३. 'द्वौ' ख. पाठः.

प्रक्षाल्य पाणिचरणान् समाचम्य प्रसन्नधीः।
स्थण्डिले मण्डपाद् बाह्ये गणेशं सम्यगर्चयेत् ॥ ४९ ॥
समगन्धधूपदीपाद्यैः फलमोदकलड्डुकैः।
निर्विघ्नं प्रार्थयेत् कर्म कृत्वानुज्ञस्ततो गुरुः ॥ ५० ॥
योगे योगेति वा (योगः !) मूलाद् योजयेन् तोरणान् क्रमात् ।
देवस्य त्वेति वा स्वाङ्गैः शूलैरायोजयेदपि ॥ ५१ ॥
आच्छाद्याहतवासोभिश्चूताश्वत्थदलैरपि ।
उत्तिष्ठब्रह्मणोमन्त्रार्तं प्रागाद्यन्तांस्तु विन्यसेत् ॥ ५२ ॥
आपूर्य गर्तानाकोट्य मूलान्यालिप्य गोमयात् ।
ध्वजान् दिक्षु तथा मध्ये लोकपालायुधाङ्कितान् ॥ ५३ ॥
श्वेतेन्द्रचापसंरक्तकृष्णश्यामलधूम्रकान् ।
पीतपद्मारुणान् पाण्डुतापिञ्छधवलप्रभान् ॥ ५४ ॥
मध्ये पाशुपतास्त्रेणाप्यघोरास्त्रेण पातयेत् ।
अभ्यर्थ्यतोरणादुच्चा ध्वजाः सर्वे पताकिनः ॥ ५५ ॥
ध्वजाधिपतयो भृङ्गी महासेनवृषौ ततः ।
नन्दीशश्च महाकालः कुम्भोदरमहोदरौ ॥ ५६ ॥
वीरभद्रस्तथा भद्रा वास्त्वीशश्चेति कीर्तिताः ।
अथ मूर्तिधरैर्विप्रैर्वेदिकायास्तु मध्यतः ॥ ५७ ॥
स्ववेदविहितं पूर्वं पुण्याहं कारयेद् गुरुः ।
कुलशीलश्रुताचारसंपन्नाः शुभलक्षणाः ॥ ५८ ॥
द्वात्रिंशत् षोडशाष्टौ वा ब्राह्मणा वेदपारगाः ।
कृच्छ्रादिव्रतसंशुद्धा वृताः प्रागेव पूजिताः ॥ ५९ ॥
प्राग्दक्षिणोत्तरप्रत्यगुपविष्टा दृढव्रताः ।
कुर्युरध्ययनस्यादौ स्वशाखानुमतं दिशि ॥ ६० ॥
प्रतिष्ठाङ्गतयोद्दिश्य पुण्याहं बह्वृचादिकम् ।
गुरुः पुण्याहसलिलैर्मण्डपान्तः प्रदक्षिणम् ॥ ६१ ॥
प्रोक्षयेद् दर्भकूर्चेन तोरणाद्यं च बाह्यतः ।
तदैवाध्ययनं विप्राः प्रारभेरन् यथाविधम् ॥ ६२ ॥

---

१. 'भृ' क. पाठः.

सामान्यार्घ्यमथापाद्य गन्धपुष्पाक्षतादिभिः ।
ध्वजाननु यजेत् पूर्वं तारस्वाख्यानमोन्तकम् ॥ ६३ ॥
शान्त्यादितोरणांश्चेष्ट्वा स्वाख्याभिः शूलगान् रवीन् ।
ततस्तोरणशाखानां मूलकुम्भेषु पूजयेत् ॥ ६४ ॥
महोदरमहाकायौ महाकण्ठं महोदरम् ।
अग्निनेत्रं चाग्निजिह्वं विरूपाक्षमथोत्तरे ॥ ६५ ॥
विशालाक्षं च पूर्वादिक्रमादष्टौ गणेश्वरान् ।
सहस्रवीचीं विमलां शतधारां प्रमोदिनीम् ॥ ६६ ॥
द्वाराणां सौम्यकुम्भेषु पूजयेद् द्वारदेवताः ।
कुम्भकर्णं भद्रकर्णं श्वेतकर्णं च नामभिः ॥ ६७ ॥
गोकर्णमपि पूर्वादिद्वारदक्षिणकुम्भगान् ।
ततस्तालत्रयच्छोटिपार्ष्णिघातनिरीक्षितैः ॥ ६८ ॥
दिव्यान्तरिक्षभूमिष्ठान् विघ्नान् द्वारगतान् हरेत् ।
पश्चिमद्वारमासाद्य नाराचास्त्रं प्रयोजयेत् ॥ ६९ ॥
अस्पृशन् देहलीमन्तर्वामशाखाश्रितो विशेत् ।
विन्यस्यास्त्रं तु देहल्यां परिक्रम्य प्रदक्षिणम् ॥ ७० ॥
प्राङ्मुखो नैर्ऋते स्थित्वा वास्त्वीशं भुवि पूजयेत् ।
वास्तुदेवाधिपं मध्ये ब्रह्माणं स्वासनं तथा ॥ ७१ ॥
उत्तराशामुखं तस्मादुपविश्य प्रसन्नधीः ।
भूतशुद्धिं च कृत्वादौ सकलीकरणं ततः ॥ ७२ ॥
तर्जन्या मण्डपाद् बाह्ये वमभस्माद् विधाय तु ।
मूलाभिमन्त्रितोष्णीषमुत्तरीयं च धारयन् ॥ ७३ ॥
विशेषार्घ्यं समापाद्य तेन प्रोक्षितमस्तकः ।
दक्षिणे चन्दनालिप्ते शिवहस्तं विधाय तु ॥ ७४ ॥
तेजोरूपं तु शान्त्यन्तं शिवमुच्चार्य संस्मरन् ।
समात्ममूर्ध्नि विन्यस्य शिवोऽहमिति भावयन् ॥ ७५ ॥
तत्त्वदृष्ट्या तु निखिलं मण्डपाद्यं विलोक्य तु ।
ज्ञानखड्गकरः प्राग्वत् पञ्चकोष्ठे यथाविधि ॥ ७६ ॥

कुण्डमध्य समासाद्य नैर्ऋत्यां मण्डपे स्थितः ।
निक्षिप्य विकिरानैशे शिवकुम्भाख्यवर्धनी ॥ ७७ ॥
चलासने समापूर्य शिवाभ्यां समधिष्ठिते ।
पूजयेद् गन्धपुष्पाद्यैर्वृषकेसरिवाहने ॥ ७८ ॥
ततः प्रशान्तशिशिरपर्जन्याशोकसंज्ञितान् ।
सञ्जीवनामृतार्थेशकुम्भान् द्वारेषु युग्मशः ॥ ७९ ॥
विन्यस्योभयतस्तेषु नन्द्यादीन् द्वारपान् यजेत् ।
नन्दीशं च महाकालं भृङ्गीशं च गजाननम् ॥ ८० ॥
वृषभं षण्मुखं देवीचण्डौ पूर्वादितः क्रमात् ।
स्वदिग्विन्यस्तकुम्भेषु शक्रादीन् दश दिक्पतीन् ॥ ८१ ॥
आवाह्याभ्यर्च्य वर्धन्या कुम्भं प्राग्वत् प्रदक्षिणम् ।
परिभ्राम्य तु विन्यस्य कुम्भं दर्भोपसंहृतैः ॥ ८२ ॥
विकिरैरासनं कृत्वा वर्धनीं तत्र विन्यसेत् ।
ततः शक्रादिलोकेशाञ् शिवाज्ञां श्रावयेत् क्रमात् ॥ ८३ ॥

यथा ।

भो भो शक्र ! त्वया स्वस्यां दिशि विघ्नप्रशान्तये ।
स्थातव्यं सावधानेन त्वायागान्तं शिवाज्ञया ॥ ८४ ॥

इत्यादिना प्रशानन्तान्तं स्वस्वनामभिः श्रावयेत् ।

ततो गन्धादिभिः सम्यगिष्ट्वा कुम्भं च वर्धनीम् ।
निवेद्यान्तं ततस्तस्मै ज्ञानखड्गं समर्पयेत् ॥ ८५ ॥
प्रार्थयेदपि चानेन

यथा ।

आयागान्तं त्वया शम्भो ! स्थातव्यं सगणेन तु ।
संवृतेन सहाम्बेन यागाध्यक्षेण शङ्कर ! ॥ ८६ ॥
तथेत्युक्तः शिवेन तु ।
अर्घ्यं विधाय कुम्भाग्रे विकिरैर्यागमण्डपात् ॥ ८७ ॥
स्वकरस्थासकैर्विघ्नान् निरस्तान् दूरतः स्मरेत् ।
ततो गत्वाग्निकुण्डाग्र उपविश्य यथाविधि ॥ ८८ ॥

यथावत् संस्कृते कुण्डे समाधाय शिवानलम् ।
नामान्तं पञ्चसंस्कारैः संस्कृत्याराध्य तं गुरुः ॥ ८९ ॥

मध्यादिनवदिक्संस्थं पञ्चधा वा विभाजितम् ।
तत्तद्दिगनलांशांस्तु तत्तत्कुण्डे निधापयेत् ॥ ९० ॥

ततो मध्यमकुण्डाग्नौ शिवमावाह्य देशिकः ।
मन्त्राणां तर्पणं कुर्यात् तत्र मूलं शिवान्तिकम् ॥ ९१ ॥

चतुर्थ्यामिभियान्तं स्यात् तेन त्वष्टोत्तरं शतम् ।
हुत्वा ब्रह्माङ्गमन्त्राणां तद्दशांशं जुहोति च ॥ ९२ ॥

संस्थाप्य प्रतिकुण्डं तु शान्तिकुम्भाञ्छिवास्त्रतः ।
संपाताभिहुतान् कृत्वा गुरुर्मूर्तिधरैः सह ॥ ९३ ॥

हुत्वा पूर्णाहुतिं यायाल्लक्षणोद्धारमण्डपम् ।
तच्चोत्तरेऽथवैशान्यामधिवासनमण्डपात् ॥ ९४ ॥

कुर्याद् वेदित्रयोपेतं लक्षणोद्धारमण्डपम् ।
तस्मिन् दक्षिणवेद्यां तु लिङ्गं पीठे निधाय तु ॥ ९५ ॥

पीठं च तद्दक्षिणतः कुर्याद्राकारशोधनम् ।
अष्टमृद्भिः पुरोक्ताभिः कषायैश्च क्रमोदितैः ॥ ९६ ॥

गोमूत्रगोमयाभ्यां च पुष्पधूपजलान्तरैः ।
स्नापयित्वा द्वितीयायां वेद्यां वा स्थण्डिले कृते ॥ ९७ ॥

शालिभिस्तण्डुलैश्चापि तस्मिल्लिङ्गं निधाय तु ।
पूर्वोक्तेन विधानेन लक्षणोद्धारमाचरेत् ॥ ९८ ॥

अथाष्टौ वा चतस्रो वा नार्यो मङ्गल्यलक्षणाः ।
दर्भैः स्पृशेयुस्तल्लिङ्गं कुर्युर्नीराजनं तथा ॥ ९९ ॥

सन्ताड्यास्त्रेणार्घ्यतोयैः कवचेनावकुण्ठ्य तु ।
स्वमन्त्रेणाथवा कुर्यात् पूजां साधारणेन वा ॥ १०० ॥

गोमूत्रगोमयक्षीरदध्याज्यमधुभिः पृथक् ।
पञ्चगव्यकुशाम्बुभ्यां गन्धाद्भिश्चाभिषेचयेत् ॥ १०१ ॥

ततो वसनगन्धस्रग्धूपदीपोपहारकैः ।
इष्ट्वा रथादावारोप्य भेरीपटहडिण्डिमैः ॥ १०२ ॥

झल्लरीतिमिलाशङ्खतालमर्दलकाहलैः ।
वेणुमड्डुकवीणादिवादित्रध्वनिमङ्गलैः ॥ १०३ ॥
गीतनृत्तजयाशीर्भिः प्रदीपच्छत्रचामरैः ।
प्रेक्षणीयैर्ध्वजैश्चान्यैर्ग्रामादेस्तु प्रदक्षिणम् ॥ १०४ ॥
कृत्वा जलाधिवासार्थं नदीतीर्थह्रदादिकम् ।
आसाद्य तीरे स्वालिप्ते देवं संस्थाप्य पूजयेत् ॥ १०५ ॥
प्रागेव जलमध्ये तु नाभिदघ्नचतुष्पदीम् ।
प्रपां कृत्वा तु तन्मध्ये पीठादौ शाययेच्छिवम् ॥ १०६ ॥
वेष्टितं वसनैर्दर्भैः प्राक्छीर्षं चोर्ध्वसूत्रकम् ।
तत्पार्श्वे विन्यसेत् पीठं दर्भवस्त्रादिभूषितम् ॥ १०७ ॥
रक्षायै कलशानष्टौ लोकपालाधिदैवतान् ।
विन्यस्य दिक्षु संपूज्य परितो रक्षिणस्तथा ॥ १०८ ॥
पञ्चत्रिद्व्येकरात्रं वा दिनार्धं याममेव वा ।
अतीत्योत्तारयेल्लिङ्गं तीरे विन्यस्य पूजयेत् ॥ १०९ ॥
संस्नाप्य पञ्चगव्याद्यैर्नवभिः कलशैरपि ।
आलिप्य गन्धपङ्केन रक्तकौशेयवाससा ॥ ११० ॥
आच्छाद्य हेममालाभिरलङ्कृत्याभिपूज्य च ।
रथादियानमारोप्य नृत्तगीतादिमङ्गलैः ॥ १११ ॥
स्तुतिभिर्ब्रह्मघोषैश्च ग्रामादेस्तु प्रदक्षिणम् ।
लिङ्गं तु कारयेत् तत्र हिरण्यवसनादिकम् ॥ ११२ ॥
कपर्दपूगताम्बूलरूप्यलाजाक्षतादिकम् ।
किरन्तो यजमानाद्याः पुष्पवृष्टीश्च पुष्कलाः ॥ ११३ ॥
गुरुर्देवाग्रतो गच्छेद् यजमानश्च पृष्ठतः ।
सामान्यार्घ्यजलैर्मार्गं सिञ्चेयुर्मूर्तिधारकाः ॥ ११४ ॥
स्नानमण्डपमासाद्य परिभ्राम्य प्रदक्षिणम् ।
प्रतीच्यां मण्डपद्वारि देवं समवतारयेत् ॥ ११५ ॥
अर्घ्यं तु पादयोर्दत्त्वा मण्डपान्तः प्रवेशयेत् ।
तन्मध्ये भद्रपीठस्य विवरे स्थापयेच्छिवम् ॥ ११६ ॥

पीठं च दक्षिणे भागे गन्धाद्यैः पूजयेदपि ।
इति प्रतिष्ठाविधिमण्डपादिकं सकारकं चाकरशोधनं तथा ।
यथावदुक्तं च जलाधिवासनं विचार्य नैकाः शिवतन्त्रपद्धतीः ॥ ११७३ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे क्रियापादे
प्रतिष्ठाविधिलक्षणपटलः पञ्चचत्वारिंशः ॥

---

अथ षट्चत्वारिंशः पटलः ।

अथ मूर्तिधरैः सार्धं स्नात्वाचार्यः प्रसन्नधीः ।
क्षालिताङ्घ्रिः समाचम्य प्रविश्य स्नानमण्डपम् ॥ १ ॥
पुण्याहं वाचयित्वाग्रे गणेशं दक्षिणे यजेत् ।
विधाय विकिरक्षेपं शिवकुम्भं च वर्धनीम् ॥ २ ॥
निधायाभ्यर्च्य तद्भ्रान्त्या कृतरक्षे तु मण्डपे ।
प्राच्यामेकोनपञ्चाशत् कलशान् विन्यसेत् क्रमात् ॥ ३ ॥
प्राचीनोत्तरगैः सूत्रैर्दशभिर्दशभिः पृथक् ।
मध्ये स्युर्नवकोष्ठानि दिक्षु पङ्क्तिद्वयत्रयम् ॥ ४ ॥
संस्थाप्य मार्जयेत् पङ्क्तीर्यथा वीथीचतुष्टयम्(?) ।
पदषट्कं पृथग् दिक्षु कोणे कोणे चतुष्पदम् ॥ ५ ॥
नवकस्य तु पूर्वादिकलशे पूरयेत् क्रमात् ।
कषायं चैव गोमूत्रं पञ्चगव्यं तथा पयः ॥ ६ ॥
भूतिं दधि तदा मृत्स्नाः कुशाम्भश्च स्मरेच्च तान् ।
समुद्रान् सप्त गर्भाब्धिमष्टमं कलशं स्मरेत् ॥ ७ ॥
मध्ये तु ब्रह्मकलशं पूरयेद् गन्धवारिभिः ।
द्वितीयावरणे त्वाज्यं गोमयं मधु चैक्षवम् ॥ ८ ॥
रत्नोदकं नालिकेरं मातुलुङ्गं च दाडिमम् ।
रम्भाफलं च जम्बीरं पनसं बिल्वमेव च ॥ ९ ॥
चन्दनागरुकर्पूरकुङ्कुमाम्भांसि षोडशे ।
तृतीयावरणस्थांस्तु घटान् सङ्कृतिसंख्यकान् ॥ १० ॥

1. 'कोष्ठत्रयम् त्रयम्' ख. पाठः

गङ्गादिकानि तीर्थानि संस्मृत्य परिपूरयेत् ।
गङ्गां शतद्रुं यमुनां नर्मदां च सरस्वतीम् ॥ ११ ॥
गोमतीं सरयूं सिन्धुं शोणां तापीं परुष्णिकाम् ।
गोदावरीं कृष्णवेणीं नन्दां भीमरथीमपि ॥ १२ ॥
तुङ्गभद्रां वेगवतीं कावेरीं ताम्रपर्णिकाम् ।
प्रभासं नैमिशं चाथ गोकर्णं च त्रिपुष्करम् ॥ १३ ॥
केदारं चैव पूर्वादिकुम्भेषु क्रमशः स्मरेत् ।
स्वाशासु ब्रह्मभिश्चाङ्गैर्विन्यस्य नवकं यजेत् ॥ १४ ॥
द्वितीयावरणे कुम्भान् विद्येशैश्चाष्टमूर्तिभिः ।
तृतीयावरणे तत्त्वैः शक्त्याद्यैस्तु धरान्तकैः ॥ १५ ॥
दशेन्द्रियमनोवर्जैस्तारस्वाख्यानमोन्तकैः ।
विन्यस्तैस्तैर्यजेत् कुम्भान् सकूर्चान् सूत्रवेष्टितान् ॥ १६ ॥
सहेमरत्नवसनांश्चन्दनस्रगलङ्कृतान् ।
सचूतपिप्पलदलान् सपिधानफलाक्षतान् ॥ १७ ॥
कुम्भान् यथावदापूर्य गन्धाद्यैरभिपूजयेत् ।
अथ पश्चिमभागे तु कृत्वा नव पदानि तु ॥ १८ ॥
कलशानां तु नवकं मूर्तीशाष्टकसंयुतम् ।
मध्ये शिवेनं संयुक्तमापूर्याभ्यर्च्य देशिकः ॥ १९ ॥
पञ्चकोष्ठेष्वथैशान्यां कुम्भान् पञ्चामृतैः क्रमात् ।
पञ्चब्रह्मभिरापूर्य हेमकूर्चान्वितान् यजेत् ॥ २० ॥
प्राच्यां तु स्थण्डिले वह्निं प्रतिष्ठाप्य यथाविधि ।
शिवं साङ्गं समावाह्य समिदाज्यतिलांश्चरून् ॥ २१ ॥
मन्त्रसंहितया हुत्वा मूलेनाष्टशताहुतीः ।
ब्रह्माङ्गैश्च दशांशेन हुत्वा संपातितं घृतम् ॥ २२ ॥
ब्रह्मकुम्भे कुशाग्रेण क्षिप्त्वा स्नानमथाचरेत् ।
अर्घ्यं दत्त्वा हृदा मूर्ध्नि पुष्पाद्यमपनीय तु ॥ २३ ॥
आपोहिष्ठादिभिः पूर्वममृतैर्ब्रह्मभिस्ततः ।
जलधूपान्तरं पुष्पैरशून्यं मस्तकं यथा ॥ २४ ॥

तथाभिषिच्य पूर्णां तु हुत्वा संपूज्य शङ्करम् ।
ततस्त्वेकोनपञ्चाशत्कलशैः स्थापनक्रमात् ॥ २५ ॥

कषायगव्यभसितमृत्स्नाभिर्व्योमविद्यया ।
गोमूत्रेणापि गायत्र्या चाप्यायस्वेति दुग्धतः ॥ २६ ॥

दधिक्राव्णेति दध्ना तु देवस्यत्वा कुशाम्भसा ।
द्वितीयावरणे तद्वत् तेजोऽसीति घृतेन तु ॥ २७ ॥

मधुवातेति मधुना गन्धद्वारेति गोमयात् ।
ऐक्षवेण तु मूलेन आकृष्णेनेति रत्नकात् ॥ २८ ॥

ब्रह्मभिस्तु फलाम्भोभिः श्रीसूक्ताच्चन्दनादिकैः ।
जलधूपान्तरं चेष्ट्वा तृतीयावरणे घटैः ॥ २९ ॥

एकादशानुवाकैस्तु रुद्रस्य स्नापयेच्छिवम् ।
गन्धाद्यैरुपहारान्तमिष्ट्वा तूर्यादिनिस्वनैः ॥ ३० ॥

आरात्रिकं समुच्चार्य ततो ब्रह्मघटाम्भसा ।
पञ्चाक्षरान्तं मूलेन देवेशमभिषेचयेत् ॥ ३१ ॥

पुनरभ्यर्च्य गन्धाद्यैः पाद्यात्यनवकेन तु ।
स्नापयेत् पावमानीभिर्मध्येन ब्रह्मभिः पुनः ॥ ३२ ॥

गन्धाद्यैरुपहारान्तं पुनरभ्यर्च्य शङ्करम् ।
अनुज्ञातस्तु कुम्भस्थशिवेन शिवयापि च ॥ ३३ ॥

गौर्यास्तारस्वबीजादिसंपुटं तु स्वमन्त्रतः ।
वर्धन्यां पिण्डिकां सिक्त्वा ततः शिववर्टेन तु ॥ ३४ ॥

स्नापयेद् व्योमविद्यान्ता(?) मन्त्रसंहितया शिवम् ।
अघोरेण तु गन्धेन लिङ्गं पीठं च लेपयेत् ॥ ३५ ॥

वामेनामुष्य वस्त्राद्यैरीशेन कुसुमैर्यजेत् ।
धूपदीपनिवेद्यानि पुरुषेण तु दापयेत् ॥ ३६ ॥

सगन्धशिवहस्तेन गायत्र्यास्य चतुर्दशम् ।
लिङ्गस्य तु त्रिखण्डेषु तत्तत् संस्मृत्य संस्पृशेत् ॥ ३७ ॥

शुक्लैः सुगन्धैः कुसुमैः स्रग्भूपारात्रिकैरपि ।
नीराज्य पिष्टदीपाद्यैः पुण्याहं वाचयेत् ततः ॥ ३८ ॥
वस्त्राभ्यां लिङ्गमाच्छाद्य थोत्तिष्ठ ब्रह्मणस्पते ।
इत्यादिना द्विजैर्लिङ्गमुत्थाप्यातोद्यमङ्गलैः ॥ ३९ ॥
गीतैर्नृत्तैश्च नीत्वेशमधिवासनमण्डपम् ।
पश्चिमद्वार्युदुत्याद्यादवतार्या(र्घ?र्च)येच्छिवम् ॥ ४० ॥
पूर्वं शयनवेद्यां तु स्वस्तिके शालितण्डुलैः ।
स्थण्डिले दन्तखट्वां वा फलकां वा दृढां नवाम् ॥ ४१ ॥
निधाय कम्बलैश्चौर्णैः कौशेयाद्यैः समास्तृताम् ।
शय्यां विरचयेद् रम्यां सोपधानोत्तरच्छदाम् ॥ ४२ ॥
शङ्खं चक्रं ध्वजं चाथ दर्पणं वृषभाङ्कुशौ ।
चामरे मत्स्ययुग्मं च न्यसेद् दिक्ष्वष्टमङ्गलम् ॥ ४३ ॥
ततो लिङ्गं प्रवेश्यान्तराचार्यः सह मूर्तिपैः ।
शाययेच्छिरसा तल्पे शिखयास्योपधानकम् ॥ ४४ ॥
दत्त्वा तु वर्मणाच्छाद्य नैवेद्यान्तं तु पूजयेत् ।

अत्र मञ्जर्याम्—

"प्रासादाभिमुखं निवेश्य शयने वामेन मन्त्रेण त-
　चैतन्यं परमं नियोज्य विधिवत् तस्मिन् षडध्वान्वितम् ।
पञ्चब्रह्मविराजितं च सकलं संकल्प्य सृष्टिक्रमाद्
　व्योमव्यापिमनुस्वरूपिणममुं तत्त्वैस्त्रिभिर्भाजिनम् ॥"

इति ।

गृहोपकरणं सर्वमानीय विनिधाय तु ॥ ४५ ॥
मध्वाज्यपूरितं पात्रं रौप्यं दद्यात् तु पादयोः ।
मृत्युञ्जयेन सहृदा चापोहिष्ठेति चार्चयेत् ॥ ४६ ॥
शिरस्समीपे निद्राख्यं कुम्भमस्त्रेण पूरयेत् ।
शिवकुम्भास्त्रवर्धन्यौ तत्रैवापूर्य पूजयेत् ॥ ४७ ॥

---

१. 'द्वारदिश' ख. पाठः.

विद्येशकुम्भान् परितो लिङ्गस्य स्वस्वगोचरे ।
आत्मादितत्त्वविज्ञप्त्यै स्रग्भिः सीमाः प्रकल्पयेत् ॥ ४८ ॥
द्वारेषु घटिके द्वेद्वे कोणेष्वङ्कुरपालिकाः ।
तोरणेषु शरावे द्वे स्थापयेन्मङ्गलाङ्कुरैः ॥ ४९ ॥
निद्राविद्येशकुम्भानां बाह्ये भूत्या कुशैस्तिलैः ।
प्राकारत्रितयं कृत्वा तेषु लोकाधिपान् न्यसेत् ॥ ५० ॥

तदस्त्राण्यपीति यावत् ।

अध्येतारः पठेयुश्च वेदान् प्रागादिदिग्गताः ।
कोणेषु रुद्रं कद्रुद्रं भारुण्डं चमकांस्तथा ॥ ५१ ॥
अथाचार्यो मूर्त्तिधरैः प्राङ्मुखो वाप्युदङ्मुखः ।
उपविश्यासने पश्चाल्लिङ्गे भागत्रयं स्मरेत् ॥ ५२ ॥
ब्रह्मविष्ण्वीशभागेषु तत्त्वान्यात्मादिकानि तु ।
तत्त्वेश्वरैर्मूर्तिभिश्च न्यस्येन्मूर्तीश्वरान् सह ॥ ५३ ॥
मायान्तमात्मतत्त्वं च ब्रह्मभागे तु विन्यसेत् ।
तत्र तारं च हृद्बीजमात्मतत्त्वं नमोन्तकम् ॥ ५४ ॥
तथात्मतत्त्वेश्वराय ब्रह्मणे नम इत्यपि ।
ब्रह्माणमेव विन्यस्य ततस्तारं शिरोन्वितम् ॥ ५५ ॥
विद्यातत्त्वं सदेशान्तं चतुर्थ्या तु नमोन्तकम् ।
विन्यस्य तारं शिरसा विद्यातत्त्वेश्वराय च ॥ ५६ ॥
विष्णवे नम इत्युक्त्वा विष्णुभागे तु विन्यसेत् ।
शिवान्तं शिवतत्त्वं तु प्रणवेन शिखादिकम् ॥ ५७ ॥
चतुर्थ्यन्तं तथैवोहं (?) शिवतत्त्वाधिपाय च ।
रुद्राय नम इत्यन्तं रुद्रभागे तु विन्यसेत् ॥ ५८ ॥
भूम्यग्नियजमानार्कजलवाय्विन्दुखाभिधाः ।
मूर्तीस्तु विन्यसेदष्टौ त्रिष्वङ्गेषु पृथक् पृथक् ॥ ५९ ॥
शर्वं पशुपतिं चोग्रं रुद्रं चैव भवं तथा ।
ईशानं च महादेवं भीमं चेत्यष्टमूर्तिपान् ॥ ६० ॥

---

१. 'हं हूं शि' क. पाठः

तारहृद्बीजपूर्वं तु प्रागादीशान्तकं क्रमात् ।
विन्यसेदष्टपक्षे तु स्वाख्यामन्त्रैर्नमोन्तकम् ॥ ६१ ॥
निरोधयेन्निष्ठुरया गन्धाद्यैश्चाभिपूजयेत् ।
शिवस्यैव प्रतिष्ठायां पञ्चपक्षे तु मूर्तयः ॥ ६२ ॥
भूम्यम्बुवह्निपवनव्योमाख्याः स्युस्तदीश्वराः ।
ब्रह्मा विष्णुस्तथा रुद्र ईश्वरश्च सदाशिवः ॥ ६३ ॥
मुमुक्षोः पञ्चपक्षेण प्रतिष्ठा क्रियते यदा ।
निवृत्त्याद्याः कलाः पञ्च मूर्तयो मूर्तिपा अपि ॥ ६४ ॥
सद्योजातादयः पञ्च पश्चिमादिस्वदिग्गताः ।
ततो लिङ्गोत्तरस्थायां स्नपितायां तु लिङ्गवत् ॥ ६५ ॥
रन्ध्रमध्ये भगाङ्कायां पूजितायां यथाविधि ।
तद्वद् ब्रह्मशिलायां च स्थितायां लिङ्गमूलतः ॥ ६६ ॥
तत्तत्तत्त्वेश्वरान् मूर्तिमूर्तीशानपि विन्यसेत् ।
तत्राप्यात्मादितत्त्वेशीं क्रियाज्ञानेच्छया सह ॥ ६७ ॥
विन्यस्य क्ष्मादिमूर्तीश्च मूर्तीशीर्धारिकादिकाः ।
धारिका दीप्तिमत्युग्रा ज्योत्स्नाख्या चेतना तथा ॥ ६८ ॥
बलोत्कटा च धात्री च विभुश्चेत्यष्ट मूर्तिपाः ।
साधकस्य प्रतिष्ठायां भोगेच्छोः शुद्ध(म ? व)र्त्मनि ॥ ६९ ॥
शुद्धविद्यादिशक्त्यन्ते विद्येशा मूर्तिपाः स्मृताः ।
मूर्तीश्वर्यस्तु तस्यैव पीठेऽनन्तादयः क्रमात् ॥ ७० ॥
श्रीलिङ्गान्तोदितास्तद्वत् पञ्चपक्षेऽपि मूर्तिपाः ।
वामा ज्येष्ठा क्रियाज्ञाने चेच्छेति पठितास्त्विमाः ॥ ७१ ॥
पुरुषाद्यास्तु मायान्ते शुद्धाशुद्धेऽध्वनि स्थिताः ।
याः काश्चिद् देवतास्तासां प्रतिष्ठायां तु मूर्तिपाः ॥ ७२ ॥
अङ्गुष्ठमात्रो भुवनेश ईशः स्यादेकपिङ्गेक्षणकृद् भवश्च ।
भवो महादेवमहाद्युती च काम्यप्रतिष्ठासु च मूर्तिपाः स्युः ॥ ७३ ॥

---

१. 'घ' 'ख. पाठः.

अशुद्धेऽध्वनि पृथ्व्यादौ प्रकृत्यन्ते स्थितास्तु याः ।
देवतास्तत्प्रतिष्ठायां कपालीशादिमूर्तिपाः ॥ ७४ ॥
कपालीशोऽग्निरुद्रश्च यमो निर्ऋतिरेव च ।
बलः शीघ्रो निधीशश्च विद्याधिपतिरष्टमः ॥ ७५ ॥
वस्वादित्यादिरुद्राणां यक्षभोगीन्द्ररक्षसाम् ।
नरादीनां प्रतिष्ठायामिन्द्राद्या मूर्तिपाः स्मृताः ॥ ७६ ॥

इन्द्रादयोऽष्टौ लोकपाला इति यावत् ।

क्षुद्राभिचाराद्युद्देशात् प्रतिष्ठा क्रियते यदा ।
तत्र स्युर्मूर्तिपास्त्वष्टावसिताङ्गादिभैरवाः ॥ ७७ ॥
असिताङ्गो रुरुश्चण्डः क्रोधनोन्मत्तभैरवौ ।
कपाली भीषणश्चैव संहाराख्योऽष्टमः स्मृतः ॥ ७८ ॥
प्रतिमानामथोग्राणां प्रतिष्ठासु तमादिकाः ।
मूर्तीश्वर्यस्तमा मोहा क्षया निद्रा च मृत्युना ॥ ७९ ॥
मया भया ज्वरा च स्युः पृथ्व्याद्या एव मूर्तयः ।
उग्राणां पञ्चपक्षे तु तमा मोहा च घोरया ॥ ८० ॥
अरतिश्च ज्वरा चेति मूर्तीश्वर्यः क्रमोदिताः ।
प्रतिमानां प्रतिष्ठासु समानोऽयं विधिर्मतः ॥ ८१ ॥
त्रिभागभावना तत्र जानुकण्ठाशिरोवधिः ।
कौबेराणां प्रतिष्ठासु क्रियाशक्तिं तु पीठगाम् ॥ ८२ ॥
देहे ज्ञानीं च विन्यस्य कुर्याच्छेषं तु पीठवत् ।

तत्त्वतत्त्वेश्वरमूर्तिमूर्तीश्वरन्यासाधिकारः ।

---

एवं विन्यस्य तत्त्वानि तदीशान् मूर्तिमूर्तिपान् ॥ ८३ ॥
तारादिभिर्नमोन्तैस्तु तत्तन्नामभिरर्चयेत् ।
तत्त्वादीनामवस्थानं लिङ्गादौ तत्र भावयेत् ॥ ८४ ॥
अथ कुण्डान्तिकं गत्वा तत्त्वतत्त्वेश्वरादिकम् ।
क्रमाद्वाद्य कुण्डेषु घृतेन जुहुयुः पृथक् ॥ ८५ ॥

1. 'स्तु' क. पाठः. २. 'ताः' ख. पाठः

तद्यथा —

तारहृत्पूर्वमाधारशक्तिं विन्यस्य चानले ।
इष्ट्वा त्रिराहुतीर्हुत्वा आत्मतत्त्वं तु विन्यसेत् ॥ ८६ ॥

आत्मतत्त्वाधिपायान्ते ब्रह्मणे च नमोन्तकम् ।
आवाह्याभ्यर्च्य पृथ्व्यादिमूर्तिमूर्त्यधिपानपि ॥ ८७ ॥

क्रमादावाह्य संपूज्य घृतेनाष्टोत्तरं शतम् ।
तदर्धं वा ततोऽर्धं वा तत्त्वादीनां जुहोति च ॥ ८८ ॥

पृथक् मूर्तिधरांस्त्वेवं जुहुयुः स्वस्वमूर्तिभिः ।
अथाचार्यादयः सर्वे गत्वा लिङ्गान्तिकं सह ॥ ८९ ॥

स्वस्वमूर्तिप्रदेशेषु संस्पृश्य कुशमूलतः ।
जपेयुर्मूर्तिमूर्तीशमन्त्रानाहुतिसंख्यया ॥ ९० ॥

तत्त्वाधिपं तु ब्रह्माणं शिवाज्ञां श्रावयेत् पृथक् ।

ओम्

आत्मतत्त्वाधिप ! ब्रह्मन् ! यावल्लिङ्गमिदं भुवि ॥ ९१ ॥

निर्दोषं सुस्थितं तावत् त्वया स्थेयं शिवाज्ञया ।

ओं ब्रह्मणे नमः इति ।

स्पृशन्तो मूलमन्त्रेण कुशमूलेन मूर्तिषु ॥ ९२ ॥

लिङ्गमूले प्रोक्षयेयुः शान्तिकुम्भजलैः पृथक् ।
पुनः कुण्डान्तिकं गत्वा

ओम् आत्मतत्त्वविद्यातत्त्वाभ्यां नमः ।

इति तत्त्वे विभाव्य तु ॥ ९३ ॥

शुद्धाशुद्धे तु सन्धाय विद्यातत्त्वं तु विन्यसेत् ।
तारहृत्पूर्वकं प्राग्वद् विद्यातत्त्वं नमोन्तकम् ॥ ९४ ॥

विद्यातत्त्वाधिपायेति विष्णवे नम इत्यपि ।
इष्ट्वा हुत्वा तथाज्येन मूर्तिमूर्तीश्वरांस्तथा ॥ ९५ ॥

आवाह्य जुहुयात् प्राग्वत् प्राग्वल्लिङ्गसमीपगाः ।
कुशमध्येन लिङ्गस्य जपेयुर्मध्यमस्पृशः ॥ ९६ ॥

मूर्तिमूर्तिपमन्त्रांस्तु शिवाज्ञां श्रावयेत् पृथक् ।
विद्यातत्त्वेश ! भो विष्णो ! यावल्लिङ्गमिदं भुवि ॥ ९७ ॥

निर्दोषं सुस्थितं तावत् त्वया स्थेयं शिवाज्ञया ।

ओं विष्णवे नम इति ।

शान्तिकुम्भाम्भसा प्राग्वत् प्रोक्षयेयुश्च मूलतः ॥ ९८ ॥

प्राग्वत् कुण्डान्तिकं गत्वा शुद्धाशुद्धे विभाव्य तु ।

विद्याशिवाख्ये तत्त्वे तु सन्धाय च नमोन्तकम् ॥ ९९ ॥

शिवतत्त्वमुपस्थाप्य प्राग्वदिष्ट्वा जुहोतु च ।

विन्यस्य मूर्त्तिमूर्त्तीशान् पूर्ववज्जुहुयुः पृथक् ॥ १०० ॥

लिङ्गान्तिकं तथा गत्वा मूलमन्त्रान् कुशाग्रतः ।

रुद्रभागं स्पृशन्तोऽथ जपेयुर्हुतसंख्यया ॥ १०१ ॥

शान्तिकुम्भाम्भसा प्रोक्ष्य शिवाज्ञां श्रावयन्तु च ।

ओम्

शिवतत्त्वेश ! भो रुद्र ! यावल्लिङ्गमिदं भुवि ॥ १०२ ॥

निर्दोषं सुस्थितं तावत् त्वया स्थेयं शिवाज्ञया ।

ओं रुद्राय नम इति ।

एवं पीठे शिवायां च तत्त्वाद्यं स्वस्वमूर्त्तिभिः ॥ १०३ ॥

विन्यस्य शोधयेत् स्पृष्ट्वा शिवाज्ञां श्रावयेदपि ॥

अथ सद्यादिब्रह्मभिरङ्गैश्च स्वस्वदिक्षु सहस्रं तदर्धं शतं वाज्येन जुहुयात्, व्याहृतिभिश्च ।

अत्र मञ्जर्यां —

"व्यस्तैर्व्याहृतिभिः पलाशसमिधश्चौदुम्बराः पैप्पलाः
प्रत्येकं जुहुयात् सहस्रमथवा क्षीराज्यमध्वाप्लुताः ।
एवं तिलैस्तु जुहुयादथ चाष्टमूर्तिमन्त्रैश्च मूर्तिगणनाथदिशाधिपैश्च ।
वज्रादिशस्त्रमनुभिश्च यथाक्रमेण चाज्येन तत्र जुहुयाद् गुरुरादरेण ॥"

चरुं लाजांश्च सक्तूंश्च सिद्धार्थांश्च तिलान् यवान् ॥ १०४ ॥

व्रीहींश्च जुहुयात् स्वस्वदिक्षु मन्त्रैर्यथापुरम् ।

सर्वद्रव्यैश्च मिलितैः पूर्णां हुत्वा स्वमूलतः ॥ १०५ ॥

उत्थाय त्वथ देवस्य दक्षिणे श्रवणे गुरुः ।

तारहृत्पूर्वकं ज्ञानशक्तिं शब्दमयात्मने ॥ १०६ ॥

शिवाय नम इत्युक्त्वा कृतं कर्म समर्पयेत् ।

ओं आ

भागत्रयेऽपि भगवन्! कर्म निर्वर्तितं मया ॥ १०७ ॥

त्वत्प्रसादेन तत् सर्वं सम्पूर्णं भवतु प्रभो ! ।

इत्यर्पयेत् ।

इति निष्ठुरया रुद्ध्वा गन्धाद्यैरभिपूज्य तु ॥ १०८ ॥

निवेद्यान्तं बलिं किञ्चिद् दत्त्वा दिक्षु यथाविधि ।
नृत्तगीतविनोदाद्यैर्विनिद्रो गमयेन्निशाम् ॥ १०९ ॥

इत्थं प्रतिष्ठामधिकृत्य शम्भोरुक्तं तदादिस्नपनादिपूर्वम् ।
तत्त्वादिविन्यासविधिश्च सर्वो येनाधिवासस्य विधिः प्रसिध्येत् ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे क्रियापादे
अधिवासनपटलः षट्चत्वारिंशः ॥

---

## अथ सप्तचत्वारिंशः पटलः ।

ततः प्रभात आचार्यः स्नातो मूर्तिधरैः समम् ।
यजमानश्च पुत्राद्यैः पूर्वं स्थापनलग्नतः ॥ १ ॥

उच्चारयञ्छिवास्त्रं तु प्रासादं प्राप्य देशिकः ।
विघ्नानुच्चाटयेत् पश्यन् प्रविशेद् देवमन्दिरम् ॥ २ ॥

शिवमध्यं तु निश्चित्य तत्र ब्रह्मशिलां न्यसेत् ।

तद्यथा—

द्वारांशं गर्भभवने निश्चित्य तु चतुर्दिशम् ॥ ३ ॥

तद्द्वाविंशतिसूत्रैस्तु प्राचीनैश्चाप्युदङ्मुखैः ।
विभजेत् तत्र यन्मध्यकोष्ठं ब्रह्माह्वयं स्मृतम् ॥ ४ ॥

तच्च प्राच्यैरुदीचीनैः सूत्रैः षोढा विभज्य तु ।
षट्त्रिंशत्कोष्ठकानि स्युस्तत्कोष्ठानां तु मध्यतः ॥ ५ ॥

---

१. 'स्या' ख. पाठः.

यः प्राच्योदीच्ययोः सन्धिर्ब्रह्मस्थानं तु सूत्रयोः ।
तद् वर्ज्यं हि प्रतिष्ठासु शिवादीनां तु मध्यतः ॥ ६ ॥

यदि मोहात् प्रमादाद् वा स्थापयेद् ब्रह्ममध्यगम् ।
लिङ्गादिकं तदा राज्यकर्तृराजविनाशकृत् ॥ ७ ॥
ब्रह्मस्थानाद् यदैशान्यां कोष्ठं तस्यैशकोणगः ।
सूत्रसन्धिः प्रतिष्ठायां लिङ्गमध्ये यथा भवेत् ॥ ८ ॥

शिवमध्यं तथा ज्ञात्वा तत्रैव स्थापयेच्छिवम् ।
सप्तसप्तककोष्ठं तु गर्भागारं विभाजयेत् ॥ ९ ॥

ब्राह्मं तन्मध्यकोष्ठं स्यात् तद्बाह्यं वसुकोष्ठकम् ।
दैविकं स्याच्च तद्बाह्यवृतौ षोडशकोष्ठकैः ॥ १० ॥

मानुषाख्यं ततो बाह्यवृतौ संकृतिकोष्ठकैः ।
पैशाचं नाम तत् क्षेत्रं प्रतिष्ठा चैषु कथ्यते ॥ ११ ॥
ब्राह्मे शिवप्रतिष्ठा स्याद् दैवे विष्णोर्विधीयते ।
मानुषे सर्वदेवानां पैशाचे मातृरक्षसाम् ॥ १२ ॥
देवगन्धर्वयक्षाणां नागादीनां च शस्यते ।

अत्र मयः—

"गर्भागारे सप्तसप्तांशकेऽशं मध्ये ब्राह्मं दैविकं चाष्टभागम् ।
मानुष्यं तत् षोडशांशं तु बाह्ये पैशाचं स्यात् तच्चतुर्विंशदंशम् ॥
शैवं ब्राह्मे वैष्णवं दैविकांशे सर्वे देवा मानुषे स्थापनीयाः ।
पैशाचांशे मातरश्चासुराद्या रक्षोयक्षाश्चापि गन्धर्वनागाः ॥"

इति ।

शिवमध्याद् दक्षिणतो ब्रह्मसूत्रात् तथोत्तरे ॥ १३ ॥
प्राचीनं सूत्रमास्फाल्य कोष्ठानां मध्यतः समम् ।
तस्मिन् स्वस्वपदे मध्ये विष्ण्वादीन् स्थापयेत् क्रमात् ॥ १४ ॥
प्रत्यङ्मुखांस्तु प्राच्येषु पदेषु स्थापयेत् सुरान् ।
प्राङ्मुखांश्च प्रतीच्येषु याम्येषूदङ्मुखानपि ॥ १५ ॥
सौम्येषु दक्षिणास्यांश्च विष्ण्वादीन् युक्तितः क्रमात् ।

शिवमध्याधिकारः ।

---

अथ ब्रह्मशिलायां तु रत्नादिन्याससिद्धये ॥ १६ ॥

तत्तद्दिक्षु तथा मध्ये युक्त्या गर्तानि कल्पयेत् ।
पूर्वोक्ते शिवमध्ये तु शिलामध्यं यथा तथा ॥ १७ ॥

स्थापयेत् तूर्यघोषैर्वेदघोषैश्च पुष्कलैः ।
उदङ्मुखः प्राङ्मुखो वा गुरुर्मूर्तिधरैः सह ॥ १८ ॥

ओं नमो व्यापिनीत्युक्त्वा स्थिरे चेत्यचले ध्रुवे ।
बिन्द्वन्तं चापि भूबीजं हल्लेखां चाभिजायया ॥ १९ ॥

तारं हृद्बीजमाधारशक्तये च नमोन्तकम् ।
तथैवानन्तशक्तिं चाप्यभिधाय नमोन्वितम् ॥ २० ॥

संस्थाप्य तु ब्रह्मशिलां स्पृष्ट्वानेनाभिमन्त्रयेत् ।

ओं

त्वमेव परमा शक्तिस्त्वमेवासनधारिका ॥ २१ ॥

शिवाज्ञया त्वया देवि स्थातव्यमिह सर्वदा ।
शुद्धविद्यान्तमध्वानं सर्वं तस्यां विभाव्य तु ॥ २२ ॥

रत्नादिपञ्चवर्गांस्तु विन्यसेत् तु यथाक्रमम् ।
वज्रं चार्कमणिं नीलं महानीलं च मौक्तिकम् ॥ २३ ॥

पुष्यरागं मरतकं वैडूर्यं पद्मरागकम् ।
इन्द्रादीशानपर्यन्तं माणिक्यं मध्यतः स्मृतम् ॥ २४ ॥

सायोवज्ररूप्याणि पित्तलं कांस्यसीसके ।
देवलोहं सुवर्णं च पूर्वाद्यं मध्यमान्तकम् ॥ २५ ॥

तालं शिला तोरिका च माक्षिकं हेममाक्षिकम् ।
गैरिकं गन्धकं चाभ्रं पारतं नवमं स्मृतम् ॥ २६ ॥

उशीरं च हरिक्रान्ता रक्तचन्दनकागरू ।
शारिबोत्पलमाक्षेयरुक्छक्लकुसुमाह्वयाः ॥ २७ ॥

ओषधीर्विन्यसेच्चाथ व्रीहीन् गोधूमकांस्तिलान् ।
माषमुद्गयवश्यामाशालींश्चेन्द्रादि विन्यसेत् * ॥ २८ ॥

संक्षिप्तासु प्रतिष्ठासु रत्नादीनामसम्भवे ।
रत्नादिपञ्चवर्गेभ्यो वज्रं हेम च पारतम् ॥ २९ ॥

---

* 'मध्यतोऽष्ट बीजानि' इति समुच्चयकारः ।

हरिकान्तां यवांश्चैव मध्यगर्ते तु विन्यसेत् ।
रत्नादिवर्गान् सद्यादिकलाभिर्विन्यसेत् पृथक् ॥ ३० ॥
सद्यादिब्रह्मभिर्मध्ये लोकेशाख्याभिरेव वा ।
मध्यगर्ते हेममयं कूर्मं वृषभमेव वा ॥ ३१ ॥
संस्थाप्यानन्तमन्त्रेण प्राग्याम्याप्येन्दुदिक्ष्वपि ।
वृषभं परशुं चाक्षस्रजं शूलं हिरण्मयम् ॥ ३२ ॥
निवृत्त्यादिकलाभिस्तु विन्यस्यालिप्य वै शिलाम् ।
पायसेनाहतस्वच्छवाससाच्छाद्य वर्मणा ॥ ३३ ॥
गन्धाद्यैस्तु निवेद्यान्तमिष्ट्वा दद्याद् दिशाबलिम् ।
कृसरापूपलाजाम्बुधानाहारिद्रसक्तुभिः ॥ ३४ ॥
क्रमात् सेक्षुरसान्नेन दत्त्वा दिक्पतिनामभिः ।

ओं

देवं रुद्रं पुरस्कृत्य प्रतिगृह्णन्त्विमं बलिम् ॥ ३५ ॥
पैशाचान्तानि भूतानि सर्वाणीह यजामहे ।

सर्वदिग्वासिभ्यः सर्वभूतेभ्यो नमः ।

इत्थं प्रतिदिशं दत्त्वा स्नात्वाचम्य प्रसन्नधीः ॥ ३६ ॥
शिलासूत्रादिदोषघ्नमन्त्रेण जुहुयाच्छतम् ।
ततो लिङ्गं ह्रदोत्थाप्य शिरसार्घ्यं प्रदाय च ॥ ३७ ॥
अभिष्टुत्य च तं वाग्भिर्जयशब्दादिमङ्गलैः ।
गीतवाद्यादिनिर्घोषैर्हेमरत्नाम्बरादिभिः ॥ ३८ ॥
क्षिपद्भिर्यजमानाद्यैर्देवं नीत्वा प्रदक्षिणम् ।
आचार्यो मूर्तिपैः सार्धं द्वारदेशेऽवतार्य तु ॥ ३९ ॥
भद्रपीठे तु संस्थाप्य स्थिरा भूया इतीरयेत् ।
अकृतप्रस्तरे द्वारे द्वारशाखादिकस्य तु ॥ ४० ॥
असंस्पर्शेन तल्लिङ्गं पीठं चान्तः प्रवेशयेत् ।
देहलीं द्वारशाखे वा भित्तिं चोर्ध्वमुदुम्बरम् ॥ ४१ ॥
लिङ्गं स्पृशति पीठं वा तदा दोषो महानपि ।
तच्छान्त्यै ब्रह्ममूलाग्नैर्हुत्वा दत्त्वा च दक्षिणाम् ॥ ४२ ॥

असंस्पर्शेन शाखादेरन्तर्लिङ्गं प्रवेशयेत् ।
अनारब्धा यदा भित्तिर्द्वारं चाप्यकृतं यदा ॥ ४३ ॥
द्वारोद्देशप्रदेशेन तदा देवं प्रवेशयेत् ।
ततो ब्रह्मशिलामिष्ट्वा हेतिनाच्छादनाम्बरम् ॥ ४४ ॥
अपनीय शिलाश्वभ्रे लिङ्गं तु प्रविशेद् यदा ।
अनायासेन तद्योग्ययन्त्रेण प्रगुणीकृतम् ॥ ४५ ॥
तथा मूर्तिधरैः सार्धमाचार्यो लग्न आगते ।
सुनिश्चितक्षणे तस्मिन् छिवोऽहमिति भावयन् ॥ ४६ ॥
शिवशक्त्योस्तदेकत्वं ध्यायञ्छक्तिं शिलां स्मरन् ।
हृत्कण्ठतालुभ्रूमध्यब्रह्मरन्ध्राण्यतीत्य तु ॥ ४७ ॥
ब्रह्मादिकारणत्यागात् स्वमन्त्रं निष्कलान्तगम् ।
ध्यायन्नुच्चारयल्लिङ्गं प्रतिष्ठाप्य प्रसन्नधीः ॥ ४८ ॥
सृष्टिमार्गेण चेशानपुरुषादिक्रमेण तु ।
तत्त्वाध्वानं तु शक्त्यादि लिङ्गमूर्तौ विभाव्य तु ॥ ४९ ॥
शुद्धाभिः सिकताभिस्तु शिलारन्ध्रं प्रपूरयेत् ।
पुनः संक्षुद्य संक्षुद्य रन्ध्रं हेमशलाकया ॥ ५० ॥
लिङ्गशीर्षोपगं नीत्वा पीठं लग्नरज्जुभिः ।
सुनिश्चिते तदा लग्ने शनैर्लिङ्गेऽवतारयेत् ॥ ५१ ॥
तारं च शक्तिबीजं च क्रियाशक्त्यैपदं ततः ।
उमायै नम इत्यन्तं मन्त्रं सृष्टिक्रमात् स्मरन् ॥ ५२ ॥
उच्चारयन् पिण्डिकां तु लिङ्गेन सह योजयेत् ।
स्थाप्यमानं यदा लिङ्गं पीठं वा चालितं भवेत् ॥ ५३ ॥
यां यां दिशं संश्रितं तत् तत्तद्दिक्पालमन्त्रतः ।
शान्तिं कुर्यान्निजस्थाने स्थिरीकृत्य तु सूत्रकैः ॥ ५४ ॥
द्विशतं त्रिशतं वाज्यं तिलान् हुत्वा तु दक्षिणाम् ।
दद्यादैन्द्रादिकानां तु गजं वा स्वर्णनिर्मितम् ॥ ५५ ॥

---

1. 'थि' ख. पाठः.

काञ्चनं महिषं छागं मुक्ताहारं च पित्तलम् ।
धेनुं पयस्विनीं रूप्यं क्रमेण स्थापकाय तु ॥ ५६ ॥
ततो लिङ्गं च पीठं च नमस्कृत्यैकतां गतम् ।
आचार्यो जुहुयाद् ब्रह्ममूलाङ्गैस्तु शतं घृतम् ॥ ५७ ॥
पुनरागत्य देवेशं नत्वा विज्ञापयेद् गुरुः ।
निर्दोषतां प्रसादास्मिन्नपराधं क्षमस्व भोः ॥ ५८ ॥
इत्युक्त्वा सिकताभिस्तु किञ्चिद् रन्ध्रं प्रपूरयेत् ।
अशेषमष्टबन्धेन नीरन्ध्रं विदधीत च ॥ ५९ ॥
लाक्षा सर्जरसः शङ्खः सिकतात्रिफलारसः ।
कुन्दुरुष्कं च संपिष्टं वज्रलेपोऽयमीरितः ॥ ६० ॥

आम एवेति यावत् । अथवा,

लाक्षा सर्जरसः सिक्थं शर्कराचूर्णगुग्गुलुः ।
गैरिकं च गुलं तैलमष्टबन्धं इतीरितः ॥ ६१ ॥
अन्त्याद् भागाभिवृद्धिः स्यात् पाकश्चिक्कणवद् भवेत् ।

अपि च ।

लाक्षागुलमधूच्छिष्टगुग्गुलूनां समांशकैः ॥ ६२ ॥
सर्जचूर्णं तु तुल्यं स्याद् गैरिकस्य तदर्धतः ।
सर्वेषामर्धमानेन तैलं काले नियोजयेत् ॥ ६३ ॥
अयःपात्रे पचेद् युक्त्वा तद्द्व्यां मृदुवह्निना ।
अत्रापि चिक्कणीपाको वेद्यो निपुणेन हि ॥ ६४ ॥
एतेषामष्टबन्धानां क्षिप्त्वैकं दृढतां नयेत् ।
लिङ्गपीठं तु नीरन्ध्रं नीरं तु न विशे(द् य)था ॥ ६५ ॥
अथवा सीसपत्रैस्तु नीरन्ध्रकरणं स्मृतम् ।
ऊहप्रत्यूहतो युक्त्या लिङ्गं प्रक्षाल्य वै ततः ॥ ६६ ॥
निद्राकुम्भेनाभिषिच्य किञ्चिच्छास्त्रुदकैरपि ।
अर्घ्यपञ्चामृतैश्चैव जलधूपान्तरैः क्रमात् ॥ ६७ ॥
यवगोधूमचूर्णाद्यैरवघृष्याभिषेचयेत् ।
ततः शयनवेदिस्थं शिवकुम्भं च वर्धनीम् ॥ ६८ ॥

समानीयाभिषिच्येशं विद्येशकलशैस्ततः ।
पीठस्याधः स्वदिक्ष्वेवमभिषिच्य यथाक्रमम् ॥ ६९ ॥

शान्तिकुम्भान् पुनः स्वेषु स्थानेष्वेव तु विन्यसेत् ।
अर्घ्यं दत्त्वाभिपूज्याथ बलिं + + + + + या ॥ ७० ॥

मुष्ट्या पीठं तु संस्पृश्य चाङ्गुष्ठाग्रेण वै शिवम् ।
लिङ्गं शिवमनुस्मृत्य पार्वतीं पिण्डिकां स्मरेत् ॥ ७१ ॥

तारं मूले शिवायान्ते नमोमन्त्रः शिवस्य तु ।
तारं शक्तिः क्रियाशक्त्यै उमायै नम इत्यपि ॥ ७२ ॥

मन्त्रद्वयं तु सन्दध्याद् भुक्तिकामस्य मुक्तये ।
विपरीतं तु सन्धेयमथ कादित्रिभागके ॥ ७३ ॥

आत्मादितत्त्वतत्त्वेशान् विन्यसेत् पूर्ववत् क्रमात् ।
आधारानन्तधर्मादीन् वामादीन् पीठगान् न्यसेत् ॥ ७४ ॥

मूर्तिविद्यातनुमनून् लिङ्गे तारहृदादिकम् ।
मूर्तिं विद्यातनुं पञ्चकलाभिश्च षडध्वभिः ॥ ७५ ॥

व्याप्यव्यापकभावेन सर्वं सञ्चिन्त्य योजयेत् ।
मूर्तिः शक्त्यन्ततत्त्वैः स्याद् दशदिग्बाहुमण्डला ॥ ७६ ॥

पञ्चस्रोतोमुखी दिव्या पञ्चमन्त्रशरीरिणी ।
निवृत्तिपादजङ्घोरुः प्रतिष्ठाजघनादिका ॥ ७७ ॥

विद्याहृदयवक्षोंसा शान्तिवक्त्रसरोरुहा ।
शान्त्यतीतकलाशीर्षा भुवनाध्वतनूरुहा ॥ ७८ ॥

वर्णमन्त्राध्वरुधिरा पदमांससिरादिका ।
तत्त्वाध्वमज्जशुक्लास्थिरशेषाध्वमयी स्मृता ॥ ७९ ॥

मूलमन्त्रं स्वहृत्पद्माद् द्वादशान्तशिवान्वितम् ।
संहृत्य चैतन्यघनं परं ज्योतिरनामयम् ॥ ८० ॥

तस्मात् पुष्पाञ्जलिगतं क्रमात्कीलेशमस्तकम् ।
नाडीमार्गेण लिङ्गान्तं मूर्त्या हृत्पङ्कजोदरे ॥ ८१ ॥

संस्थाप्य सर्वतो मूर्तौ मूर्तावाह्वाने च न्यसेत् ।
षान्तं षष्ठस्वरोपेतं बिन्दुं चिच्छक्तये नमः ॥ ८२ ॥

तारादिकमुद्रायैनं लिङ्गं व्याप्तं तु विन्यसेत् ।
निरोध्य तु यथापूर्वमथ पिष्टादिनिर्मितैः ॥ ८३ ॥
लोकपालायुधैः स्वैः स्वैर्मन्त्रैरुद्वर्तयेच्छिवम् ।
नन्द्यावर्त्तोत्पलाम्भोजश्रीवत्सस्वस्तिकाम्बुजैः ॥ ८४ ॥
आदर्शचामराभ्यां चाप्यघोरास्त्राभिमन्त्रितैः ।
उद्वर्त्य पैष्टैर्गन्धाद्भिर्यथावत् स्नपयेच्छिवम् ॥ ८५ ॥
वस्त्रभूषणगन्धाद्यैरुपचारैर्यथोदितैः ।
निवेद्यान्तं यजेद् देवं जपेच्चाष्टोत्तरं शतम् ॥ ८६ ॥
यजमानाभिधानाद्यं नामैश्वर्यपदान्तकम् ।
कृत्वा संप्रार्थयेदस्मिन् सदा संनिहितो भव ॥ ८७ ॥
तथेति देवानुज्ञातो गत्वा कुण्डान्तिकं गुरुः ।
मूलेन चोमामन्त्रेण जुहोति घृतपायसम् ॥ ८८ ॥
प्राच्यां वृषं प्रतिष्ठाप्य दक्षिणे लकुलीश्वरम् ।
गणेशं नैर्ऋते लोकपतीन् स्वस्वदिशास्वपि ॥ ८९ ॥
मातृर्यमात् पश्चिमतः शास्तारं तु मृगे गुहम् ।
भल्लाटे स्थापयित्वाष्टदिक्षु पूर्वादिषु क्रमात् ॥ ९० ॥
स्थण्डिलेष्वग्निमाधाय जुहुयुर्मूर्तिपाः पृथक् ।
इन्द्रक्रतुं न इत्यैन्द्यामाग्निं दूतं तथानले ॥ ९१ ॥
नाके सुपर्णे याम्ये तु नैर्ऋत्यां मोषुणः परा ।
यं रक्षन्तीति वारुण्यां वायवायाहि मारुते ॥ ९२ ॥
सौम्ये तु सोमं राजानमैशान्यां तु त्रियम्बकम् ।
पलाशखदिराश्वत्थप्लक्षन्यग्रोधबिल्वजाः ॥ ९३ ॥
औदुम्बर्यश्च काष्मर्यः समिधोऽष्टौ यथाक्रमम् ।
सर्वद्रव्यैर्जुहोत्यत्र ब्रह्ममूलैस्तु मध्यतः ॥ ९४ ॥
द्रव्यैस्तैरेव लोकेशमन्त्रैर्दिक्षु जुहोति च ।
रात्रौ गणेभ्यश्च बलिं दद्यात् पूर्वादितः क्रमात् ॥ ९५ ॥

अथ द्वितीयदिवसे गुरुर्मूर्तिधरैः सह ।
स्नात्वा नित्यविधानेन शिवमिष्ट्वा यथाविधि ॥ ९६ ॥
अच्छिद्रीकरणाय प्राग्याम्याप्यार्थेशवह्निषु ।
कुण्डेषु जुहुयादाज्यं शिवाघोरास्त्रमन्त्रतः ॥ ९७ ॥
तथा पाशुपतास्त्रेण मूलेन च यथाक्रमम् ।
आग्नेयादिष्वघोरास्त्रात् सावित्र्या च शिवाज्ञया ॥ ९८ ॥
गायत्र्या च तथा गौरीगायत्र्या च सहस्रकम् ।
त्रिकालं देवमभ्यर्च्य दत्त्वा भूतबलिं निशि ॥ ९९ ॥
तृतीयेऽपि दिने प्राग्वदिष्ट्वा देवं विधानतः ।
आज्येनैन्द्यादिकुण्डेषु दिशां शान्त्यै जुहोति च ॥ १०० ॥
ब्रह्माङ्गैः स्वस्वमन्त्रैस्तु प्रतिकुण्डं सहस्रकम् ।
चरुं चैव दशांशेन बलिं दद्याच्च पूर्ववत् ॥ १०१ ॥
ततश्चतुर्थे दिवसे सविशेषं शिवं यजेत् ।
यथावत् कलशैर्देवमष्टोत्तरशतान्तकैः ॥ १०२ ॥
एकाशीत्यूनपञ्चाशत्पञ्चविंशतिभिस्तु वा ।
नवकेनाथवा शक्त्या तत्तल्लिङ्गानुसारतः ॥ १०३ ॥
स्नापयेत् स्नानपटले यथाग्रे वक्ष्यते तथा ।
महानैवेद्यकं च स्यात् स्नपनानुगुणं यथा ॥ १०४ ॥
प्रतिकुण्डं घृतं हुत्वा वागीश्वर्याः सहस्रकम् ।
ब्रह्माङ्गैर्जुहुयात् प्राग्वच्छिवाग्नौ श्रपयेच्चरुम् ॥ १०५ ॥
निवेद्यार्धं तु देवाय शेषं तु नवधा कृतम् ।
प्रतिकुण्डं यथाशक्ति जुहुयुर्गुरुमूर्तिपाः ॥ १०६ ॥
शिवाद्याष्टमन्त्रैश्च द्वितीयदिवसोदितैः ।
यथाशक्ति घृतं हुत्वा पृथक् पूर्णां जुहोति च ॥ १०७ ॥
निर्माल्यमपनीयाथ संस्नाप्य कुसुमाष्टकम् ।
आरोप्य विम्बार्कं दत्त्वा सापेक्षं स्वमनुं ततः ॥ १०८ ॥
मूर्तौ तु शिवीकृत्य चण्डं लिङ्गेऽभिपूजयेत् ।
नीलवर्णं चतुर्वक्त्रं प्रतिवक्त्रं त्रिलोचनम् ॥ १०९ ॥

चतुर्भुजं प्रसन्नास्यं जटाजूटेन्दुशेखरम् ।
अक्षस्रक्शूलटङ्कांश्च बिभ्राणं च कमण्डलुम् ॥ ११० ॥
नागोपवीतकटकरक्तवस्त्राभिभूषितम् ।
एवं ध्यात्वा तु तल्लिङ्गादाहृत्यात्महृदम्बुजे ॥ १११ ॥
निवेश्यैशे निजस्थाने चण्डबेरं शिवालयम् ।
आधारशक्तिकमलपीठे संस्थाप्य तद्धृदि ॥ ११२ ॥
स्वहृत्स्थं चण्डमानीय नाडीमार्गेण विन्यसेत् ।
पूजयेच्चासनार्घादिक्रमान्मुख्योपचारकैः ॥ ११३ ॥

तद्यथा —

चण्डासनं नमोन्तं स्याच्चण्डमूर्तिश्च तादृशी ।
मूलमन्त्रश्च धुन्यादिश्चण्डेश्वरपदं ततः ॥ ११४ ॥
चतुर्थ्यन्तं शिखाबीजं फट्कारश्च नमोन्वितः ।
अङ्गानि चण्डशब्दाद्यं हृदयादीन्यनुक्रमात् ॥ ११५ ॥
चतुर्थ्यन्तानि हुंफट् च नमोन्तं तानि पञ्चभिः ।
आसनादिक्रमादिष्ट्वा स्नानाद्यैरुपचारकैः ॥ ११६ ॥
नैवेद्यशिवनिर्माल्यैः पुष्पाद्यैस्तं प्रपूजयेत् ।
अथ लिङ्गं तु संस्नाप्य मन्त्रानुद्दीप्य पूर्ववत् ॥ ११७ ॥
संपूज्य गन्धपुष्पाद्यैर्नैवेद्यं च प्रदाय तु ।
आचार्यो मध्यमे कुण्डे दद्यादाहुतिसप्तकम् ॥ ११८ ॥

तद्यथा —

स्थिरोऽथ व्यापकस्तद्वदप्रमेयस्ततः परम् ।
अनादिबुद्धो नित्यश्च ततः स्यादविनश्वरः ॥ ११९ ॥
नित्यतृप्तश्च सप्तान्ते भव स्वाहेति योजिताः ।
मन्त्राः स्युरेभिर्हुत्वाज्यमेभिरेव शिवं स्पृशेत् ॥ १२० ॥
सहस्रं वा तदर्धं वा शतं वा जुहुयाद् घृतम् ।
अघोराख्याहुतीभिः पूर्णां च जुहुयात् पुनः ॥ १२१ ॥
कुण्डेभ्यः स्वस्वमन्त्रानुद्वास्य स्वहृदम्बुजे ।
तथैव शिवकुम्भाच्च लोकेशान् द्वारदेवताः ॥ १२२ ॥

तोरणध्वजकुम्भस्था देवताश्च विसर्जयेत् ।
निशि भूतबलिं दत्त्वा स्नात्वा मूर्तिधरैः सह ॥ १२३ ॥

शिवं प्रदक्षिणीकृत्य नमस्कृत्य प्रसादयेत् ।
ततो हिरण्यवसनक्षेत्रभूषणवाहनैः ॥ १२४ ॥

आचार्यं तोषयित्वादौ वित्तशाठ्यविवर्जितः ।
तद्दशांशेन मूर्तीशानध्येतृंश्च तदर्धतः ॥ १२५ ॥

जापकांश्च तदर्धेन शुश्रूषूंश्च तदर्धतः ।
ब्राह्मणान् लिङ्गिनो भक्तान् दीनान्धादींस्तथार्थिनः ॥ १२६ ॥

अन्यानपि यथाशक्ति तोषयेत् कनकादिभिः ।
सर्वस्वेनाथवार्धेन तृतीयांशेन वात्मनः ॥ १२७ ॥

प्रतिष्ठां यजमानस्तु कुर्याल्लिङ्गस्य भक्तितः ।
वित्तशाठ्येन यः कुर्यात् प्रतिष्ठां शक्तिमानपि ॥ १२८ ॥

न स तत्फलमाप्नोति प्रलोभाक्रान्तमानसः ।
ततस्तु यजमानाय स्वस्वकर्मफलार्पणम् ॥ १२९ ॥

आचार्याद्यास्तदा कुर्युः सपुष्पसलिलैः करैः ।
ततः कर्ता स्वपुत्राद्यैः स्वजनैश्चाभिसंवृतः ॥ १३० ॥

नित्यपूजादिसिद्ध्यर्थं विभवं तत्र कल्पयेत् ।
य एवं कुरुते भक्त्या प्रासादाद्यां स्वशक्तितः ॥ १३१ ॥

लिङ्गप्रतिष्ठां सोऽमुष्मिल्लोँके कामानभीप्सितान् ।
अवाप्य पुत्रमित्राद्यैरन्ते लोकानभीप्सितान् ॥ १३२ ॥

प्राप्नोति तद्विमानादौ यावन्तः परमाणवः ।
तावद् वर्षसहस्राणि भोगान् प्राप्य शिवं व्रजेत् ॥ १३३ ॥

इत्थं प्रतिष्ठा कथितेन्दुमौलेर्ज्येष्ठादिलिङ्गाभ्युचिता यथावत् ।
श्रेष्ठानि तन्त्राणि शिवोदितानि काष्ठान्तमालोच्य बहुप्रकारम् ॥ १३४ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे क्रियापादे
प्रतिष्ठापटलः सप्तचत्वारिंशः ॥

अथाष्टचत्वारिंशः पटलः।

अथ नित्योत्सवं शम्भोः कुर्यात् सांनिध्यकारकम्।
येनारिष्टानि शाम्यन्ति गुणास्तुष्टिं व्रजन्ति च॥ १॥

त्रिसन्ध्यं पूजयित्वेशं नैवेद्यहवनान्तकम्।
रुद्रपारिषदेभ्यस्तु बलिं दद्याद् यथाविधि॥ २॥

अत्र मञ्जर्या—

"कुर्यान्नित्यबलिं त्रिसन्ध्यमुदितं पाक्यस्तदर्थं चरु-
र्हन्मन्त्रेण तु तण्डुलांस्तु सलिलैः प्रक्षाल्य चाग्नौ पचेत्।
तेनाज्यं त्वभिघार्य पक्वसमये मूलेन मन्त्रेण तत्
तेनैवाप्यवतार्य तेन हविषा लिङ्गं प्रकुर्याच्छुभम्॥"

इति। तद्यथा—

सौवर्णे राजते तद्वदमत्रे ताम्रजेऽपि वा।
षोडशाङ्गुलविस्तीर्णे धौते चाज्याभिघारिते॥ ३॥

सिद्धं हविस्तत् प्रक्षिप्य हृदयेनाभिघार्य तु।
मूलेनोच्चं भवेल्लिङ्गं रविदिग्वसुमात्रकैः॥ ४॥

श्रेष्ठादिकं तदाज्येन दध्ना चालिप्य सर्वतः।
सस्वर्णपुष्पं शिरसि तस्मिन्नावाह्य मूलतः॥ ५॥

शिवं चलासनगतं गन्धाद्यैः पूजयेत् क्रमात्।
भेरीपणवगोवक्त्रढक्काझल्लरिकानकैः॥ ६॥

तिमिलामड्डुकाम्भोजतालकाहलमर्दलैः।
सवेणुवीणाकांस्यैश्च बालेयात्राभिशंसिभिः॥ ७॥

मध्यमं षष्टिमात्रं तु वादयेयुश्च वादकाः।
ततः स्नातं द्विजं शिष्यं शुभ्रपुं वाम्यतं शुचिम्॥ ८॥

शुक्लोष्णीषोत्तरासङ्गं कटकाद्यैर्विभूषितम्।
संप्रोक्ष्य तं वृषं ध्यात्वा तल्लिङ्गं पात्रसंस्थितम्॥ ९॥

आरोप्य तस्य शिरसि पुष्पाण्यारोपयेद् गुरुः।
तथैवान्यस्तु सकलं लिङ्गं हेमादिकं द्विजः॥ १०॥

आवाहितशिवं त्वग्रे गच्छेत् तु शिरसा वहन् ।
रथेन वा शिबिकया द्विजारूढगजेन वा ॥ ११ ॥
तथैव विप्राः शुचयः स्नाताः सर्वेऽपि वाग्यताः ।
छत्राणि च वितानं च घण्टां कुसुमचामरम् ॥ १२ ॥
स्रग्गन्धपुष्पधूपांश्च धारयेयुः समाहिताः ।
तथान्ये दीपकलशदर्पणान् हेमपादुके ॥ १३ ॥
+ + + + + यो वापि सुवेषाः समलङ्कृताः ।
तत्र देवाग्रतो गच्छन् सामान्यार्घ्यकरो गुरुः ॥ १४ ॥
गन्धपुष्पादिकैरिष्ट्वा गणेभ्यः प्रक्षिपेद् बलिम् ।
तत्र देवाग्रतो नार्यः सुरूपाः समलङ्कृताः ॥ १५ ॥
गीतनृत्तं तथा कुर्युरन्ये + + + + + + ।
+ + येन व्रजन्त्यग्रे प्रणमन्तः स्तुवन्ति ये ॥ १६ ॥
नृत्यन्ति ये वा गायन्ति मुच्यन्ते सर्वकिल्बिषैः ।
विमानस्य चतुर्दिक्षु पूर्वादिद्वारपालकान् ॥ १७ ॥
नन्दिनं च महाकालं भृङ्गीशं गणनायकम् ।
वृषभं षण्मुखं देवीं + + + + + + + + ॥ १८ ॥
तत्र दक्षिणतो द्वारे दक्षिणामूर्तिं + + + ।
+ + र्तिं चेति केचित् (?)
स्वदिक्ष्विन्द्रादिलोकेशांस्तारादिस्वस्वनामभिः ॥ १९ ॥
नमोन्तमिति पूज्यैतान् बलिं तेभ्यो विनिक्षिपेत् ।
इन्द्रात् प्राच्यां + + + + + + + + + + + + ॥ २० ॥
सत्यकायास्य पुत्राय प्रभायै चास्य वामतः ।
स्कन्दाय वायोः प्राच्यां तु दुर्गायै स्कन्दपूर्वतः ॥ २१ ॥
सोमात् पूर्वे कुबेराय चण्डेशाय स्वगोचरे ।
क्षेत्रे + + + + + + मुख्याभिर्विकिरेद् बलिम् ॥ २२ ॥
अथान्तर्गोपुरद्वारि तीक्ष्णनेत्राय दक्षिणे ।
बलिं द्वाःस्थाय विकिरेन्मृगास्याय तथोत्तरे ॥ २३ ॥

गोपुरादथ निष्क्रम्य प्रादक्षिण्येन तु व्रजेत् ।
बलिपीठे + + + + + + स्थित्वा तदुन्मुखः ॥ २४ ॥

ये समस्तं जगद् व्याप्य तिष्ठन्ति बलिकाङ्क्षिणः ।
ते रुद्रपार्षदाः सर्वे गृह्णन्तु बलिमुत्तमम् ॥ २५ ॥

इत्यनेन गणाञ् शम्भोः श्रावयित्वा ततो गुरुः ।
मध्यहारान्तरा गच्छन्ना + + + क्षिपेद् बलिम् ॥ २६ ॥

अष्टौ गणेशा नन्द्याद्याः कोटिकोटिगणेश्वराः ।
नन्दीशश्च महाकालो भूतनाथो महीधरः ॥ २७ ॥

पर्वतेशो गुहेशश्च कालपाशकपालिनौ ।
प्रागादिकं क्रमादेभ्यः स्वाख्याभिर्विकिरेद् बलिम् ॥ २८ ॥

ततस्तु बलिपीठस्य परितस्तूपपीठगान् ।
भूतिदाद्यांस्तु पूर्वाद्यं संपूज्य विकिरेद् बलिम् ॥ २९ ॥

भूतिदं दुर्निरीक्षं च भीमरूपं सुलोचनम् ।
सुमुखं त्रिशिखं चेति त्रिभुजं त्रिशिरसं तथा ॥ ३० ॥

पिङ्गलं हरसेनं च दशैतान् भूतनायकान् ।
पिङ्गलं तत्कुमुदके हरसेनं तथोपरि ॥ ३१ ॥

पीठपङ्कजमध्ये तु निजाख्याभिर्नमोन्तकम् ।
हरसेनं तु तन्नाम्ना तद्गायत्र्या च पूजयेत् ॥ ३२ ॥

ओं हरसेनाय विद्महे महाबलाय धीमहि तन्नो दशमूर्तिः प्रचोदयात् इति ।

सर्वान्नेन बलिं दद्यात् पुष्पाद्यं तदशेषतः ।
क्षिप्त्वा नमस्कृत्य गुरुः प्रविशेद् देवमन्दिरम् ॥ ३३ ॥

ततः प्रवृत्तसङ्गीतलास्यताण्डवमण्डनैः ।
विलम्बितं समाश्रित्य द्वितीयं तु प्रदक्षिणम् ॥ ३४ ॥

नीत्वा द्रुतं तृतीयं तु गीतवादित्रनिस्वनैः ।
नीत्वा प्रदक्षिणं देवमालयान्तः प्रवेशयेत् ॥ ३५ ॥

अन्तर्मण्डलके प्राग्वत् परिक्रम्य प्रदक्षिणम् ।
प्रक्षाल्य पादौ प्रविशेन्मण्डपे वार्धमण्डपे ॥ ३६ ॥

पीठे निवेश्य संपूज्य प्रणम्याभिप्रसाद्य च ।
अस्त्रलिङ्गस्थितं देवं मूललिङ्गे नियोजयेत् ॥ ३७ ॥
अस्त्रलिङ्गे तु चण्डेशमावाह्येष्ट्वा विसृज्य तु ।
तदस्त्रलिङ्गं क्षणिकमगाधेऽम्भसि निक्षिपेत् ॥ ३८ ॥
दद्याद् गोभ्योऽथवा नित्यमतो नित्योत्सवः स्मृतः ।

नित्योत्सवाधिकारः ।

---

महोत्सवविधिः शम्भोः कथ्यते येन तर्पिताः ॥ ३९ ॥
गणाः सगणनाथाः स्युः सर्वशान्तिप्रदा नृणाम् ।
प्रतिसंवत्सरं वापि प्रतिषण्मासमेव वा ॥ ४० ॥
शिवयात्रोत्सवं सम्यक् कुर्यात् सर्वार्थसिद्धये ।
तत्र यात्रा रथेन स्यादथवा शिबिकादिना ॥ ४१ ॥
चक्रवर्त्युपचारेण तल्लक्ष्मातो निगद्यते ।
शिबिकाद्यं रथाद्यं च यानं खट्वादिकं तु यत् ॥ ४२ ॥
शयनासनसंज्ञं स्यात् तल्लक्ष्म पृथगुच्यते ।
पैठी च शैखरी मौण्डी त्रिविधा शिबिका भवेत् ॥ ४३ ॥
पैठी तु भित्तिकान्ता स्याच्छैखरी शिखरान्विता ।
मौण्डी स्तम्भोत्तरान्ता तु शालाच्छादनसंयुता ॥ ४४ ॥
व्यासायामादिकं त्वासां समानं तच्च कथ्यते ।
त्रिवितस्तिकविस्तारा दीर्घा पञ्चवितस्तिकम् ॥ ४५ ॥
कनिष्ठा मध्यमश्रेष्ठे त्रिषण्मात्राङ्गुलाधिके ।
अध्यर्धं वायता व्यासात् स्वकर्णायामतोऽपि वा ॥ ४६ ॥
व्यासार्धं भित्तितुङ्गं स्याच्छ्रेष्ठाथो मध्यमाधरौ ।
मूर्त्यङ्गुलविहीनोच्चे मुख्यमध्याधमक्रमात् ॥ ४७ ॥
सार्धेषुशरवेदांशैरिषिकाविस्तृतिः स्मृता ।
सा स्वव्यासार्धमुच्चा स्याद् दन्तदार्वादिनिर्मिता ॥ ४८ ॥
कम्पपङ्कजनिम्नानि कुमुदं निम्नमेव च ।
स्यात् क्षुद्रपट्टिका चेत्थमीषिकाजकृतिर्भवेत् ॥ ४९ ॥

शिरेरूर्ध्वे तु हस्तस्य व्यासः सार्धाङ्गुलोऽधमः ।
सार्धद्विमात्रत्र्यंशश्च विस्तारौ मध्यमोत्तमौ ॥ ५० ॥
व्यासत्रिपादमर्धं वा हस्तोर्ध्वे गोलकार्धवत् ।
वेत्रार्धवद् वा छत्राभो हस्तो दन्तादिनिर्मितः ॥ ५१ ॥
इषिकाहस्तयोर्मध्ये त्रिधा भक्तेऽधरोर्ध्वयोः ।
भागयोर्मध्यतोऽन्ते चाप्यादौ स्युर्वेदकम्पकाः ॥ ५२ ॥
सार्धद्वयद्वयाध्यर्धमात्रैः श्रेष्ठादिकम्पकाः ।
+ + + + + + + भागौ गुलिकाफलकान्वितौ ॥ ५३ ॥
मध्यभागे तथा शिष्टावूर्ध्वाधःकम्पकावपि ।
नरनारीनाटकाद्यैरलङ्कुर्यात् तु युक्तितः ॥ ५४ ॥
इषिकाहस्तयोर्मध्ये व्यालाः स्युः कोणगा बहिः ।
इषिकाग्रन्थ + + + + + + + + + + + ताः ५५ ॥
स्वव्यासकर्णमात्रेण मुष्टिबन्धविनिर्गमः ।
निर्गमो मकरास्यो वा व्यासायामस्थभक्तया(?) ॥ ५६ ॥
नन्दरुद्रसमाः कार्यास्तुल्या वा स्युः शरर्षिभिः ।
स्तम्भानां तु घनव्यासौ कम्पानां च समौ स्मृतौ ॥ ५७ ॥
था + + + + + + + + + + + + + + + भिः ।
त्रिचतुर्मात्रविस्तीर्णाः षट्सप्ताष्टाङ्गुलोच्छ्रिताः ॥ ५८ ॥
सहीरघृतकुम्भाः स्युरधःपादाः सलग्नकाः ।
ताम्रायसैः कीलपट्टैर्युक्त्या स्युः सर्वतो दृढाः ॥ ५९ ॥
इषीणां तु + मा + + + + + + + + + + + ।
+ + + + + + + + + + + + + + + + + ॥ ६० ॥
पैठीत्थं शिबिका प्रोक्ता शैलबीग्रौण्डिके तथा ।
कुर्यादनेन मार्गेण विशेषस्तु निगद्यते ॥ ६१ ॥
स्वव्यासतुल्योच्चोर्ध्वाङ्घ्रि + + + + + + + + ।
+ + + + + + पेता जालभित्तिसमावृता ॥ ६२ ॥
सकूटाच्छादनवती सद्वारा युक्तितो भवेत् ।
स्तम्भानां मध्यतो मानं शिबिकानां विधीयते ॥ ६३ ॥

मधूकशाकतिमिशपनसा + + + + ताः ।

## शिबिकाधिकारः ।

रथ + + + + द्वातु षट्सप्ताष्टवितस्तिभिः ॥ ६४ ॥
व्यासश्चाक्षायतिः सैव नाभ्यन्ताक्षोत्तरायतिः ।
स्वव्यासाध्यर्धमायामो रथोपस्थस्य कीर्तितः ॥ ६५ ॥

रथ + + + + + + + + + + + वा नवा ।
सप्त वा पञ्च वा युक्त्या बद्धाश्चाक्षोत्तरोर्ध्वतः ॥ ६६ ॥
तिर्यक्कम्पैस्तु तावद्भिरयःकीलैर्दृढीकृतः ।
अग्राक्षान्मध्यभारो यः स चेषादण्ड इष्यते ॥ ६७ ॥

तस्योपरिष्टाद् यद् वक्रं दारु + + + + + + ।
कूबरः स्यात् तदायामो हस्तत्रयमितो भवेत् ॥ ६८ ॥
आवक्रकूबरस्त्वग्रे पद्मकुड्मलसन्निभः ।
ऊर्ध्वे तु भारदारूणां फलकाभिस्तु युक्तितः ॥ ६९ ॥
प्रस्तरः पट्टकीलाद्यैः सुदृढः सुसमो भवेत् ।
स्वायामवेदभागेन रथोपस्थाग्रनिर्गमः ॥ ७० ॥

सारथिप्रभृतीनां स्यादासनार्थं प्रकल्पितः ।
अक्षोत्तरायामसमा चक्राणां विस्तृतिः स्मृता ॥ ७१ ॥
तन्मध्यनाभयस्तास्तु दशमात्राङ्गुलोन्नताः ।
तावदेव च तासां तु विस्तारः परितः स्मृतः ॥ ७२ ॥
चक्रेष्वरान्य + वेषु द्वात्रिंशद् वा तदर्धतः ।
ते स्युः पिपीलिकामध्या यवमध्यास्तथापि वा ॥ ७३ ॥
इन्दीवरदलाकारा मातुलुङ्गोपमास्तु वा ।
नाभ्यादि तेषामायामो नेमेः सीमादितो भवेत् ॥ ७४ ॥
नेमिव्यासस्तु वेदेषुयवमात्रोऽन्ताधमादितः ।
पुष्पस्वस्तिकखण्डेन्दुमत्स्याद्यैस्तदलङ्कृतिः ॥ ७५ ॥
चक्रार्धमानदीर्घाः स्युः स्तम्भाश्चत्वार एव हि ।
मूलाग्रयोस्ते व्यासेन चतुस्त्र्यङ्गुलसम्मिताः ॥ ७६ ॥

ते चापि सुदृढाः कार्याः स्तम्भलक्षणसंयुताः ।
स्तम्भोत्तरामभागैकभागाद् भित्त्युन्नतिर्भवेत् ॥ ७७ ॥
ईषादिहस्तदण्डान्तकम्पपद्माद्यलङ्कृता ।
भूतव्यालगजाद्यैश्च नाटकैश्च विभूषयेत् ॥ ७८ ॥
सर्वत्र कीलैः सुदृढैस्ताम्रायःपट्टबन्धनैः ।
सुदृढं युक्तितः कृत्वा स्तम्भानामुपरि क्रमात् ॥ ७९ ॥
पोतिकोत्तरसंयुक्तं कपोताद्यैरलङ्कृतम् ।
प्रासादमण्डपाकारं रम्यं सशिखरं भवेत् ॥ ८० ॥
एवमेव रथं कुर्याद् रङ्गाख्यं शिखरं विना ।
साङ्ग्रामिको द्विचक्रः स्याच्छिखरस्तम्भवर्जितः ॥ ८१ ॥
वितस्तिभित्तिसंयुक्तः सेषादण्डः सकूबरः ।
शकटोऽपि द्विचक्रः स्याद् भित्तिस्तम्भादिवर्जितः ॥ ८२ ॥
पर्यङ्कस्य तु विस्तारो दैर्घ्यं च शिबिकासमम् ।
इषिकाः स्युस्तदाकाराः कम्पपद्माद्यलङ्कृताः ॥ ८३ ॥
अष्टादशाङ्गुलोत्सेधाः पादाः श्रेष्ठाः सहेषया ।
त्रिपञ्चकाङ्गुला मध्याः कनिष्ठा द्वादशाङ्गुलाः ॥ ८४ ॥
स्वोच्चामश्रुद(?)तीष्वंशाच्छ्रेष्ठाद्या पादविस्तृतिः ।
पादा व्यालहरिप्रख्याः श्रेष्ठा मध्यास्त्वथाधमाः ॥ ८५ ॥
ऋजवः केवलाः पादा एकद्रव्याः समाः शुभाः ।
इषिकाश्च मिथस्तुल्याः शुभा दार्वादिनिर्मिताः ॥ ८६ ॥
हैमा दान्ता दारवाश्च पादेषास्तूत्तमादिकाः ।
क्षौमकार्पासपट्टाभ्यां प्रस्तरौ श्रेष्ठमध्यमौ ॥ ८७ ॥
अधमः फलकाभिः स्यात् स चेषादारुभिः स्मृतः ।
सिंहव्यालाङ्घ्रिपर्यङ्कौ विप्रक्षत्रिययोः स्मृतौ ॥ ८८ ॥
अन्येषामृजुपादाः स्युः सर्वेषामृजवोऽथवा ।
नवससेदूत्तरैस्तु क्रमाद् विंशतिमात्रकैः ॥ ८९ ॥
श्रेष्ठाधमासनं व्यासतुल्योच्चं चतुरश्रकम् ।
पर्यङ्कस्येव तत्पादा व्यालाद्याखिविधाः क्रमात् ॥ ९० ॥

व्यासाष्टमांशायामवृद्ध्या तु द्विगुणान्तकम् ।
सप्तधैवासनं हस्तिभूतसिंहवृषाङ्घ्रिकम् ॥ ९१ ॥
सूर्याङ्गुलैः स्यात् पादोच्चं देवविप्रनृपोचितम् ।
सोपराब्जकपोतं तदालिङ्गान्तरिकादिभिः ॥ ९२ ॥
उपपीठोचितैर्युक्तं सिंहपादैर्विचित्रितम् ।
तस्योपरिष्टात् पश्चार्धे हेमरत्नैर्विचित्रितम् ॥ ९३ ॥
नक्रतोरणसंयुक्तं कुर्यात् कल्पकपादपम् ।
सिंहासनं स्याद् देवानां राज्ञां चेष्वंशतुङ्गपात् ॥ ९४ ॥
पूजापीठं तु देवानामाद्यं षण्मात्रविस्तृतम् ।
द्विवसुः ... लविवृद्ध्यातः करान्ताद् दशधा ततम् ॥ ९५ ॥
चतुरश्रं तु वृत्तं वाप्यायताश्रं तु युक्तितः ।
त्रिपञ्चषड्वस्वंशैर्वा पीठपादोन्नतिर्भवेत् ॥ ९६ ॥
कहमत्यूहचित्राढ्यं गृहार्चादौ विधीयते ।
यत् पीठं पिण्डिकाकारं हेमरूप्यादिनिर्मितम् ॥ ९७ ॥
दारवं वा गृहार्चादौ भद्रपीठं तु तत् स्मृतम् ।
तदेव नालसंयुक्तं पीठं स्यात् स्नपनोचितम् ॥ ९८ ॥
तदेव मध्यगर्ताढ्यं प्रतिष्ठादौ तु योजयेत् ।
विष्कुः पादोनमर्धं वा व्यासः कूर्मासनस्य तु ॥ ९९ ॥
शरवेदाग्निमात्रोच्चं क्रमाच्छ्रेष्ठादिकं स्मृतम् ।
स्वव्यासाद् रसनन्देनमात्रोना तूत्तमादिका ॥ १०० ॥
नालदण्डायतिव्यासषडंशाद् दण्डविस्तृतिः ।
+ + + + + + + + + + + तच्च क्रमात् कृशम् ॥ १०१ ॥
वृत्त एव हि दण्डः स्यादधश्चामध्यनिर्गतः ।
तत्राम्बुजादिचिह्नं स्यादग्रं तु समखण्डितम् ॥ १०२ ॥
वृत्तं वा चतुरश्रं वा शस्तं कूर्मासनं तु तत् ।
स्वोच्चवेदैकभागेन घनं स्यात् फलकासनम् ॥ १०३ ॥
कम्पपट्टच + + + + + + + + + + + ।
ह्रस्वं स्वरसभागेन मविष्टाघोऽस्य भित्तिका ॥ १०४ ॥

मूले त्वंशघना त्वग्रे मात्रमात्रघना भवेत् ।
आसनोच्चत्रिभागोच्चा वृत्ताकारा मनोरमा ॥ १०५ ॥
व्रतिनां दीक्षितानां च पूजाजपहुतादिषु ।
+ + + + नरेन्द्राणां वृत्तं कूर्मासनं भवेत् ॥ १०६ ॥
आसनं चतुरश्रं स्यात् पूजादावेव नान्यदा ।
नित्योत्सवो निगदितोऽत्र महोत्सवार्थे
यानादिकं च कथितं परमेश्वरस्य ।
यत्रो + + + + + + + + + + + + ।
+ + + + + + + + + + + + + + ॥ १०७ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे
क्रियापादे नित्योत्सवयानशयनादि-
पटलोऽष्टचत्वारिंशः ॥

---

अथ एकोनपञ्चाशः पटलः ।

महोत्सवं त्रिभिर्मासैश्चतुर्भिः षड्भिरेव वा ।
+ + + + + + + + + + + + + + रतिः ॥ १ ॥
चैत्रादिकेषु मासेषु मासा + सितपर्वसु ।
उत्सवावभृथस्नानं सङ्कल्प्यास्मात् पुरैव तु ॥ २ ॥
यात्रां प्रवर्तयेच्छम्भोर्गणेभ्यो विकिरेद् बलिम् ।
कुर्याद् विशेषपूजां चाप्यष्टा + + + + + + ॥ ३ ॥
+ + + द्वादशाहं वा श्रेष्ठमध्याधमोत्सवे ।
दिनैर्वा रुद्रनन्दार्षिसंख्यैः श्रेष्ठादिकोत्सवाः ॥ ४ ॥
उक्ताः पञ्चत्र्येकदिनैर्भवन्त्यल्पोत्सवास्त्रयः ।
ध्वजारोपणपूर्वं तु कुर्या + + + + + + ॥ ५ ॥
न ध्वजारोपणं शस्तं पञ्चाहादिष्विह त्रिषु ।
उत्तमाद्युत्सवानां तु त्रिद्व्येकगुणवासरात्(?) ॥ ६ ॥
पूर्वमेव शुभे लग्ने ध्वजारोपणमाचरेत् ।
तस्मिन्नेव दिने रात्रौ भेरीसंनादनं स्मृतम् ॥ ७ ॥
महोत्सवानां प्रत्येकमङ्कुरार्पणकत्रयम् ।
ध्वजाङ्कुरः स्यात् प्रथमो द्वितीयश्चोत्सवाङ्कुरः ॥ ८ ॥

तृतीयोऽवभृथार्थः स्यात् सर्वे स्युः पूर्वमर्पिताः ।
ध्वजदण्डतरुः पूगस्त्वक्सारः शाक एव वा ॥ ९ ॥
सालो वा चम्पकः शस्तो रक्तसारोऽसनस्तथा ।
अकोटरो निर्व्रणः स्याद् ऋजुर्ग्रन्थ्यादिवर्जितः ॥ १० ॥
सवल्कलौ वेणुपूगावन्ये सर्वेऽप्यवल्कलाः ।
मूलाग्रयोः समच्छेदाः साधुवृत्ता मनोरमाः ॥ ११ ॥
ध्वजदण्डस्य तुङ्गं तु विज्ञेयं द्वारतुङ्गतः ।
पञ्चपञ्चगुणं श्रेष्ठं मध्यमत्यष्टिसंमितैः ॥ १२ ॥
कनिष्ठं स्याद् दशगुणमथ स्तूपिसमोच्छ्रयः ।
मुख्यं कण्ठमितं मध्यं नीचं वृषतलोच्छ्रितम् ॥ १३ ॥
त्रिद्व्येकगुणकं वा स्याद् विमानादिति केचन ।
चत्वारिंशच्च षट्त्रिंशत् त्रिंशच्चैवाङ्गुलानि तु ॥ १४ ॥
श्रेष्ठादिध्वजदण्डानां नाहाः स्युस्त्रिविधाः क्रमात् ।
ध्वजदण्डसजातीयस्तूपदण्डतरुर्भवेत् ॥ १५ ॥
ध्वजदण्डचतुर्थांशात् पञ्चांशाद् वा षडंशतः ।
उपदण्डस्य तुङ्गं स्यात् तन्नाहो द्वादशाङ्गुलः ॥ १६ ॥
त्रिकारमनुसूर्यांशैरायताः सार्धविस्तृताः ।
सच्छिद्राग्रास्त्रयस्कन्धाश्छिद्रप्रोतोपदण्डकाः ॥ १७ ॥
प्रविष्टा ध्वजदण्डाग्रे युक्त्या कार्याः समान्तराः ।
उपदण्डः केतुदण्डादग्रे तालाधिकायतः ॥ १८ ॥
तस्याग्राधस्तलामात्रे (?) वलयस्त्वायसो भवेत् ।
पताकाबन्धनीरज्जुस्तदन्तः संविशेद् यथा ॥ १९ ॥
कार्पासिकी यन्त्ररज्जुः स्थूला मध्यमया समा ।
द्विगुणा ध्वजदण्डोच्चा क्षालिता सुविशोधिता ॥ २० ॥
ध्वजस्थानं वृषाग्रे वा बलिपीठाग्रतोऽपि वा ।
कुर्यात् तु मध्यहारायां मर्यादामध्यमेऽथवा ॥ २१ ॥
द्वारतुङ्गाद् रविगुणं पुरोद्वाराद् विहाय तु ।
क्रमेण नाभिकट्यूरुदघ्ने गर्ते विलेपिते ॥ २२ ॥

हेमकूर्मं निधायेष्टा सुलग्नादौ दिने तु ।
ध्वजदण्डं समुच्छ्रित्य दर्भमालोपलङ्कृतम् ॥ २३ ॥
शङ्खतूर्यादिनिर्घोषैः स्थापयेयुर्मुदान्विताः ।
तन्मूलवेदिकां कुर्याद् द्व्येकहस्ततोच्छ्रयाम् ॥ २४ ॥
द्वारोच्चत्र्यंशतो द्व्यंशव्यासामेकांशमुन्नताम् ।
क्रमाच्छिलेष्टकामृद्भिः श्रेष्ठाद्या वेदिकाः स्मृताः ॥ २५ ॥
पताकायास्तथायामो नन्दाष्टमुनिकिष्कुभिः ।
तत्पञ्चांशेन तद्व्यासो व्यासार्धाच्छिखरं भवेत् ॥ २६ ॥
पुच्छत्रयं द्वयं वा स्याद् व्यासाद् दीर्घं क्रमात् कृशम् ।
स्वायामपञ्चभागैकभागान्मध्ये वृषं लिखेत् ॥ २७ ॥
शुक्लो वृषो रक्तखुरो रक्तश्रवणशृङ्गवान् ।
सितासितविशालाक्षः सुग्रीवः सुमुखाकृतिः ॥ २८ ॥
सुवालधिः सुपादोरुः पीनोत्तुङ्गककुद् भवेत् ।
शयितो वा स्थितो वा स्याद् यथोक्तवृषलक्षणः ॥ २९ ॥
ध्वजोच्छ्रयात् पूर्वदिने पूर्वरात्रेऽधिवासनम् ।
कुर्याद् विशेषपूजां च शिवाय वृषभाय च ॥ ३० ॥
वृषभाय तु मुद्राग्रं निवेद्याभिप्रणम्य च ।
वृषाग्रे स्थण्डिलं कृत्वा शालिभिस्तण्डुलैरपि ॥ ३१ ॥
तस्मिन् नवपदं कृत्वा कलशान् नव विन्यसेत् ।
आपूर्य शुद्धसलिलैः कूर्चहेमाम्बरान्वितम् ॥ ३२ ॥
अलङ्कृत्य वृषं मध्ये परितोऽष्टौ च दिक्पतीन् ।
आवाह्य सम्यग् गन्धाद्यैरभिपूज्य यथाविधि ॥ ३३ ॥
तारादिवृषमन्त्रेण स्वगायत्र्या वृषं यजेत् ।

ओं वृषभाय नमः । ओं महाबलाय नमः । ओं हरवाहनाय नमः । ओं सौरभेयाय नमः । ओं तीक्ष्णशृङ्गाय विद्महे वेदपादाय धीमहि । तन्नो वृषभः प्रचोदयात् ।

स्वैर्मन्त्रैरष्टकोकेशांस्तदग्रे स्थण्डिले पुनः ॥ ३४ ॥

---

१. 'महादेवाय धी' ख. पाठः.

पताकां विन्यसेत् तस्मिन् वृषमन्त्रेण तां यजेत् ।
तस्मात्पुरस्तद्वये कृत्वा मण्डलं चतुरश्रकम् ॥ ३५ ॥

तत्राग्निं सम्यगाधाय कृत्वा कर्म शिवानले ।
पलाशसमिधो हुत्वा वृषमन्त्रेण देशिकः ॥ ३६ ॥

तिलानाज्यं चरुं चापि पृथगष्टोत्तरं शतम् ।
पूर्णां स्विष्टकृतं चापि हुत्वा वह्निं विसर्जयेत् ॥ ३७ ॥

सुव्युष्टायां रजन्यां तु कृतनित्यक्रियो गुरुः ।
पूर्वाह्णे वाथ मध्याह्ने पूर्वरात्रे सुलग्नके ॥ ३८ ॥

शुश्रूषुभिर्द्विजैः शुद्धैः सोष्णीषैः सोत्तरीयकैः ।
ध्वजमुद्धृत्य यन्त्रेण वाहयेच्छिरसाथवा ॥ ३९ ॥

शङ्खभेर्यादिनिर्घोषैः कृत्वा ग्रामप्रदक्षिणम् ।
अन्तः प्रविश्य निर्दिष्टे ध्वजस्थाने तु विन्यसेत् ॥ ४० ॥

पुण्याहं वाचयित्वाथ तज्जलैः क्षालयेद् ध्वजम् ।
दण्डस्य मूले मध्येऽग्रे वृषषण्मुखमारुतान् ॥ ४१ ॥

तत्तन्मन्त्रेण संपूज्य गीतवाद्यादिमङ्गलैः ।
वृषकुम्भं समानीय ध्वजोपान्ते तु विन्यसेत् ॥ ४२ ॥

कुम्भस्थान् वृषमन्त्रांस्तु ध्वजे वृषहृदि न्यसेत् ।
मङ्गलाङ्कुरदीपाद्यैरलङ्कृत्य यथाविधि ॥ ४३ ॥

रज्ज्वा पताकासङ्गिन्या गायत्र्या वृषभस्य तु ।
ध्वजमारोपयेत् सम्यग् रज्ज्वा दण्डं च वेष्टयेत् ॥ ४४ ॥

लोकपालास्थितैः कुम्भैः ध्वजमूलेऽभिषेचयेत् ।
तन्मूले ध्वजमाराध्य निवेद्यान्तं यथाविधि ॥ ४५ ॥

गौं

नमस्तेऽस्तु त्रिणेत्राय ध्वजाधिपतये नमः ।
नमोऽस्तु नन्दिने तुभ्यमुत्सवस्य प्रसिद्धये ॥ ४६ ॥

अथ ध्वजस्य पुरतः स्थण्डिले शालितण्डुलैः ।
विहिते विन्यसेद् भेरीं वाससा समलङ्कृताम् ॥ ४७ ॥

रुद्रं दक्षिणतो भेर्या वामतस्तु जनार्दनम् ।
मध्ये ब्रह्माणमाराध्य कोणदण्डे गुहं यजेत् ॥ ४८ ॥
तदग्रे स्थण्डिले पद्मं विलिख्य शुभकर्णिकम् ।
तत्र शूलं प्रतिष्ठाप्य यथावदभिपूजयेत् ॥ ४९ ॥
ततस्त्रियम्बकाद्येन मन्त्रेण प्रथमं गुरुः ।
कोणेन ताडयेद् भेरीमिदंविष्ण्वादिना ततः ॥ ५० ॥
तृतीयं ब्रह्मजज्ञानमन्त्रेणैव तु ताडयेत् ।
वाद्यकारं ततः स्नातं शुक्लवस्त्राद्यलङ्कृतम् ॥ ५१ ॥
आहूय वादयेत् तेन त्रिमार्गपरिवर्तनात् ।
ततोऽन्नलिङ्गमुत्थाप्य शङ्खभेर्यादिनिःस्वनैः ॥ ५२ ॥
गीतनृत्तरवैश्चैव च्छत्रचामरमङ्गलैः ।
ग्रामप्रदक्षिणं कुर्वन् ब्रह्मेन्द्रादीन् दिगीश्वरान् ॥ ५३ ॥
दिक्षु सन्धिषु संपूज्य मन्त्रैः श्लोकैर्निजैः स्तवैः ।
आवाह्य चा + भिष्टूय शुद्धान्नेन बलिं क्षिपेत् ॥ ५४ ॥
भो भो ब्रह्मंस्त्वयेत्याद्यैः शिवाज्ञां श्रावयेदपि ।
ततो देवालयं गत्वा ध्वजस्य पुरतः स्थितः ॥ ५५ ॥
रुद्रादित्यान् वसून् सोममश्विनौ च मरुद्गणान् ।
पितॄनृषींश्च गन्धर्वयक्षविद्याधरासुरान् ॥ ५६ ॥
नागकिन्नररक्षांसि पिशाचान् भूतनायकान् ।
अब्धीनप्सरसः सिद्धान् नदीः शैलान् वनस्पतीन् ॥ ५७ ॥
आवाह्योत्सवसेवार्थं स्वैः स्वैस्ताराादिनामभिः ।
आगच्छन्त्विति च ब्रूयाच्छिवाज्ञां श्रावयेच्च तान् ॥ ५८ ॥

ओं

भो भो रुद्रगणाः स्वैः स्वैः परिवारैर्गणैः सह ।
सेव्योऽयमुत्सवः शंभोः सुसन्तुष्टैः शिवाज्ञया ॥ ५९ ॥

ओं

इत्यादिभिस्तु देवादीञ्छ्रावयेत् स्वस्वनामभिः ।
रात्रौ बलिं च विकिरेच्छङ्खभेर्यादिनिस्वनैः ॥ ६० ॥

समालिप्य प्रतिदिनं निवेद्यान्तं यजेद् ध्वजम् ।

ध्वजारोहणाधिकारः ।

---

अथोत्सवदिने प्राप्ते वीथीस्तु परिशोधयेत् ॥ ६१ ॥

शिवालयग्रामपुरपत्तनादिषु सर्वतः ।

अत्र मञ्जर्याम् —

"संमार्ज्य ग्रामवीथीः प्रतिदिशमभितः सेचयेद् गन्धतोयै-
रुत्फुल्लैर्दिव्यगन्धैः प्रतिनवकुसुमैः संस्तरेत् तासु भूयः ।
कुर्यात् पीठान् यथाशास्त्वपि बलिविधये ग्रामपर्यन्तदेशे
ग्रामान्तश्चत्वरेषु प्रतिसुरनिलयं द्वारि चैत्येषु मूले ॥"

द्वारगोपुरवप्रान्तर्वीथीष्वपि च सर्वतः ॥ ६२ ॥

नालिकेरेक्षुकदलीपूगान् पुष्पद्रुमानपि ।
प्रागेवारोपयेन्नोचेत् तद्दिनेषूपपत्तितः ॥ ६३ ॥

समूलकदलीपूगैरम्लायद्भिर्विभूषयेत् ।
तोरणैश्च ध्वजैश्चित्रैः पुष्पमालावलम्बितैः ॥ ६४ ॥

दीपप्रासादवृक्षाद्यैर्यथास्थानं निवेशितैः ।
दोलावितानयन्त्राद्यैरलङ्कृत्य यथाविधि ॥ ६५ ॥

उत्सवाहस्सु कुर्वीत शम्भोर्नैमित्तिकार्चनम् ।
यथाविभवसारं तु वित्तशाठ्यविवर्जितः ॥ ६६ ॥

पञ्चामृतैश्च विधिवत् पञ्चगव्येन चाम्भसा ।
गन्धोदकेन शीतेन चाभिषिञ्चेन्महेश्वरम् ॥ ६७ ॥

सशङ्खभेरीतिमिलापणवानकवेणुषु ।
नदत्सु पिष्टदीपाद्यैर्नीराजयं तु यथाविधि ॥ ६८ ॥

अद्भिः पावमानीभिः कद्रुद्रायादिना तथा ।
रुद्रश्रीपौरुषैः सूक्तैः स्नापयित्वा यथाक्रमम् ॥ ६९ ॥

सुसूक्ष्मैर्वसनैः शुक्लैर्नानावर्णैर्दुकूलकैः ।
चन्दनागरुकर्पूरश्लक्ष्णपिष्टैः सकुङ्कुमैः ॥ ७० ॥

लिङ्गपीठं समालिप्य सुवर्णकुसुमादिभिः ।
मुक्तपुष्पैश्च मालाभिर्हेमपट्टैश्च भूषणैः ॥ ७१ ॥
अलङ्कृत्यालयं चापि चित्रैः कुसुममण्डपम् ।
चन्दनागरुकर्पूरपुष्पधूपैश्च पूरयेत् ॥ ७२ ॥
सकर्पूरदशैर्दीपैः सुगन्धस्नेहपूरितैः ।
आलयान्तर्बहिश्चापि निवेद्यान्तं यजेच्छिवम् ॥ ७३ ॥
चतुस्त्रिद्विगुणं नित्यनिवेद्यात् प्रतिवासरम् ।
श्रेष्ठादिकं यथाशक्ति नैवेद्यं विनिवेदयेत् ॥ ७४ ॥
उपचारोक्तमार्गेण ससूपं सोपदंशकम् ।
सापूपलड्डुकफलं तदन्नं षड्विधं शुचि ॥ ७५ ॥
पायसं कृसरं प्रातर्मध्याह्ने सगुलौदनम् ।
शुद्धान्नं त्वथ दध्यन्नं सहरिद्रं निशामुखे ॥ ७६ ॥
मुद्गौदनं त्वर्धरात्रे सर्वं मधुघृतोत्तरम् ।
अथवा सर्वसन्ध्यासु पायसादीन्यनुक्रमात् ॥ ७७ ॥
ईशानादिषु वक्त्रेषु दद्याच्छुद्धौदनं पुनः ।
निशासु यन्त्रलिङ्गाद्यैः पत्रच्छेदादिभिस्तथा ॥ ७८ ॥
इन्धादिभिर्विचित्राभिः प्रेक्षार्हाभिर्यजेच्छिवम् ।
पूर्वमध्यापराह्णेषु यात्रा रात्रौ च शस्यते ॥ ७९ ॥
श्रेष्ठोत्सवे चतुष्कालं त्रिद्विकालं तथान्ययोः ।
रथेन रङ्गेण तथा शिबिकाभिश्च वै क्रमात् ॥ ८० ॥
श्रेष्ठादिकासु यात्रा स्यात् सर्वैर्यानैस्तु संभवे ।
अलङ्कृते समाच्छन्ने हेमपट्टाम्बरादिभिः ॥ ८१ ॥
सुवर्णरत्नमालाभिः पताकाभिश्च शोभिते ।
आस्तीर्णे चित्रवसनैः कुसुमोत्करमण्डिते ॥ ८२ ॥
याने हैमान्विकं देवं श्रेष्ठादिक्रमयोगतः ।
आरोप्य तस्मिन् सुदृढं विदध्यात् पीठरक्षणम् ॥ ८३ ॥

---

१. 'न्द्रा' क. पाठः.

अत्र संहितादीकायां

"नित्योत्सवादियात्रासु हेमाद्या प्रतिमोचिता ।
चन्द्रशेखरमूर्तिः स्यात् सा च नित्यं सुपूजिता ॥"

इति ।

अथवा ह्यष्टमूर्तीनां मूर्त्तिं भिक्षाटनीं विना ।
विनैवोमार्धहर्यर्धे कङ्कालं च विनैव तु ॥ ८४ ॥
या मूर्तयो द्वादशोक्तास्ताभिर्वा स्यान्महोत्सवः ।
मूर्त्तिं सम्यगलङ्कृत्य स्रगम्बरविभूषणैः ॥ ८५ ॥
आवाहितशिवामिष्ट्वा गन्धाद्यैर्भक्तिनम्रधीः ।
यात्रां प्रवर्तयेद् वाद्यगीतनृत्तादिमङ्गलैः ॥ ८६ ॥

अत्र मञ्जर्याम्—

"भेरीवृषेभव्यजनानि सिंहकुम्भौ पताकाश्च तथैव दीपाः ।
एतानि संगृह्य सुलोहकलृप्तान्यष्टौ प्रयायादथ मङ्गलानि ॥"

अथ वेदविदो विप्राः स्वस्तिसूक्तादिपाठकाः ।
आशिषो वाचयित्वाग्रे पठेयुः स्वस्तये स्तुतिम् ॥ ८७ ॥
स्वस्तयेऽस्तु सदा विष्णुः स्वस्तयेऽस्तु चतुर्मुखः ।
स्वस्तयेऽस्तु सदा रुद्रः स्वस्तयेऽस्तु शतक्रतुः ॥ ८८ ॥
स्वस्तयेऽस्तु सदा वह्निः स्वस्तयेऽस्तु यमस्त्विह ।
स्वस्तये निर्ऋतिश्चास्तु स्वस्तये वरुणस्त्विह ॥ ८९ ॥
स्वस्तयेऽस्तु सदा वायुः स्वस्तयेऽस्तु धनेश्वरः ।
स्वस्तयेऽस्तु सदेशानः स्वस्तयेऽस्तु मरुद्गणः ॥ ९० ॥
स्वस्तये सन्तु वसवो रुद्राः स्युः स्वस्तये तथा ।
आदित्याः स्वस्तये सन्तु स्वस्तये सन्तु किन्नराः ॥ ९१ ॥
स्वस्तये सन्तु नागाश्च स्वस्तये सन्तु पन्नगाः ।
स्वस्तये सन्तु विद्येशाः स्वस्तयेऽप्सरसस्त्विह ॥ ९२ ॥
स्वस्तये सन्तु नद्यश्च गन्धर्वाः सरितस्तथा ।
सागराः स्वस्तये सन्तु शैलाश्च स्वस्तये तथा ॥ ९३ ॥
स्वस्तये मातरः सन्तु पितरः स्वस्तये सदा ।
देवपारिषदाः सर्वे स्वस्तये सन्तु नः सदा ॥ ९४ ॥

स्वस्ति राज्ञे प्रजाभ्यश्च स्वस्ति राष्ट्राय सर्वदा ।
स्वस्ति गोब्राह्मणेभ्योऽस्तु वैश्येभ्यः स्वस्ति वर्धताम् ॥ ९५ ॥
स्त्रीशूद्रेभ्योऽपि च स्वस्ति भूतेभ्यः स्वस्ति वर्धताम् ।
स्वस्त्यस्तु जङ्गमेभ्यश्च स्थावरेभ्यस्तथैव च ॥ ९६ ॥
स्वस्ति चास्तु च मन्त्रेभ्यः कर्मणे स्वस्ति वर्धताम् ।
स्वस्त्यस्तु सर्वदेवेभ्यः पितृभ्यः स्वस्ति सर्वदा ॥ ९७ ॥
ऋषिभ्यः स्वस्ति भवतु सौम्येभ्यः स्वस्ति वर्धताम् ।
स्वस्ति पातालवासिभ्यो दिव्येभ्यः स्वस्ति सर्वदा ॥ ९८ ॥
स्वस्त्यस्तु चान्तरिक्षेभ्यः सर्वेभ्यः स्वस्ति वर्धताम् ।
उत्सवेऽस्मिन् महेशस्य बलिभिः स्वस्ति वर्धताम् ॥ ९९ ॥

इति ।

अथ द्वारपलोकेशवृषभाणां यथाक्रमम् ।
विघ्नस्य वीरभद्रस्य मातृणां शास्तुरेव च ॥ १०० ॥
षण्मुखस्य च दुर्गायाः कुबेरहरिणाङ्कयोः ।
चण्डक्षेत्रेशयोश्चापि तीक्ष्णनेत्रमृगास्ययोः ॥ १०१ ॥
बहिर्मध्यमहारायां नन्दीशप्रभृति क्रमात् ।
गणेश्वराणां पीटस्थभूतेशानां तथैव च ॥ १०२ ॥
दिक्षु विंशतिसंख्यानां गणेशानां पृथक् पृथक् ।
बलिमन्त्रास्तु लिख्यन्ते तेषामेवेह तुष्टये ॥ १०३ ॥

ओं स्फुर स्फोटय हूं त्रिणेत्राय स्वाहा । ओं ह्रीं स्रौं कपालिन् हूं नमः ।

ओं

नमस्ते द्वारि युक्ताय शूलहस्ताय धीमते ।
दृष्ट्या निहतदैत्याय नन्दीशाय नमो नमः ॥ १०४ ॥

ओं

नमस्ते द्वारियुक्ताय परशुव्यग्रपाणये ।
दृष्ट्या निहतदैत्याय महाकालाय ते नमः ॥ १०५ ॥

आभ्यां नन्दिमहाकालावुपतिष्ठेत । ओं भीं भृङ्गीशाय नमः । ओं गं गणपतये नमः ।

ओं

नमस्ते द्वारियुक्ताय भृङ्गीशाय कृशात्मने ।
दृष्ट्या निहतदैत्याय शाङ्कराय नमो नमः ॥ १०६ ॥

ओं

नमस्ते द्वारियुक्ताय गजवक्त्राय खात्मने ।
दृष्ट्या निहतदैत्याय शाङ्कराय नमो नमः ॥ १०७ ॥

आभ्यां भृङ्गीशविनायकावुपतिष्ठेत । एवं सर्वत्राप्युपस्थानमन्त्रैरुपतिष्ठेत । ओं वृं वृषभाय नमः । ओं सुं सुब्रह्मण्याय नमः ।

ओं

नमस्ते द्वारियुक्ताय धर्माय वृषभात्मने ।
दृष्ट्या निहतदैत्याय सौरभेयाय ते नमः ॥ १०८ ॥

ओं

नमस्ते द्वारियुक्ताय षण्मुखाय शिवात्मने ।
दृष्ट्या निहतदैत्याय शाङ्कराय नमो नमः ॥ १०९ ॥

ओं दुं दुर्गायै नमः । ओं धुं चण्डेश्वराय नमः ।

ओं

नमस्ते द्वारियुक्तायै दुर्गायै शङ्करालये ।
दृष्ट्या निहतदैत्यायै तुभ्यं देव्यै नमो नमः ॥ ११० ॥

ओं

नमस्ते द्वारियुक्ताय चण्डेशाय महात्मने ।
दृष्ट्या निहतदैत्याय शाङ्कराय नमो नमः ॥ १११ ॥

इन्द्राय सुराधिपतये सायुधवाहनपरिवाराय रुद्रपार्षदे नमः । तत्पार्षदेभ्यो नमः ।

ओं

दैत्यदर्पविनाशाय सहस्राक्षाय धीमते ।
कुलिशव्यग्रहस्ताय नमस्तेऽस्तु शतक्रतो ॥ ११२ ॥

ओं नमो भूतेभ्यो अरिष्टकृद्भ्यः सद्भ्योऽसद्भ्यः सर्वगणेभ्यो नमोनमः स्वाहा। ओं पूर्वस्यां दिशि शिवस्य भगवतो ये गणा वज्रपाणयः श्वेताः श्वेताक्षाः श्वेतलोहिताः दिव्यान्तरिक्षभौमाश्च पातालनिवासिनश्च तेभ्यस्ताभ्यो नमोनमः

स्वाहा। ओं ये भूताः पुरःसदो निशाचरा रौद्राः सदसन्तो विरूपा विश्वरूपा महारूपा घोररूपा मृगास्या विहगाननाः पुष्टिकृतोऽपुष्टिकृतः कामदा बलिमिच्छन्ति तेषां बलिं हरामि। महद्भ्यो रुद्रकेभ्यः सर्वेभ्यस्तेभ्यो नमोनमः स्वाहा।

ओं अग्नये तेजोधिपतये सायुधवाहनपरिवाराय रुद्रपार्षदे नमः। ओं

मुखं यः सर्वदेवानां येन हव्यं च नीयते।
येन प्रवर्तते सर्वं नमस्तस्मै हविर्भुजे॥ ११३॥

ओं आग्नेय्यां दिशि शिवस्य भगवतो ये गणाः शक्तिपाणयो रक्ता रक्ताक्षा रक्तलोहिता दिव्यान्तरिक्षभौमाः पातालतलवासिनस्तेभ्यस्ताभ्यो नमोनमः स्वाहा।

ओं यमाय प्रेताधिपतये सायुधवाहनाय रुद्रपार्षदे नमः। तत्पार्षदेभ्यो नमः। ओं

येन संह्रियते सर्वं येन सर्वं च रक्ष्यते।
यस्माद् बिभेति लोकोऽयं प्रेतनाथ! नमोऽस्तु ते॥ ११४॥

ओं नमो भूतेभ्योऽरिष्टकृद्भ्य इत्यादिना च।

ओं याम्यां दिशि शिवस्य भगवतो ये गणा दण्डपाणयः कृष्णा कृष्णाक्षाश्च कृष्णलोहिता दिव्यान्तरिक्षभौमाः पातालनिवासिनस्तेभ्यस्ताभ्यो नमो नमः स्वाहा। ये भूता दक्षिणसद इत्यादिना च।

ओं निर्ऋतये रक्षोधिपतये सायुधवाहनपरिवाराय रुद्रपार्षदे नमः। तत्पार्षदेभ्यो नमः। ओं

रक्षसां यातुधानानां पिशाचानां च यः पतिः।
तस्मै निर्ऋतये नित्यं रक्षसां पतये नमः॥ ११५॥

ओं नमो भूतेभ्योऽरिष्टकृद्भ्य इत्यादिना च।

ओं नैर्ऋत्यां दिशि शिवस्य भगवतो ये गणाः खड्गहस्ताः श्यामाः श्यामाक्षाः श्यामलोहिता दिव्यान्तरिक्षभौमाः पातालनिवासिनस्तेभ्यस्ताभ्यो नमो नमः स्वाहा।

ओं वरुणाय जलाधिपतये सायुधवाहनपरिवाराय रुद्रपार्षदे नमः । तत्पार्षदेभ्यो नमः ।

ओं

येन प्रसूयते सर्वं यस्मिन् सर्वं प्रलीयते ।
वरुणाय जलेशाय पाशहस्ताय ते नमः ॥ ११६ ॥

ओं नमो भूतेभ्योऽरिष्टकृद्भ्य इत्यादिना च ।

ओं वारुण्यां दिशि शिवस्य भगवतो ये गणाः पाशपाणयः शबलाः शबलाक्षाः शबललोहिताः दिव्यान्तरिक्षभौमाः पातालनिवासिनः तेभ्यस्ताभ्यो नमो नमः स्वाहा । ओं ये भूताः पश्चिमसदः इत्यादिना च ।

ओं वायवे प्राणाधिपतये सायुधवाहनपरिवाराय रुद्रपार्षदे नमः । तत्पार्षदेभ्यो नमः ।

ओं

आपूर्यन्ते प्रवर्तन्ते येन प्राणादिवायवः ।
भूतानामिह सर्वेषां नमस्तस्मै नभस्वते ॥ ११७ ॥

ओं नमो भूतेभ्योऽरिष्टकृद्भ्य इत्यादिना च ।

ओं वायव्यां दिशि शिवस्य भगवतो ये गणा अङ्कुशपाणयः पीताः पीताक्षाः पीतलोहिताः दिव्यान्तरिक्षभौमाः पातालनिवासिनस्तेभ्यस्ताभ्यो नमो नमः स्वाहा ।

ओं कुबेराय यक्षाधिपतये सायुधवाहनपरिवाराय रुद्रपार्षदे नमः । तत्पार्षदेभ्यो नमः ।

ओं

यत्प्रसादाज्जगत् सर्वं धनेन परिपूर्यते ।
तस्मै गुह्यकनाथाय धनेशाय नमोऽस्तु ते ॥ ११८ ॥

ओं सोमाय नक्षत्राधिपतये सायुधवाहनपरिवाराय रुद्रपार्षदे नमः । तत्पार्षदेभ्यो नमः ।

ओं

ज्योत्स्नापते ! नमस्तुभ्यं नमस्ते ज्योतिषां पते ।
नमस्ते रोहिणीकान्त! सुधाकुम्भ! नमोऽस्तु ते ॥ ११९ ॥

ओं नमो भूतेभ्योऽरिष्टकृद्भ्य इत्यादिना च ।

ओं कौबेर्यां दिशि शिवस्य भगवतो ये गणा दण्डपाणयः सिताः सिताक्षाः सितलोहिताः दिव्यान्तरिक्षभौमाः पातालनिवासिनश्च तेभ्यस्ताभ्यो नमो नमः स्वाहा ।

ओं ये भूता उत्तरसदः इत्यादिना च ।

ओं ईशानाय विद्याधिपतये सायुधवाहनपरिवाराय रुद्रपार्षदे नमः । तत्पार्षदेभ्यो नमः ।

ओं

नमस्त्रिशूलहस्ताय लोकसंरक्षणाय ते ।
विद्यानां पतये तुभ्यमीशानाय नमो नमः ॥ १२० ॥

ओं नमो भूतेभ्योऽरिष्टकृद्भ्य इत्यादिना च ।

ओं ऐशान्यां दिशि शिवस्य भगवतो ये गणाः शूलपाणयः कपिलाः कपिलाक्षाः कपिललोहिता दिव्यान्तरिक्षभौमाः पातालनिवासिनश्च तेभ्यस्ताभ्यो नमो नमः स्वाहा ।

ओं ब्रह्मणे सर्वलोकाधिपतये सायुधवाहनपरिवाराय रुद्रपार्षदे नमः । तत्पार्षदेभ्यो नमः ।

ओं

ब्रह्मणे सर्वलोकानां पतये सृष्टिहेतवे ।
पद्माध्यक्षाय विधये चतुर्वक्त्राय ते नमः ॥ १२१ ॥

ओं तत्पुरुषाय विद्महे पितामहाय धीमहि तन्नो ब्रह्मा प्रचोदयात् ।

ओं नमो भूतेभ्योऽरिष्टकृद्भ्य इत्यादिना च ।

ओं ऊर्ध्वायां दिशि शिवस्य भगवतो ये गणाः पद्मपाणयः सूक्ष्माः सूक्ष्माक्षाः सूक्ष्मलोहिता दिव्यान्तरिक्षभौमाः पातालवासिनस्तेभ्यस्ताभ्यो नमो नमः स्वाहा ।

ओं ये भूता अरिष्टदा इत्यादिना च ।

ओं अनन्ताय पातालाधिपतये सायुधवाहनपरिवाराय रुद्रपार्षदे नमः । तत्पार्षदेभ्यो नमः ।

ओं

नमः सहस्रशिरसे बिभ्रते शिरसा महीम् ।
अधोलोकाधिपतये अनन्ताय नमोऽस्तु ते ॥ १२२ ॥

ओं नमो भूतेभ्योऽरिष्टकृद्भ्य इत्यादिना च ।

ओं अधस्ताद् दिशि शिवस्य भगवतो ये गणाश्चक्रपाणयो धूम्रा धूम्राक्षा धूम्रलोहिता दिव्यान्तरिक्षभौमाः पातालनिवासिनस्तेभ्यस्ताभ्यो नमो नमः स्वाहा ।

ओं ये भूता अधस्सद इत्यादिना च ।

ओं वृषभाय नमः । ओं हरवाहनाय नमः ।

ओं महाबलाय नमः । ओं सौरभेयाय नमः ।

ओं

वाहनाय नमः शम्भोः क्षुब्धार्णवघनस्वन ! ।
वृषभाय नमस्तुभ्यमुत्सवस्येह वृद्धये ॥ १२३ ॥

ओं वीं वीरभद्राय नमः । ओं वीरभद्राय विद्महे गणेश्वराय धीमहि । तन्नः शान्तः प्रचोदयात् । ओं गं गणपतये नमः ।

ओं एकदंष्ट्राय विद्महे भवपुत्राय धीमहि । तन्नो दन्ती प्रचोदयात् । ओं ब्र्यों ब्रह्माण्यै नमः ।

ओं ब्रह्मात्मिकायै विद्महे कुशहस्तायै धीमहि । तन्नो ब्रह्माणी प्रचोदयात् ।

ओं मां माहेश्वर्यै नमः । ओं रुद्रात्मिकायै विद्महे शूलहस्तायै धीमहि तन्नो माहेश्वरी प्रचोदयात् ।

ओं मां कौमार्यै नमः । ओं स्कन्दात्मिकायै विद्महे शक्तिहस्तायै धीमहि । तन्नः कौमारी प्रचोदयात् ।

ओं हें वैष्णव्यै नमः । ओं विष्ण्वात्मिकायै विद्महे चक्रहस्तायै धीमहि । तन्नो वैष्णवी प्रचोदयात् ।

ओं हें वाराह्यै नमः । ओं प्राजापत्यायै विद्महे गदाहस्तायै धीमहि । तन्नो वाराही प्रचोदयात् ।

ओं हों इन्द्राण्यै नमः । ओं इन्द्रात्मिकायै विद्महे वज्रहस्तायै धीमहि । तन्न इन्द्राणी प्रचोदयात् ।

ओं हौं महाकाल्यै नमः । ओं रुद्रात्मिकायै विद्महे शूलहस्तायै धीमहि । तन्नश्चामुण्डी प्रचोदयात् ।

अथवा

"दीर्घस्वरैः क्रमाद् भिन्नः सान्तस्वाख्यादिभिः स्थितः ।
बीजानीहाष्टमातॄणां सप्तपक्षे तु सप्त वै ॥"

इति स्वच्छन्दे ।

ओं मातृभ्यो नमः । ओं सर्वलोकमातृभ्यो नमः । ओं सर्वलोकमातृगणेभ्यो नमः ।

ओं नानारूपा मातरः प्रतिदिशं व्यवस्थिता दिव्यान्तरिक्षभौमाः पातालवासिन्यस्ता इहायान्तु शिवाज्ञया अस्माननुगृह्णन्तु (प्रतिगृह्णन्तु) पूजां सौम्यरूपधारिण्यस्ताभ्यो मातृभ्यो नमो नमः स्वाहा। ओं शां शास्त्रे नमः । ओं प्रशास्त्रे नमः ओं महाशास्त्रे नमः । ओं शां हुं कुमाराय नमः । ओं हस्त्यश्ववाहनाय नमः । ओं रुद्रपुत्राय नमः ।

ओं भूतनाथाय विद्महे (भवपुत्राय) धीमहि । तन्नः शास्ता प्रचोदयात् । ओं प्रभायै नमः इति शास्तुर्वामतस्तद्देव्यै, ओं सत्यकाय नमः इति शास्तुर्दक्षिणतस्तत्पुत्राय ।

ओं

शाम्बादीनां गणा ये तु कोटिकोटिगणाधिपाः ।
भवन्तु सर्वे सम्प्रीतास्तेभ्यस्ताभ्यो नमो नमः ॥ १२४ ॥
शास्तुः पश्चिमतोऽनेन शाम्बादिभ्यो बलिं हरेत् ।
वचत्पदं तु तारादि नमोन्तं च श्रुवेपदम् ॥ १२५ ॥
स्कन्दमन्त्रौ बलौ जप्ये होमः स्वाहान्त एव हि ।

ओं कार्त्तिकेयाय नमः । ओं देवसेनायै नमः । इति तद्वामतो देव्यै । ओं षण्मुखाय विद्महे महासेनाय धीमहि । तन्नः स्कन्दः प्रचोदयात् ।

धनौ शराग्निस्वरगो चण्डशब्दस्ततः परम् ॥ १२६ ॥
तारादिहुंफडन्तोऽयं चण्डेश्वरमनुःस्मृतः ।

ओं चण्डाय नमः । ओं चण्डेश्वराय नमः । ओं चण्डेश्वराय विद्महे महासेनाय धीमहि । तन्नश्चण्डः प्रचोदयात् । ओं क्षां क्षीं क्षूं क्षेत्रपालाय नमः । ओं बटुकनाथाय नमः । ओं

विश्वक्षेत्राधिपतये विश्वसिद्धिप्रदायिने ॥ १२७ ॥
विश्वरक्षणशीलाय क्षेत्रपालाय ते नमः ।
ततोऽन्तर्गोपुरद्वारि तीक्ष्णनेत्रमुगास्ययोः ॥ १२८ ॥

ओं तीक्ष्णनेत्राय नमः । ओं मृगास्याय नमः ।

निष्क्रम्य गोपुराद् बाह्ये बलिपीठस्य पूर्वतः ।
स्थित्वा तु पार्षदान् सर्वाननेनैवानुमन्त्रयेत् ॥ १२९ ॥

ओं

ये समस्तं जगद् व्याप्य तिष्ठन्ति बलिकाङ्क्षिणः ।
ते रुद्रपार्षदाः सर्वे गृह्णन्तु बलिमुत्तमम् ॥ १३० ॥

इत्युक्त्वामन्त्र्य तु गणान् नन्द्यादिभ्यो बलिं हरेत् ।
नन्दीशं च महाकालं भूतनाथं महीधरम् ॥ १३१ ॥

पर्वतेशं गुहेशं च कालपाशं कपालिनम् ।
इष्ट्वा तेभ्यो नमोन्तैः स्वैर्नामभिर्विकिरेद् बलिम् ॥ १३२ ॥

अथ विंशतिसं(ख्यैः?ख्या)स्तु गणकोटीश्वराः पृथक् ।
ते स्युः प्रतिदिशं तेभ्यो नामभिः स्वैर्बलिं हरेत् ॥ १३३ ॥

ाद् यथा

महाकालो विधाता च वज्रपाणिः क्रतुः प्रभुः ।
दक्षः शतक्रतुतनुरप्रमेयोऽथ वीर्यवान् ॥ १३४ ॥

नित्यो विद्युत्प्रभश्चैव शूलहस्तस्त्रिलोचनः ।
स्वाङ्गदीपस्तमोघ्नश्च सृष्टिकृच्चोरुविक्रमः ॥ १३५ ॥

मान्धाता च महावीर्यो नित्ययोगः प्रसादनः ।

ति प्राच्यां गणेश्वराः ।

अग्निरग्निसमानश्च ज्वालामाली च विश्वभुक् ॥ १३६ ॥

हुताशो मूर्तिमान् व्यापी कपिलो रक्तलोचनः ।
उग्रो रक्तवपुर्धूम्रः सप्तार्चिर्विश्वभेषजम् ॥ १३७ ॥

सुतपा वेगवांश्चाथ भस्मच्छन्नो मरुत्सखः ।
योगप्रियो दारुकश्चेत्याग्नेय्यां कोटिनायकाः ॥ १३८ ॥

यमो वैवस्वतो धाता दैत्यघाती प्रजान्तकः ।
मृत्युः प्रेताधिपो धर्मः कृष्णः कृष्णाक्ष एव च ॥ १३९ ॥

नित्ययोगी च कालश्चाप्याशुकारी परंतपः ।
मायारूपी कृतान्तश्च सत्यासत्यप्रियः सुहृत् ॥ १४० ॥

पितृनाथश्च कीनाश इति याम्यां तु विंशतिः ।
राक्षसश्चासुरः क्रव्याद् वीरहा निर्ऋतिस्तथा ॥ १४१ ॥
तीक्ष्णनेत्रो यातुधानो यज्ञहन्ता निशाचरः ।
महामूर्तिः कैकसेयः क्रूरः क्रूरवपुस्तथा ॥ १४२ ॥
रक्षः कौणपको धूम्रो धूम्राक्षो भीषणस्तथा ।
विरूपाक्षोऽथ भस्माङ्गो नैर्ऋत्यामथ विंशतिः ॥ १४३ ॥
वरुणः शबलोऽम्भोधिः प्रचेता निम्नगापतिः ।
यादोनाथः पाशपाणिरानन्दोऽम्बुपतिः शिवः ॥ १४४ ॥
कपर्दी प्राणदः श्वेतः श्यामनेत्रः सनातनः ।
प्रत्यङ्निवासो जलदो जीवनो नक्रवाहनः ॥ १४५ ॥
पयोधिनिलयश्चेति कोटीशानां तु विंशतिः ।
वायुर्गन्धवहः सूक्ष्मः स्पर्शनश्च प्रभञ्जनः ॥ १४६ ॥
प्राणोऽपानस्तथा व्यान उदानश्च समानकः ।
नागः कूर्मोऽथ कृकरो देवदत्तो धनञ्जयः ॥ १४७ ॥
ध्वजपाणिश्च पवनः श्वसनो मारुतो मरुत् ।
इति विंशतिकोटीशा वायव्यां तु गणेश्वराः ॥ १४८ ॥
रक्षेशो रयिमान् सोमो माणिभद्रोऽथ गुह्यकः ।
चेलमाली कुबेरश्च जम्भलः शिविकुण्डली ॥ १४९ ॥
किंनरेशश्चैलिबिलिर्धनदश्च धनाधिपः ।
राजराजस्तथा श्रीदो ज्येष्ठो मालाधरो धनी ॥ १५० ॥
उत्तराशानिवासश्च ततः स्यादेककुण्डलः ।
एते विंशतिकोटीशाः कौवेरीं दिशमाश्रिताः ॥ १५१ ॥
ईशान ईश्वरः शम्भुः शूलहस्तस्त्रिलोचनः ।
अनादिनिधनो योगी कपिलः पिङ्गलोचनः ॥ १५२ ॥
रुद्रो रौद्रगणाधीशो विश्वभर्ता दिगम्बरः ।
नीलग्रीवः कपर्दीशो वृषवाहो वृषध्वजः ॥ १५३ ॥
हरः शर्वो विश्वभुज इत्यैशान्यां तु विंशतिः ।
महाबलो महानादो ब्रह्ममूर्तिश्चतुर्मुखः ॥ १५४ ॥

सृष्टिकृद् विजयो धाता अघोराघोर एव च ।
अघोरो लाङ्गली मन्युरङ्गारः शिखिभूषणः ॥ १५४ ॥

जीमूतो मूर्तिभृत् कुण्डी मन्त्रीशस्त्रिपुरान्तकः ।
ऊर्ध्वायां दिशि कोटीशा विंशतिः प्रमथेश्वराः ॥ १५५ ॥

बुद्धिः प्रमर्दनः शुद्धः कालरूपोग्रदंष्ट्रिणौ ।
दीर्घबाहुः प्रकामश्च भर्ता हर्ता विचक्षणः ॥ १५६ ॥

कालाग्नी रौरवोऽघोरो नरकः शर्व एव च ।
नागसंज्ञश्च घोरश्च किम्पुरुर्दनुजः क्षमी ॥ १५७ ॥

कोटीश्वराणामित्युक्ता विंशतिः स्यादधो दिशि ।

अत्र मन्त्रदर्पणम् —

"एषां भृत्यगणाः शतं शतमथो तेषां पुनश्चैकशो
भृत्याः सन्ति सहस्रशोऽप्ययुतशस्तेषां च तेषामपि ।
प्रत्येकं परिवारलक्षमुदितं तेषां तथा कोटयः
ख्याताः पारिषदाः पृथक्पृथगतो वक्तुं न शक्यास्तु ते ॥"

इति ।

तारादिभिर्नमोन्तैस्तु पृथगेषां तु नामभिः ॥ १५८ ॥

क्रमात् सगन्धपुष्पाम्बुतत्तद्रात्रोचिताक्षतः ।
बलिं तु विकिरेद् दिक्षु भूतकूरेण वा निशि ॥ १५९ ॥

सामान्यार्घ्याम्बुकूर्चेन दद्यादाद्यन्तयोर्बलेः ।
बलिपीठं ततोऽभ्येत्य भूतिदादीन् यथाक्रमम् ॥ १६० ॥

अभ्यर्च्य विकिरेत् तेभ्यो बलिं नित्योत्सवे यथा ।
विशेषश्चात्र तु स्नात्वा बलिदानादनन्तरम् ॥ १६१ ॥

आचार्यः सहितः शिष्यैरन्तः प्राग्वत् प्रविश्य तु ।
यानादेरवरोप्याथ देवं पीठे निधाय तु ॥ १६२ ॥

यथापूर्वं समभ्यर्च्य स्वस्थानस्थं यजेत् पुनः ।
अत्रोत्सवदिनानां तु विज्ञेया रात्रयः क्रमात् ॥ १६३ ॥

यथा बलिभुजस्तासु पूज्यन्ते साधिपा गणाः ।
ब्रह्मभूतेन्द्रगन्धर्वयक्षराक्षसरात्रयः ॥ १६४ ॥

पिशाचरात्रं च ततः सप्तपक्षे यथाक्रमम् ।
नवपक्षे विष्णुरात्रमष्टमं परिचक्षते ॥ १६५ ॥
प्राजेशरात्रं नवमं तेषु तत्तद्बलिं क्षिपेत् ।
सपुष्पकुशशुद्धान्नं ब्रह्मरात्रे बलिः स्मृतः ॥ १६६ ॥
अन्नं दधिनिशाचूर्णलाजसक्तुजलान्वितम् ।
भूतक्रूरमिति ख्यातं भूतरात्रे तु दापयेत् ॥ १६७ ॥
इन्द्रवल्लीरसोन्मिश्रमन्नं सक्तुपयोदधि ।
इन्द्ररात्रे तृतीये तु बलिं दद्यात् तु देशिकः ॥ १६८ ॥
वैणवान्नं पयोयुक्तं गान्धर्वे स्याच्चतुर्थके ।
पञ्चमे यक्षरात्राख्ये पुष्पान्नाज्याम्बुभिर्बलिः ॥ १६९ ॥
रक्तान्नं सतुषं मृत्स्नायुक्तं षष्ठे तु राक्षसे ।
सप्तमे त्वथ पैशाचे माषान्नं कृसरं मधु ॥ १७० ॥
हारिद्रचूर्णतैलाढ्यं समाषं विकिरेद् बलिम् ।
अष्टमे पायसं साज्यं विकिरेन्नवमे पुनः ॥ १७१ ॥
साज्यक्षीरं तु कृसरं प्राजापत्ये बलिः स्मृतः ।
अन्यथा केचिदाचार्याः प्राहुर्वै गणसप्तकम् ॥ १७२ ॥
ते भूतपितृयक्षाश्च नागब्रह्मेशवैष्णवाः ।
गणास्ते नवपक्षे तु स्कन्दमातृसमन्विताः ॥ १७३ ॥
प्रथमे भूतरात्रे तु भूतक्रूरेण दापयेत् ।
तिलैस्तण्डुलमिश्रैस्तु पितृरात्रे द्वितीयके ॥ १७४ ॥
तृतीये नालिकेराम्भश्शाल्यन्नैर्यक्षरात्रके ।
सक्षीरपिष्टसक्त्वद्भिर्नागरात्रे चतुर्थके ॥ १७५ ॥
सपञ्चाक्षान्नमाज्यं च ब्रह्मरात्रे तु पञ्चमे ।
सापूपान्नेन साज्येन षष्ठे शैवे तु दापयेत् ॥ १७६ ॥
गुलौदनेन साज्येन सप्तमे वैष्णवे बलिम् ।
स्कन्दरात्रे गुलान्नं तु दध्यन्नं मातृरात्रके ॥ १७७ ॥
साज्यं सनालिकेराम्बु द्राक्निशाचूर्णतोऽरुणम् ।
अतोऽधिकदिनैः श्रेष्ठाद्युत्सवेषु यथाक्रमम् ॥ १७८ ॥

त्रिद्व्येकगुणयुक्त्या स्युरेते बलिभुजो गणाः ।
त्रिवेरप्याढकैः प्रस्थैरेकविंशतिसंख्यया ॥ १७९ ॥
श्रेष्ठो मध्यकनिष्ठश्च क्रमाद् भूतबलिस्ततः ।
शाल्याद्यन्यतमैः शुक्लैस्तण्डुलैः साधितं हविः ॥ १८० ॥
विशुद्धं बलियोग्यं स्यादन्यथा दोषमावहेत् ।
विधौतदन्ताः स्युः स्नाता द्विजाः शुक्लाम्बरादिकाः ॥ १८१ ॥
साधयेयुर्बलेरन्नं वहेयुश्च सुयन्त्रिताः ।
अथवा सर्वरात्रेषु साज्यं सकदलीफलम् ॥ १८२ ॥
ससक्तुदधि सक्षीरमन्नं भूतबलेः स्मृतम् ।
उक्तोत्सवदिनान्येवमतिवाह्य यथाविधि ॥ १८३ ॥
पूर्वेद्युर्निश्चयवभृथात् कुर्यात् कौतुकबन्धनम् ।
पुण्याहं वाचयित्वेष्ट्वा सुलग्ने गणनायकम् ॥ १८४ ॥
उत्सवप्रतिमां चापि त्रिशूलं चाभिपूजयेत् ।
पट्टसूत्रं नवगुणं सौवर्णं च समौक्तिकम् ॥ १८५ ॥
तद् द्वादशाङ्गुलायाममक्षतेषु निधाय तु ।
आराध्य गन्धपुष्पाद्यैर्भासितं चास्त्रमन्त्रतः ॥ १८६ ॥
अभिमन्त्र्याथ बध्नीयाद्धस्ते देवस्य दक्षिणे ।
त्र्यम्बकेन च हृदा शूलास्त्रस्य च कौतुकम् ॥ १८७ ॥
साङ्गुष्ठानामिकाभ्यां तु कराभ्यां तत्र बन्धयेत् ।
भाले रक्षां च निक्षिप्य नीराजयारात्रिकेण तु ॥ १८८ ॥
निशां सङ्गीतवाद्याद्यैर्जागरेणातिवाहयेत् ।
प्रातः स्नात्वा यथापूर्वं नित्यपूजां समाप्य तु ॥ १८९ ॥
उत्सवप्रतिमां बाह्यमण्डपे सन्निवेशयेत् ।
त्रिशूलं विनिवेश्याग्रे तस्य प्राच्यां तु वोत्तरे ॥ १९० ॥
गोमयाद्भिश्चतुष्कोणमुपलिप्य तु मण्डलम् ।
वितानच्छत्रकलशदीपदर्पणचामरैः ॥ १९१ ॥
पालिकाभिस्तथा शङ्खैरलङ्कृत्य समन्ततः ।
कुसकोत्तरके पीते वाससा परिधाप्य तु ॥ १९२ ॥

दर्भैराच्छाद्य सम्पूज्य चूर्णं तत्र तु साधयेत् ।
स्नात्वा स्वलङ्कृताः कन्या गायन्त्यो मधुरस्वराः ॥ १९३ ॥
तत्र मङ्गलचूर्णं तत् साधयेयुर्हरिद्रया ।
दध्यक्षताज्यदूर्वाग्रगन्धबीजाङ्कुराणि षट् ॥ १९४ ॥
आरोपयेयुस्ताः कन्या मुसले चाप्युलूखले ।
ततस्तत्साधितं चूर्णं हैमपात्रादिसंस्थितम् ॥ १९५ ॥
हृदयेनाभिमन्त्र्याथ मङ्गलालम्भनानि षट् ।
दध्यादीन्यथ देवस्य शिरस्यारोप्य मूलतः ॥ १९६ ॥
गन्धतैलेन चाभ्यज्य यवमाषादिचूर्णकैः ।
उद्वर्त्य देवमस्त्रं च परिमृज्याथ वाससा ॥ १९७ ॥
तेन मङ्गलचूर्णेन हेमचूर्णयुतेन तु ।
निर्मृज्य देवमस्त्रं च तच्छेषं भक्तमूर्धसु ॥ १९८ ॥
निक्षिपेन्मङ्गलार्थं तु विश्वकल्मषशोधनम् ।

संस्नाप्य चाथ वसनेन च भूषणाद्यै-
गन्धादिभिश्च कुसुमैः परिभूष्य देवम् ।
विद्याङ्गमूर्तिमनुभिश्च शिवाङ्गमूलौ
मूर्तौ शिवस्य सकलीकरणं विदध्यात् ॥ १९९ ॥

अथात्र तीर्थयात्रार्थं स्थण्डिलेऽग्निं निधाय तु ॥ २०० ॥
आवाह्य तु शिवं हुत्वा मन्त्रसंहितया घृतम् ।
वक्रेण पक्वं पालाशीः समिधोऽथ घृतं चरुम् ॥ २०१ ॥
प्रत्येकाष्टशतं हुत्वा कृष्णेनाष्टोत्तरं शतम् ।
प्रायश्चित्तं तिलाज्याभ्यां मूलात् पूर्णाज्जुहोतु च ॥ २०२ ॥
कनिक्रदत्प्रभृतिभिः षड्भिराज्यं जुहोतु च ।
स्वस्तिसूक्तेन चैवाज्यं हुत्वा त्वथ जयादिभिः ॥ २०३ ॥
ततस्स्विष्टकृतं हुत्वा विसृज्याग्निं हुतभुजे ।
रथादौ देवमारोप्य तीर्थस्नानाय तु व्रजेत् ॥ २०४ ॥
शङ्खभेर्यादिनिर्घोषैर्गीतनृत्तादिमङ्गलैः ।
त्रिशूलाद्यं पुरस्कृत्य स्नानोपकरणैः सह ॥ २०५ ॥

उच्चावचध्वजच्छत्रचामरव्यजनादिभिः ।
प्रदीपधूपकलशैर्विधृतैश्चाष्टमङ्गलैः ॥ २०६ ॥
प्रादक्षिण्येनालयादेर्गच्छेद्दायोजनान्तरम् ।
विशिष्टसिन्धुनद्यब्धितीर्थाद्यं प्रचुराम्बुमत् ॥ २०७ ॥
व्रजेन्मध्यमया गत्या न द्रुतं न विलम्बितम् ।
तत्र स्वस्तिस्तुतिं चोक्तां स्वस्तिसूक्तं च मङ्गलम् ॥ २०८ ॥
तथा शकुनसूक्तं च चमकं च द्विजोत्तमाः ।
पठेयुर्गीतवाद्यादौ जयशब्दे च मूर्च्छति ॥ २०९ ॥
संप्राप्य तीर्थतीरं तत् प्रपातोरणमण्डितम् ।
अलङ्कृतं वितानाद्यैः पीठे देवं निवेशयेत् ॥ २१० ॥
गन्धाद्यैरभिपूज्याथ तीर्थे तदभिमन्त्रयेत् ।
इमं मे गङ्गे यमुने सरस्वतीत्यादिनापि च ॥ २११ ॥
मन्त्रसंहितया वापि संपूज्य कुसुमादिभिः ।
ततोऽम्भमथ देवं त्रिर्मज्जयित्वा शनैः शनैः ॥ २१२ ॥
सह स्नातो गुरुः शिष्यैस्तटस्थं देवमर्चयेत् ।
निवेद्यान्तमथाधाय स्थण्डिले शिवपावकम् ॥ २१३ ॥
मूलेनाष्टशतं हुत्वा ब्रह्माङ्गैस्तद्दशांशतः ।
पक्वं हुत्वाथ पूर्णां च तीर्थान्यावाह्य पूजयेत् ॥ २१४ ॥
इमं मे गङ्गे यमुनेत्याद्ययाज्यं जुहोतु च ।
जयादिकं स्विष्टकृतं हुत्वा तीर्थे जलेश्वरम् ॥ २१५ ॥
आवाह्येष्ट्वा तु तीर्थानि गङ्गादीन्यपि पूजयेत् ।
पुण्याहं वाचयित्वाथ तीर्थे देवं प्रवेशयेत् ॥ २१६ ॥
तीर्थे निमज्जयेद् देवं तत्र पीठे निवेश्य तु ।
गन्धामलकहारिद्रचन्दनागरुकुङ्कुमैः ॥ २१७ ॥
क्रमादुद्वर्तयेत् तोयपुष्पधूपान्तरैः पृथक् ।
शङ्खभेर्यादिनिर्घोषैर्वेदघोषैश्चतुर्दिशम् ॥ २१८ ॥
तत्पीठस्थं तु नीत्वेशं कारयेच्चाघमर्षणम् ।
हिरण्यशृङ्गमित्यादिसूक्तमान्ताज्जपेदपि ॥ २१९ ॥

स्नान्ति ये ये तदा तस्मिंस्तीर्थे नार्योऽथवा नराः ।
तिर्यञ्चो वापि ते सर्वे मुच्यन्ते सर्वकिल्बिषैः ॥ २२० ॥
विमुच्य कौतुकं त्यक्त्वा देवमुत्तारयेज्जलात् ।
प्रपायां पीठगं देवमाभूष्य वसनादिभिः ॥ २२१ ॥
गन्धाद्यैस्तु निवेद्यान्तमिष्ट्वा सङ्गीतमङ्गलैः ।
अभिनन्द्य यथापूर्वं यानमारोपयेच्छनैः ॥ २२२ ॥
गत्वा प्रासादमासाद्य परिणीय प्रदक्षिणम् ।
मण्डपान्तर्निवेश्येशमिष्ट्वाथाग्निं च पूजयेत् ॥ २२३ ॥
उत्सवप्रतिमां चाग्निं यथास्थानं निवेश्य तु ।
मूललिङ्गगतं शम्भुं सविशेषं ततो यजेत् ॥ २२४ ॥
दत्त्वा चतुर्विधान्नाद्यं रात्रौ नित्यं समाप्य तु ।
ध्वजं संपूज्य गन्धाद्यैर्ध्वजं तमवतारयेत् ॥ २२५ ॥
प्रागुक्तवत् समाहूतान् गणान् देवादिकान् क्रमात् ।
विसर्जयेत् स्वधामानि यथाजोषं भजन्त्विति ॥ २२६ ॥
ततः पताकावृषभं स्वैर्मन्त्रैरभिपूज्य तु ।
योजयेन्मूलवृषभे सविशेषं च तं यजेत् ॥ २२७ ॥
महाभूतबलिं दत्त्वा गुरुर्मौनी जनैर्वृतः ।
निःशब्दं निखिलातोद्यैर्विना दीपैर्व्रजेद् बहिः ॥ २२८ ॥
सन्धिसंस्थांस्तु लोकेशान् ब्रह्मादीनभिपूज्य तु ।
विसर्जयेच्च लोकेशान् ब्रह्मादीन् सन्धिगोचरान् ॥ २२९ ॥
ततः स्नात्वा प्रविश्यान्तः क्षेत्रेशमभिपूजयेत् ।

उत्सवावभृथाधिकारः ।

---

अथ प्रातर्यथापूर्वं नित्यपूजां प्रकल्पयेत् ॥ २३० ॥
ततो विकिरविक्षेपकुम्भाब्जभ्रमपूर्वकम् ।
नवकादिसहस्रान्तैः कलशैरुपपादितैः ॥ २३१ ॥
स्नापयित्वा विशेषेण महापूजां प्रकल्पयेत् ।
आचार्याय सशिष्याय हिरण्यवसनानि च ॥ २३२ ॥

भूषणादीनि दत्वास्मै दत्त्वा देयानि शक्तितः ।
लिङ्गिनः परिचारांश्च ब्राह्मणान् व्रतिनस्तथा ॥ २३३ ॥
देवभृत्यांस्तथा दासीस्तथैव नटनर्त्तकान् ।
भृत्यान् कर्मकरांश्चान्यान् दीनानाथांस्तथार्थिनः ॥ २३४ ॥
अन्नाद्येन हिरण्येन वसनाद्यैश्च तोषयेत् ।
ध्वजोच्छ्रयात् समारभ्य स्नपनान्तदिनेष्वपि ॥ २३५ ॥
अर्थिभ्यो ब्राह्मणादिभ्यो लिङ्गिभ्योऽप्युपपत्तितः ।
प्रदद्यादन्नपानादि सुव्यञ्जनरसोत्तरम् ॥ २३६ ॥
एवं यः कारयेच्छम्भोरुत्सवं कुर्वते च ये ।
ये वा पश्यन्ति ते सर्वे भवन्ति गणनायकाः ॥ २३७ ॥

इत्थं शिवोत्सवविधिः कथितो ध्वजादिः
श्रेष्ठादिभेदविहितः स्नपनावसानः ।
येनेन्दुमौलिरुपयाति परं प्रसादं
शैलाधिराजसुतया सहितो गणेन्द्रैः ॥ २३८ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे क्रियापादे
महोत्सवविधिपटल एकोनपञ्चाशः ॥

---

## अथ पञ्चाशः पटलः ।

अथाल्पस्नपनं पूर्वं कनिष्ठत्रितयं ततः ।
मध्यस्नानानि च त्रीणि श्रेष्ठं च स्नपनत्रयम् ॥ १ ॥
नवभिः पञ्चविंशत्या तदूर्ध्वं सप्तसप्तभिः ।
एकाशीत्याष्टयुक्तेन शतेन द्विशतेन च ॥ २ ॥
द्विपञ्चाशदुपेतेन कलशानां ततः परम् ।
त्रिभिः शतैस्तथैवेषुशतैः सप्तशतैरपि ॥ ३ ॥
कृतिसंख्याधिकैश्चाथ सहस्रकलशैरपि ।
अष्टोत्तरसहस्रैर्वा सहस्रकलशैस्ततः ॥ ४ ॥
विधिवत् पूरितैरुक्तं स्नपनं तूत्तमोत्तमम् ।
अष्टोत्तरशतादीनां + + + + + + परः ॥ ५ ॥

मध्ये तु ब्रह्मकलशः शिवेनाधिष्ठितो भवेत् ।
कलशैर्नवभिः पूर्वमल्पाख्यं स्नपनं स्मृतम् ॥ ६ ॥

अभिकृत्यादिकलशैः कनिष्ठस्नपनत्रयम् ।
अष्टोत्तरशताद्यैस्तु + + + + + + + + ॥ ७ ॥

+ + + + + + + + + + + स्नपनत्रयम् ।
स्नपनानां क्रमादेषां मण्डपात् पृथगेव हि ॥ ८ ॥

रामेषुमुनिनन्दैश्च रुद्रातिजगतीकराः ।
अतिशक्करिकात्यष्टिकैरतिधृतेर्मितैः ॥ ९ ॥

एकविंशतिहस्तैश्च दशधा स्नानमण्डपाः ।
सहस्रकलशस्याथ + + + + + माधमाः ॥ १० ॥

पञ्चविंशतिहस्तः स्यादेकोनत्रिंशता ततः ।
मध्यमः स्यात् तु हस्तानां त्रयस्त्रिंशद्भिरुत्तमः ॥ ११ ॥

स्वस्वमण्डपहस्तानां संख्ययैकाधिकाः क्रमात् ।
स्तम्भाः स्युः सुसमाः सर्वेऽप्येकजातितरूद्भवाः ॥ १२ ॥

नवतालोच्छ्रितास्त्वल्पे स्नपनेऽथाधमादिषु ।
रुद्रातिजगतीसंख्यैश्चातिशक्करिकामितैः ॥ १३ ॥

तालैः स्तम्भा भवन्त्युच्चात् क्रमात् तत्कुट्टिमोपरि ।
तन्नाहोऽर्काङ्गुलैरल्पे ततो द्वित्रिचतुर्गुणैः ॥ १४ ॥

अङ्गुलैः स्तम्भनाहाः स्युः कनिष्ठादेषु च त्रिषु ।
तुपावंशानुवंशाद्यमूर्ध्वप्रच्छादनं तथा ॥ १५ ॥

प्रशस्ततरुपूगाद्यैर्नालिकेरदलादिभिः ।
मण्डपानां विधेयं स्याद् यथायुक्त्युपपत्तितः ॥ १६ ॥

चतुरश्राश्चतुर्द्वारा मध्यस्तम्भविवर्जिताः ।
प्रशस्तयोनयः सर्वे कर्तव्या मण्डपाः क्रमात् ॥ १७ ॥

सूर्यवस्वृतुमात्रोच्चं श्रेष्ठाद्यं मण्डपस्थलम् ।
इष्टकादारुमृत्स्नाभिः परितो बद्धकुट्टिमम् ॥ १८ ॥

तत्र वास्तुबलिं दत्त्वा तक्षकर्म विसृज्य तु।
पुण्याहं वाचयित्वा तु वास्तुहोमं च कारयेत् ॥ १९ ॥
तत्तत्कलशसंख्याकान् ब्राह्मणांस्तत्र भोजयेत्।
असामर्थ्ये तदर्धं वा ततोऽर्धं वा यथाविधि ॥ २० ॥
दर्भमालापरिवृतं सवितानं सतोरणम्।
स्तम्भैः सद्वसनच्छन्नैर्मुक्तादामावलम्बितम् ॥ २१ ॥
स्वालेपिततलं रम्यं धूपितं चन्दनोक्षितम्।
सद्वारकलशं नानाफलालम्बितनीप्रकम् ॥ २२ ॥
अलङ्कृत्य यथाशोभं शक्तितः स्नानमण्डपम्।
सप्तमे पञ्चमे वाह्नि सर्वं स्नपनवासरात् ॥ २३ ॥
कृत्वाङ्कुरार्पणं सम्यक् पुण्याहं वाचयेत् ततः।
उपलिप्यैषु गव्येन प्रोक्ष्य चा(वे ? वो)क्षणादिभिः ॥ २४ ॥
संस्कृत्य धृतिसंस्कारैर्विकिरक्षेपपूर्वकम्।
कुम्भास्नवर्धनीपूजाभ्रमणार्चनतः परम् ॥ २५ ॥
अस्त्ररक्षां च कृत्वा तु सूत्रैः पिष्टावरूषितैः।
कुर्वीत पदविन्यासं प्रागुदग्व्यायतैः समम् ॥ २६ ॥
पदानि चाधमादीनि रविमन्वङ्गुलानि च।
विकारमानाङ्गुलैश्च चतुरश्राणि कल्पयेत् ॥ २७ ॥
तद्यथा—
द्विकरे चतुरश्रे तु सूत्रैर्नवपदीकृतैः।
तत्र मध्यपदे कृत्वा तेनाल्पस्नपनं स्मृतम् ॥ २८ ॥

अल्पस्नपनपद्माधिकारः।

---

सप्तसप्तपुटे क्षेत्रे मध्ये नव पदानि तु।
निधाय परितः पङ्क्तिमेकैकां दिक्षु मार्जयेत् ॥ २९ ॥
वीथ्यर्थं तत्र वीथ्योस्तु मध्ये कोष्ठत्रयं त्रयम्।
कोणेष्वेकै + + + + + + + + + + + + ॥ ३० ॥
+ + + + + + + + + + पद्मं तु संलिखेत्।

पञ्चविंशतिकलशाधिकारः।

एकादशपुटे क्षेत्रे मध्ये नवपदं भवेत् ॥ ३१ ॥

तन्मध्यकोष्ठे पद्मं स्यान्नवकस्य तु बाह्यतः ।
परितो मार्जयेत् + + + + + + + + + + ॥ ३२ ॥

+ + + + + + + + + + + + नवकानि तु ।
अन्तस्त्रीणि पदान्येषां मध्ये कोष्ठं च मार्जयेत् ॥ ३३ ॥

चतुर्दिक्ष्वथ कोणेषु लुम्पेदन्तश्चतुष्पदम् ।
कोणानि व्यक्तकोटीनि सप्तसप्तपदं यथा ॥ ३४ ॥

+ + + + + + + + + + + + + + + + ।
+ + + + + + + + मध्यनन्दपदाद् बहिः ॥ ३५ ॥

चतस्रो वीथयः पङ्क्तिलोपात् स्युः परितः स्फुटाः ।
अष्टदिक्ष्वष्टनवकं स्यान्मध्यनवकेऽम्बुजम् ॥ ३६ ॥

लिखेन्मध्यपदे त्वेवमेका + + + + + + ।
स्यान्मध्यपुटके क्षेत्रे मध्यनन्दपदेऽम्बुजम् ॥ ३७ ॥

तद्बाह्यपङ्क्तयो लोप्याश्चतस्रः प्रागुदग्गताः ।
वीथीनां बाह्यतः पङ्क्तिं निधाय तु चतुर्दिशम् ॥ ३८ ॥

वा + + + + + + + + + + + + + + + ।
+ + स्थनवकेष्वन्तः कोणैकपदलोपतः ॥ ३९ ॥

भवन्त्यष्टोत्तरशतं पदान्यब्जं च मध्यतः ।
पङ्क्तिं निधाय तु चतुर्दिशं बाह्यैकपङ्क्तिकम् ॥ ४० ॥

परितो + + + + + कोणैकपदलोपतः ।
भवन्त्यष्टोत्तरशतं पदान्यब्जं च मध्यतः ॥ ४१ ॥

अष्टोत्तरशतस्य । अपि च,

त्रिपञ्चपुटके क्षेत्रे प्राग्वद् वीथीचतुष्टयम् ।
+ + + + + + + + + + + + + + + + ॥ ४२ ॥

पङ्क्तिं संस्थाप्य परितः पङ्क्तिमेकां विलोपयेत् ।
वीथ्योर्मध्ये चतुर्दिक्षु नवकानि प्रमार्जयेत् ॥ ४३ ॥

द्वारार्थमथ कोणेषु स्यात् पदानां त्रिसप्तकम् ।

शतस्यैव पुनश्च,

प्राग्वत् त्रिपञ्चपुटके सप्तसप्तपदानि तु ॥ ४४ ॥
मध्ये निधाय परितो लुम्पेद् वीथीचतुष्टयम् ।
संस्थाप्य मध्ये नवकं परितः पङ्क्तिलोपतः ॥ ४५ ॥
अ + + + + + + + + + + + + + + + + ।
+ + + + + कोष्ठानि प्राग्वदेवं भवन्ति हि ॥ ४६ ॥
दिक्षु प्रकृतिकोष्ठानामन्तःकोणद्वये समम् ।
चतुष्पदं तद् विसृजेन्मध्यकोष्ठं च लोपयेत् ॥ ४७ ॥
एवं द्वादश कोष्ठानि पृ + + + + + + + ।

त्रिविधाष्टोत्तरकलशाधिकारः ।

---

त्रिसप्तपुटके क्षेत्रे मध्ये नन्दपदेऽम्बुजम् ॥ ४८ ॥
तस्याथ परितो वीथ्यश्चतस्रः स्युरशेषगाः ।
तद्बाह्ये नवकान्यष्टौ तद्बाह्ये + + + + + ॥ ४९ ॥
+ था तथा वीथ्यग्राणि मार्जयित्वा समन्ततः ।
द्विपञ्चाशत्समधिकं पदानां द्वे शते स्फुटम् ॥ ५० ॥

द्विपञ्चाशदधिकशतद्वयकलशाधिकारः ।

---

कलशत्रिशतके,

+ + + + + + + + + + + + प्रकलशाष्टकम् ।
परितो मार्जयेत् पङ्क्तिं तद्बाह्ये पङ्क्त्यतिक्रमात् ॥ ५१ ॥
दिक्षु पङ्क्तिर्विलोप्या स्यात् तस्मात् कोष्ठत्रयाद् बहिः ।
परितो + + + + + + + + + + + + + + ॥ ५२ ॥
+ + + + द्विमाकोणं बाह्यवीथ्यां नियोजयेत् ।
एवं प्रतिदिशं वीथीषट्कं स्वव्यायतं भवेत् ॥ ५३ ॥
कोणषोडशकोष्ठानामन्तःकोणचतुष्टयम् ।
+ + + + + + + + + + + + + + + + + + ॥ ५४ ॥
एवं पदानि त्रिशतं कलशत्रिशते स्मृतम् ।
मध्यब्रह्मपदाम्भोजे शिवाख्यः कलशोऽपि च ॥ ५५ ॥

त्रिशतकलशाधिकारः ।

एकत्रिंशत्पुटे + + + + + + + + + + + ।
+ + + + + परितो वीथ्यै लुम्पेदशेषतः ॥ ५६ ॥
तद्बाह्यपङ्क्तेर्बाह्ये च पङ्क्तिं तद्वद् विलोपयेत् ।
ततस्त्रिकोष्ठात् परितस्त्रिपदाच्च परं ततः ॥ ५७ ॥
वीथी + + + + + + + + + + + + + + + ।
+ + + + + + दिशं वीथयोऽष्टौ भवन्ति हि ॥ ५८ ॥
अष्टौ च चत्वारिंशच्च नवकान्यत्र सर्वतः ।
अष्टाविंशतिसंख्यानि त्रिकान्यपि भवन्ति हि ॥ ५९ ॥
एककोष्ठचतुष्कं च मध्ये पद्मं च शोभनम् ।
+ + + + + + + + + + + + + + + + + + ॥ ६० ॥
+ त्तत्कोटिप्रसिद्ध्यर्थं तान्यपि द्वादशैव हि ।
तत्संख्याः कलशास्तेषु मध्ये शिवघटोऽधिकः ॥ ६१ ॥
एवं वेदाधिकानि स्युः पदपञ्चशतानि हि ।

चतुरधिकपञ्चशतकलशाधिकारः ।

---

+ + + + + + + + + + + + य विलङ्घनात् ॥ ६२ ॥
एकशो मार्जयेत् पङ्क्तीः प्राचीनाश्चोदगायताः ।
एवं प्रतिदिशं तत्र वीथयोऽष्टौ भवन्ति हि ॥ ६३ ॥
मध्ये चाष्टदिशास्वेवमेकाशीतिपदानि हि ।
पृथक् नवैव व्यूहाः स्युर्मध्यव्यूहे तु मध्यतः ॥ ६४ ॥
मार्जयेन्नवकं तस्मिन् पद्ममष्टदलं लिखेत् ।
एवं हि विंशत्याधिकं पदसप्तशतं स्मृतम् ॥ ६५ ॥
मध्येऽब्जे चाधिकस्त्वेकः कलशः शिवसंज्ञितः ।

विंशत्यधिकसप्तशतकलशाधिकारः ।

---

क्षेत्रे विभाजिते पञ्चचत्वारिंशत्पुटे समे ॥ ६६ ॥
पञ्चपञ्चपदैर्मध्ये पद्मे शिवघटो भवेत् ।
तद्बाह्यपङ्क्तिं परितो वीथ्यै लुम्पेच्च तद्बहिः ॥ ६७ ॥

एकां तेसश्च पङ्क्ती द्वे निधायासां तु मध्यतः ।
क्रमेण परितः पङ्क्तीर्विमृजेद् वीथेषु त्रिषु ॥ ६८ ॥
तद्बाह्ये वेदपङ्क्तीस्तु त्यक्त्वा पाङ्क्तं तु मार्जयेत् ।
वीथ्यर्थं परितः प्राग्वत् पुनः पङ्क्तिद्वयाद् बहिः ॥ ६९ ॥
पङ्क्त्या स्यात् परितो वीथीरथ पश्चाच्चतुर्दिशम् ।
प्रतिपङ्क्तिद्वयं लुम्पेद् द्वारार्थं स्वदिगायतम् ॥ ७० ॥
महावीथीचतुष्कस्य सन्धिः षोडशकेष्वपि ।
विकारकुम्भन्यासार्थं रक्षेन्मध्यपदानि तु ॥ ७१ ॥
द्वारशोभोपशोभाः स्युः कोणानि च यथाक्रमम् ।
अन्तस्त्रीणि बहिः पञ्च पदानि द्वारि मार्जयेत् ॥ ७२ ॥
शो(भाः ? भा) स्वन्तस्त्रयं बाह्ये चैकं कोष्ठं विलोपयेत् ।
ततस्तु विपरीतेनाप्युपशोभा विमार्जयेत् ॥ ७३ ॥
एवं द्वाराणि चत्वारि शोभा द्वात्रिंशदेव हि ।
उपशोभाश्च तावत्यः पञ्चावरणसंज्ञिते ॥ ७४ ॥
सहस्रकलशे ज्ञेया यथावदभिसंख्यया ।

पञ्चावरणे सहस्रकलशाधिकारः ।

---

क्षेत्रे त्वेकोनपञ्चाशत्पुटे मध्यगतैः पदैः ॥ ७५ ॥
नवभिः पद्ममालिख्य बाह्ये पङ्क्तिद्वयेन तु ।
वीथी स्यात् परितो बाह्यपङ्क्तौ दिक्ष्वेककोष्ठकम् ॥ ७६ ॥
अन्तर्विमृज्य वीथ्यैक्यं नीत्वा तद्वेदकोणके ।
अन्तःस्थ त्रिपदं लुम्पेत् ततो मध्याम्बुजाद् बहिः ॥ ७७ ॥
प्रागुदग्व्यायते प(ङ्क्तौ ? ङ्क्ती) द्वाध्यै लुम्पेदशेषतः ।
तद्बाह्ये चापि परितस्ततस्त्रित्रिपदान्तरम् ॥ ७८ ॥
प्रागुदग्व्यायता लोप्याः पृथग् द्वादशवीथयः ।
अत्र स्युर्मध्यमे व्यूहे पञ्चकान्यथ च क्रमात् ॥ ७९ ॥
तद्बाह्ये नवकानि स्युर्द्वादशैवं चतुर्ष्वपि ।
चतुर्ष्वपि च कोणेषु विकारनवकं पृथक् ॥ ८० ॥

एवं तु नवकानां स्याच्छतं हि द्वादशाधिकम् ।
अथैकं बाह्यनवकं चतुर्दिक्षु विलोपयेत् ॥ ८१ ॥
द्वारार्थं + + + + + + न्यकोणैककोष्ठकम् ।
विलुम्पेत् कोष्ठमध्यस्थमेवं पद्सहस्रकम् ॥ ८२ ॥
अष्टोत्तरं हि भवति मध्ये चैकं सरोरुहम् ।
बाह्ये वीथ्यास्ततो बाह्ये शिष्टपङ्क्तिद्वयेन तु ॥ ८३ ॥
द्वारशोभोपशोभार्थं + + + + + + + + ।
भवन्त्याकृतिस + न कलशास्तत्पुटेषु वै ॥ ८४ ॥
अष्टोत्तरसहस्रं हि पद्मे शिवघटस्तथा ।

अष्टोत्तरसहस्रकलशाधिकारः ।

---

त्रिपञ्चाशत्पुटे क्षेत्रे मध्यस्थनवकेऽम्बुजम् ॥ ८५ ॥
तद्बाह्यपङ्क्त्या परितो + + + + + + बहिः ।
पङ्क्तौ दिक्कोष्ठमेकैकं लुम्पेद् द्वारप्रसिद्धये ॥ ८६ ॥
चतुर्ष्वपि च कोणेषु पृथक् स्यात् कोष्ठपञ्चकम् ।
तद्बहिः परितः पङ्क्तिं वीथ्यर्थं परिमार्जयेत् ॥ ८७ ॥
द्वारशोभादिसिद्ध्यर्थं + + + + द्वयं न्यसेत् ।
तदन्तरेका परितो लोप्या पङ्क्तिस्तु वीथये ॥ ८८ ॥
अन्तर्वीथीं समारभ्य दिक्षु पङ्क्तित्रयं त्रयम् ।
विसृजेद् द्वारवीथ्यर्थं बाह्ये वीथ्यां च योजयेत् ॥ ८९ ॥
बाह्यवीथ्यास्त्वथान्तःस्थपङ्क्तिषट्कादनन्तरम् ।
अन्तस्त्रिपङ्क्तीः परितो महावीथीस्तु मार्जयेत् ॥ ९० ॥
तत्राष्टदिक्षु मध्यस्थपङ्क्तौ मध्यपदानि तु ।
रक्षेदष्टदिशास्वष्टौ तेषु सन्धिघटान् न्यसेत् ॥ ९१ ॥
बहिर्वीथीमहावीथ्योर्मध्यपद्पङ्क्तिमध्यतः ।
तत्त्वकोष्ठानि संस्थाप्य लोप्यं पङ्क्तिद्वयं क्रमात् ॥ ९२ ॥
एवं कृते तु परितः षट्त्रिंशत्कोष्ठकानि तु ।
कृतिसंख्यानि तानन्दपदान्यन्तर्विलोपयेत् ॥ ९३ ॥

कोणेष्विति यावत् ।

अथान्तःस्थचतुष्कोणव्यूहान्तर्व्यूहसिद्धये ।
त्यक्त्वा पङ्क्तित्रयं बाह्ये पङ्क्तिमेकां विलोपयेत् ॥ ९४ ॥
तदन्तर्वेदकोणेषु पदाष्टशतकं भवेत् ।
तृतीयवीथेः प्रारभ्य पङ्क्तिरेका यथाक्रमम् ॥ ९५ ॥
मध्ये लोप्या महावीथिर्यावत् तावद् विनिर्गता ।
ततस्तु तत्त्वकोष्ठानां द्वादशात्र भवन्ति हि ॥ ९६ ॥
अन्तःकोणेषु तेषां च नन्दकोष्ठानि मार्जयेत् ।
(हन्तव्यूहे ? अन्तर्व्यूहे) कृतिघटा(न्?) द्वितीये साष्टकं शतम् ॥
तृतीये त्रिशतं चाथ ससंकृत्युत्तरं घटाः ।
सन्धिष्वष्टौ चतुर्थे तु चत्वारिंशद्घटादिकम् ॥ ९८ ॥
शतानि पञ्च कुम्भानामेवं कुम्भसहस्रकम् ।
चतुरावरणे ज्ञेयं मध्ये शिवघटोऽधिकः ॥ ९९ ॥
बाह्यपङ्क्तिद्वये प्राग्वद् दिक्षु द्वारचतुष्टयम् ।
शोभा द्विचत्वारिंशत् स्युरुपशोभाश्च तत्समाः ॥ १०० ॥
कोणानि मनुकोष्ठैः स्युः प्राग्वत् तान्यपि मार्जयेत् ।
लाङ्गलाकारकोणानि सर्वव्यूहे तु कल्पयेत् ॥ १०१ ॥

चतुरावरणे सहस्रकलशाधिकारः ।

---

क्षेत्रे तु सूत्रिते पञ्चपञ्चाशत्पुटके समे ।
एकाशीतिपदं मध्ये संस्थाप्य नव संपुटान् ॥ १०२ ॥
प्राचीनाश्चाप्युदीचीना लोप्याः षड् वीथयः पृथक् ।
एकाशीतिपदव्यूहास्त्वेवं स्युः पञ्चविंशतिः ॥ १०३ ॥
पर्यन्तवीथी बाह्यस्थपङ्क्तियुग्मेन पूर्ववत् ।
द्वाराणि दिक्षु चत्वारि शोभाश्चैवोपशोभिकाः ॥ १०४ ॥
चत्वारिंशत् पृथक् कार्याः कोणानि मनुकोष्ठकैः ।
मध्यव्यूहस्य मध्यस्थकमलेनाम्बुजं लिखेत् ॥ १०५ ॥

तस्यापि परितः पङ्क्तिद्वयं वीथ्यै विलोपयेत् ।
तद्बाह्ये च चतुर्दिक्षु द्वारार्थं त्रिपदानि तु ॥ १०६ ॥
विमृजेद् द्वारकोणेषु पृथक् स्यात् पदपञ्चकम् ।
मध्यव्यूहाद् बहिर्दिक्षु व्यूहमेकं पृथक् पृथक् ॥ १०७ ॥
अशेषं विमृजेत् तेषु होमं कुर्याद् यथाविधि ।
तद्बाह्ये तु कृतिव्यूहास्तेषां मध्यैककोष्ठकम् ॥ १०८ ॥
निधाय परितः पङ्क्तिद्वयं वीथ्यै विलोपयेत् ।
तद्बाह्येऽथ चतुर्दिक्षु पङ्क्त्योरेकैककोष्ठकम् ॥ १०९ ॥
द्वारार्थं विमृजेत् तत्तद्बाह्यवीथिगतं तथा ।
एवमेकोनपञ्चाशत् कृतिव्यूहे पदानि वै ॥ ११० ॥
भवन्ति मध्यव्यूहे तु विंशतिश्चाम्बुजे घटः ।
इत्येकविंशतिव्यूहे सहस्रकलशाः स्मृताः ॥ १११ ॥
ब्रह्मस्थाने शिवाख्यस्तु कलशः पङ्कजेऽधिकः ।

एकविंशतिव्यूहसहस्रकलशाधिकारः ।

---

इत्थं पदानि विन्यस्य परितश्चोपलिप्य तु ॥ ११२ ॥
पदानि सितचूर्णेन समाच्छाद्य निरन्तरम् ।
शालीनामाढकं वार्धं प्रस्थं पादेन निक्षिपेत् ॥ ११३ ॥
तदर्धं तण्डुलांस्तेभ्यस्तिलान् लाजान् क्रमेण तु ।
निक्षिप्य स्थण्डिलं कुर्यात् केवलं शालिभिस्तु वा ॥ ११४ ॥
तेषु प्रत्येकशो दर्भान् विष्टरार्थं निधाय तु ।
तेषूक्तान् कलशान् सूत्रवेष्टितान् सविधानकान् ॥ ११५ ॥
क्षालितान् धूपितान् कूर्चपृष्ठान् संसादयेत् पृथक् ।
अथाचार्यः सशिष्यस्तु स्नातः शुक्लाम्बरादिभिः ॥ ११६ ॥
भूषितश्चाङ्गुलीयाद्यैः क्षालिताङ्घ्रिकरद्वयः ।
स्वाचान्तः सूपविष्टस्तु भूतशुद्धिं विधाय तु ॥ ११७ ॥
मण्डपाद् दक्षिणे सम्यग् विघ्नेशमभिपूज्य तु ।
समाप्यार्थ(?) यथापूर्वं सकलीकृतविग्रहम् ॥ ११८ ॥

+ + + स्तं विधायाथ सामान्यार्घ्यकरः क्रमात् ।
प्राग्वच्छान्तिकलादीनि द्वाराणि कुसुमादिभिः ॥ ११९ ॥
इष्ट्वा क्षिप्त्वा च नाराचं प्राग्वदन्तः प्रविश्य तु ।
अस्त्रं विन्यस्य देहल्यां वास्तुपा + + + + + ॥ १२० ॥
अभिपूज्यासनं च स्वं प्राङ्मुखो वाप्युदङ्मुखः ।
कलशांस्तु यथोद्दिष्टानवोक्ष्यार्घ्यजलैः क्रमात् ॥ १२१ ॥
उदङ्मुखीकृत्योत्कूर्चान् (?) सदाशिवतनुः स्वयम् ।
आधारशक्तिं कलशं + + + + + + + + ॥ १२२ ॥
द्वादशान्ताम्बुजेन्दुस्थममृतं तज्जलादिकम् ।
भावयन् प्रणवं सृष्टिक्रमेणोच्चारयन् क्रमात् ॥ १२३ ॥
कलशान् पूरयित्वा तु प्रोक्तद्रव्यसमन्वितान् ।
सहेमगन्धकुसुमान् सितवस्त्रावृतान् पृथक् ॥ १२४ ॥
स्रग्दामालङ्कृतानुक्तबिल्वाश्वत्थ + + यवान् ।
सशालितण्डुलापूर्णफलोपेतविधानकान् ॥ १२५ ॥
सम्प्रोक्ष्य तेषु विन्यस्य तत्तन्मन्त्रं च दैवतम् ।
इष्ट्वा पञ्चोपचारैस्तान् होमं कुर्याद् यथोदितम् ॥ १२६ ॥
अल्पादिकानां स्नानानामष्टोत्तरशतावधि ।
एकाग्नावेव होतव्यं प्राक्कुण्डे स्थण्डिलेऽपि वा ॥ १२७ ॥
ततः सप्तशतान्तानां चतुर्दिक्षु हुतं स्मृतम् ।
अथाष्टोत्तरसाहस्रे सहस्रकलशेऽपि च ॥ १२८ ॥
अष्टदिक्षु प्रतिष्ठोक्तकुण्डेष्वाधाय पूर्ववत् ।
शिवानलं तु मध्याग्नेर्विभज्य ु यथाविधि ॥ १२९ ॥
स्वदिक्षु ब्रह्मभिश्चाग्नेर्जुहुयुर्गुरुमूर्तिपाः ।
व्यूहैकविंशतिर्यत्र सहस्रकलशे स्मृता ॥ १३० ॥
तत्र दिक्ष्वष्टकुण्डेषु तथैवान्तश्चतुर्दिक्षु ।
व्यूहेषु मार्जितेष्वग्निं जुहुयाद् ब्रह्मभिः क्रमात् ॥ १३१ ॥
समिदाज्यचरून् लाजान् सिद्धार्थांश्च तिलान् यवान् ।
सप्तकलशसंख्यातमर्धं पादमथापि वा ॥ १३२ ॥

मूलेन हुत्वा मूर्त्यङ्गैर्जुहुयुस्तद्दशांशतः ।
तत्सम्पातघृतं सर्वमेकीकृत्य कुशाग्रतः ॥ १३३ ॥
कलशेषु क्षिपेत् किञ्चिन्निवेद्यान्तं यजेत् पुनः ।
सर्वं कर्मेति सामान्यं स्नपनानामुदीरितम् ॥ १३४ ॥

साधारणकर्माधिकारः ।

द्रव्यदैवतमन्त्रास्तु स्नपनानां यथाक्रमम् ।
लिख्यन्ते नवकादीनां शैवतन्त्रप्रचोदिताः ॥ १३५ ॥
माणिक्यं मौक्तिकं वज्रं प्रवालं च हरिन्मणिः ।
पुष्यरागश्च वैडूर्यं नीलं गोमेदकं क्रमात् ॥ १३६ ॥
मध्येन्द्रयाम्याप्यसौम्यवह्निरक्षोनिलेशगान् ।
कलशान् मणिभिश्चोक्तैर्गन्धपुष्पकुशाम्बुभिः ॥ १३७ ॥
ईशादिब्रह्मभिश्चाङ्गैरभिपूर्याभिषेचयेत् ।
मध्यादिपूरणे त्वैन्द्रान्मध्यान्तस्नपने क्रमः ॥ १३८ ॥
अस्त्रं चैवास्त्रवर्धन्यां शिवकुम्भान्तिके यजेत् ।
पुष्पाम्बुधूपान्तरितं चतुष्कानन्तरं यथा ॥ १३९ ॥
आपोराजानमाद्याद् वा मध्येन व्योमविद्यया ।

नवकस्य ।

पञ्चविंशतिकस्यापि पञ्चरत्नाम्बु मध्यतः ॥ १४० ॥
पूरयेद् ब्रह्मकलशे शिवेन समधिष्ठिते ।
पाद्यमाचमनं चार्घ्यं पञ्चगव्यं दिशास्वथ ॥ १४१ ॥
आग्नेयादिपदेष्वाज्यं मधु क्षीरं तथा दधि ।
पूर्वत्रिके चेक्षुरसकषायाम्बु फलाम्बु च ॥ १४२ ॥
चतुःक्षीरागबिल्वानां त्वग्भिः सिद्धं कषायकम् ।
लाजाम्बु चैव गन्धाम्बु पुष्पाम्भश्चैव दक्षिणे ॥ १४३ ॥
हेमाम्भः पद्मरागाम्भो मुक्ताम्भः पश्चिमे त्रिके ।
यवोदकं प्रवालाम्बु तिलाम्भश्चोत्तरात्रिके ॥ १४४ ॥
दूर्वोत्पलकुशाम्भांसि शाल्यम्भश्चानलादिषु ।
मूलं ब्रह्माणि चाङ्गानि मध्ये मन्त्राश्च दैवतम् ॥ १४५ ॥

पूर्वादित्रिकमध्यस्थकोणस्थकलशेषु च ।
क्ष्माद्यष्टमूर्तयो दैवं मन्त्राश्चान्ते नमोन्विताः ॥ १४६ ॥

प्रागादिपार्श्वकुम्भानां दैवमङ्गुष्ठमात्रकम् ।
भुवनेशान ईशान एकपिङ्गेक्षणस्तथा ॥ १४७ ॥

उद्भवश्च भवश्चाथ महादेवो महाद्युतिः ।
त्रिकं मध्यघटादाप्यकुम्भाद्यं पूरणादिषु ॥ १४८ ॥

पाद्यस्येदंविष्णुरिति चापोहिष्ठेत्यनन्तरम् ।
आपःपुनन्त्वित्यर्घ्येण चाग्निमीळेति गव्यतः ॥ १४९ ॥

इषेत्वेति घृतेनाथ मधुना मधुवाततः ।
आप्यायस्वेति दुग्धेन दधिक्राव्णेति वै दधि ॥ १५० ॥

अथ पूर्वत्रिके

उपत्वाग्न इतीक्ष्वद्भिर्मानस्तोकात् फलाम्भसा ।
अश्वावत्या कषायेण

अथ दक्षिणत्रिके

सुमित्रानस्तु लाजकान् ॥ १५१ ॥

गन्धाम्भसाग्नआयाहि पुष्पवत्या तु पुष्पकान् ।
हिरण्यवर्णाः शुचयो ब्रह्मजज्ञानमित्यपि ॥ १५२ ॥

अ(था?थो) समुद्रज्येष्ठाद्यात् पश्चिमत्रितयेन तु ।
रक्षोहणं वास्तोष्पते शन्नोदेव्यादिनापि च ॥ १५३ ॥

यवाम्भोविद्रुमाम्भोभिस्तिलाम्भोभिस्तथोत्तरे ।
दूर्वाम्भसायनेतेति श्रियो जातेति चोत्पलान् ॥ १५४ ॥

त्रिष्टुभाथ कुशाम्भोभिरथ शाल्युदकं पुनः ।
आशुःशिशानआद्येन स्नपयेत् पार्वतीपतिम् ॥ १५५ ॥

मध्यस्थनवकुम्भेन महत्या व्योमविद्यया ।
अथवा ब्रह्मभिश्चाङ्गैर्गायत्र्या शिवसंज्ञया ॥ १५६ ॥

सावित्र्या मूर्तिमन्त्रैश्च स्नपयेद् व्योमविद्यया ।

पञ्चविंशतेः ।

अथ त्वेकोनपञ्चाशत्कलशानां तु मध्यतः ॥ १५७ ॥

हिरण्यरत्नगन्धैस्तु मध्यकुम्भं प्रपूरयेत् ।
पाद्याचामार्घ्यगव्याज्यमधुक्षीरदधीनि च ॥ १५८ ॥
मध्याष्टकस्य तूक्तानि पूरणेऽथैन्द्रपञ्चके ।
चन्दनागरुकर्पूरकुङ्कुमोशीरवारिभिः ॥ १५९ ॥
आग्नेये पञ्चके शस्तं पञ्चधान्यैश्च नैर्ऋते ।
कुसुमोत्पलकल्हारपद्मश्वेतोत्पलैरपि ॥ १६० ॥
वायव्यपञ्चकेऽथैशे मल्लिकाजातिचम्पकैः ।
पाटलैः करवीरैश्च पञ्चकं पूरयेत् क्रमात् ॥ १६१ ॥
शिवब्रह्माङ्गमन्त्रैश्चमध्यमं नवकं स्मृतम् ।
ऐन्द्रादिकाष्टदिङ्मध्य + + + + + मूर्तयः ॥ १६२ ॥
मध्याद् दक्षिणतोऽष्टानां वामाद्याः शक्तयो यथा ।
मध्यादुत्तरकोष्ठानां शर्वाद्यं मूर्तिपाष्टकम् ॥ १६३ ॥
तदनन्तरकोष्ठानां वामभीमादिकाष्टकम् ।
शिष्टानामष्टकोष्ठानां विद्येशाः स्युः क्रमाधिपाः ॥ १६४ ॥
तन्मन्त्रास्तारह्र + + + + + + + + तकम् ।
ब्रह्माङ्गैरेव मध्यस्थेनाष्टकेनाभिषेचयेत् ॥ १६५ ॥
प्रागादिदिक्पञ्चकैस्तु चमकैः स्नपयेच्छिवम् ।
पावमानीहिरण्यादिचतुष्कोणस्थपञ्चकैः ॥ १६६ ॥
मध्ये शिवघटेनापि स्नपयेद् व्योमविद्यया ।

एकोनपञ्चाशतः ।

अथैकाशीतिके मध्यकलशे रत्नपञ्चकम् ॥ १६७ ॥
हेम चोक्तं सतीर्थाम्भस्तद्बाह्यकलशाष्टके ।
पाद्याचामार्घ्यगव्याज्यमधुदुग्धदधीन्यपि ॥ १६८ ॥
प्राच्यां तु नवके मध्ये चन्दनं रोचनागरु ।
कर्पूरकुङ्कुमं कुष्ठं मांसीग्रन्थिमुरं तथा ॥ १६९ ॥
दक्षिणे वृषशृङ्गेभदन्तक्षेत्रनदीमृदः ।
तटाकगिरिवल्मीककुलीरह्रदमृत्तिकाः ॥ १७० ॥
चतुःक्षीरागबिल्वाम्रमधूकाशोकजम्बुजाः ॥ ।
शुभास्त्वचश्च वारुण्यां नवके क्रमशः स्मृताः १७१ ॥

कदलीपनसाम्राणि मातुलुङ्गं च डाडिमम् ।
जम्बीरं लिकुचं चाथ नालिकेरं च जाम्बवम् ॥ १७२ ॥
फलान्युदीच्यनवके त्वथाग्नेय्यां समुद्रजम् ।
नादेयमथ ताटाकं ह्रदाम्भः शुभकूपजम् ॥ १७३ ॥
हरिद्रालाजभसितकुसुम्भाम्भांसि वै नव ।
नीवारमुद्गमाषाश्च सिद्धार्थयवशालयः ॥ १७४ ॥
तिलप्रियङ्गुश्यामाका नैर्ऋत्यां नवके स्मृताः ।
लक्ष्मीर्देवी हरिक्रान्ता मुसली भृङ्गराजकः ॥ १७५ ॥
सदाभद्रा शक्रवल्ली भीता चैकदलाम्बुजम् ।
वायव्यनवके द्रव्याण्येतानि स्युर्यथाक्रमम् ॥ १७६ ॥
पद्मद्वयं च कुमुदद्वयं चैवोत्पलत्रयम् ।
इन्दीवरं च कह्लारमैशान्यां नवके क्षिपेत् ॥ १७७ ॥
पाद्यादिकैस्तु ब्रह्माद्यैरिदंविष्ण्वादिभिस्तथा ।

तद्यथा —

इदं विष्णुर्विचक्रम आपो हि ष्ठा मयोभुवः ॥ १७८ ॥
अग्निमीळे पुरोहितमिषेत्वेत्यादिना तथा ।
घृतं मिमिक्षेत्याद्येन मधुवाताऋतायते ॥ १७९ ॥
आप्यायस्व समे तु ते दधिक्राव्णो अकारिषम् ।
प्राच्येन नवकेनापोराजानमिति सूक्ततः ॥ १८० ॥
याम्यां पुरुषसूक्तेन कद्रुद्राद्येन पश्चिमे ।
इमाँ रुद्राय तपस इत्युदङ्नवकेन तु ॥ १८१ ॥
आग्नेयनवकेनेमाँ रुद्राय स्थिरधन्वने ।
हिरण्यवर्णाःशुचयःपावकाद्यनुवाकतः ॥ १८२ ॥
नैर्ऋत्यां नवकेनाथ वायव्यां नवकेन तु ।
हिरण्यशृङ्गमित्याद्येनानुवाकान्ततः क्रमात् ॥ १८३ ॥
ऐशान्यां शमइन्द्राद्यानवकेनाभिषिच्य तु ।
मध्यस्थशिवकुम्भेन महत्या व्योमविद्यया ॥ १८४ ॥

एकाशीतेः ।

अष्टोत्तरशते मध्ये रत्नहेमकुशाम्बुभिः ।
शिवकुम्भं समापूर्य तद्बाह्यांशत्रिकेष्वपि ॥ १८५ ॥
न्यग्रोधोदुम्बराश्वत्थैः प्लक्षजम्बुपलाशजैः ।
शिरीषबिल्वमधुकैः सप्तपर्णासनार्जुनैः ॥ १८६ ॥
अग्न्यादिष्वैक्षवं क्षौद्रं तिलं गव्यं तु पञ्चकम् ।
मध्यादिपूर्वनवके कुशमूलाष्टमृत्तिकाः ॥ १८७ ॥
शाकप्रियङ्गुमाषाश्च यवगोधूमसर्षपाः ।
मुद्गास्तिलाश्च निष्पावा याम्ये मध्यादितो नव ॥ १८८ ॥
चम्पकोन्मत्तकद्रोणैरशोककुमुदोत्पलैः ।
करवीराब्जजातीभिः पूरयेत् पश्चिमे नव ॥ १८९ ॥
बिल्वाम्रबदरीपूगनालिकेराणि डाडिमम् ।
रम्भापनसजम्बूनि कौबेर्यां पूरयेन्नव ॥ १९० ॥
नदीह्रदतटाकाब्धिशुभकूपाम्बुकुङ्कुमम् ।
रजनीशालिपिष्टं च भस्म चाप्यनलाष्टके ॥ १९१ ॥
लक्ष्मी देवी हरिक्रान्ता सहा चैकदलाम्बुजम् ।
शक्रवल्ली सदाभद्रा मुसली नैर्ऋताष्टके ॥ १९२ ॥
द्वे तुलस्यावपामार्गो भृङ्गराडपराजिता ।
भीता दमनकं दूर्वैर्युक्तं स्यान्मारुताष्टके ॥ १९३ ॥
ऐशाष्टकं त्वष्टगन्धैश्चन्दनाद्यैस्तु पूरयेत् ।
अथ त्रिकेषु श्रीपर्णी शमी च खदिरं ततः ॥ १९४ ॥
सप्तच्छदं च ककुभमसनं च कदम्बकम् ।
रक्तचन्दनलोध्रे च सरलं सर्जमेव च ॥ १९५ ॥
बकुलं कर्णिकारं च पाटलारग्वधं तथा ।
तमालबिल्वौ धात्री च चतुःक्षीरनगा अपि ॥ १९६ ॥
रुद्राक्षं पुत्रजीवं च त्रिकेष्वापूरयेत् क्रमात् ।
मध्ये चतुस्त्रिकाणां तु पूर्वादिक्रमयोगतः ॥ १९७ ॥
मूलं ब्रह्माणि चाङ्गानि मन्त्राः स्युर्देवतानि च ।
कोणकोष्ठचतुष्कस्य क्ष्मादिमूर्तिचतुष्टयम् ॥ १९८ ॥

दैवतं चापि नामानि मन्त्रास्तेषां नमोन्तकाः ।
आपोराजानमाद्यात् प्राग् याम्ये पुरुषसूक्ततः ॥ १९९ ॥
कद्रुद्राद्येन वारुण्यामिमाँ रुद्राय चोत्तरे ।
नवकानां तु मन्त्राः स्युरापो विष्णुश्च पूर्वयोः ॥ २०० ॥
सूक्तयोर्दैवतं चाथ रुद्रः स्याच्छिष्टयोरपि ।
आग्नेयस्याष्टकस्येमाँ रुद्राय स्थिरधन्वने ॥ २०१ ॥
हिरण्यवर्णाःशुचय इत्याद्यं नैर्ऋताष्टके ।
हिरण्यशृङ्गमित्याद्याद् वायव्याष्टघटैरपि ॥ २०२ ॥
शन्न इन्द्रादिकं सूक्तमैशान्यामष्टकस्य तु ।
रुद्रश्चापो वरुणश्चेन्द्राग्नी दैवतं क्रमात् ॥ २०३ ॥

एतैर्देवमभिषेचयेदिति यावत् ।

त्रिकाणामथ चाष्टानामिन्द्राग्न्योरन्तरत्रिकान् ।
प्रारभ्याङ्गुष्ठमात्रश्च भुवनेश्वरसंज्ञकः ॥ २०४ ॥
ईशानश्चैकपिङ्गाक्ष उद्भवश्च भवस्तथा ।
महादेवो महातेजा मन्त्रास्तद्देवताश्च ते ॥ २०५ ॥

तारादिनमोन्तानि तत्तन्नामधेयानि मन्त्रा इति यावत् ।

इदंविष्ण्वादिक चाथ दधिक्राव्णादिकत्रयम् ॥ २०६ ॥
अग्निमीळेतिपूर्वा ऋगिषेत्वेत्यादिकं तथा ।
घृतं मिमिक्षेत्याद्यं च मधुवाता ऋतायते ॥ २०७ ॥
मन्त्राः स्युर्देवताश्चासामाद्याया विष्णुरुच्यते ।
दध्यादित्रितयस्याप ऋग्वेदादेस्तु पावकः ॥ २०८ ॥
इषेत्वाद्यस्य सविता घृतादेरपि चानलः ।
मध्वादेः पितरो दैवमाप्यायस्वादिके शशी ॥ २०९ ॥
आकाशोऽर्कश्च सोमश्च यजमानश्च दैवतम् ।
मन्त्राः पुरोवत् पञ्चवर्णव्योमव्यापिषडर्णकौ ॥ २१० ॥
अघोराख्यं तथाख्यं च मन्त्रास्तद्देवता शिवः ।

एभिर्यथाक्रममभिषेचयेदिति यावत् ।

मध्येन शिवकुम्भेन महत्या व्योमविषया ॥ २११ ॥

अभिषिञ्चेन्महादेवं देवतास्य शिवः स्वयम् ।

अष्टोत्तरशतस्य ।

द्विपञ्चाशत्समधिकद्विशतस्नपनस्य तु ॥ २१२ ॥
मध्यकुम्भं यथापूर्वं हेमरत्नकुशाम्बुभिः ।
पूरयेदथ दिक्ष्वष्टनवकान्यपि तद्बहिः ॥ २१३ ॥
चतुष्कोणस्थनवकान्यपीत्यष्टोत्तरं शतम् ।
अष्टोत्तरशतोक्तैस्तु द्रव्यैरेवाभिपूरयेत् ॥ २१४ ॥
तैरेव देवतामन्त्रैरथ द्वादशकान्यपि ।
चतुर्दिक्षु क्रमादेभिर्द्रव्यैरद्भिश्च पूरयेत् ॥ २१५ ॥
नन्द्यावर्तं च धुर्धूरं कपित्थं च कदम्बकम् ।
माल्यकश्चैव भद्रा च तद्वद् द्रावणबिल्वकम् ॥ २१६ ॥
मरुकं पद्मतुलसी मुण्डी कुरवकार्जके ।
मध्यद्वादशके प्राच्यां सोमकर्पूरवल्लिके ॥ २१७ ॥
कुब्जकं शतपत्रं च कर्णिकारं बकं तथा ।
श्वेतार्कमरुणागस्तिकुसुमं काञ्चनारकम् ॥ २१८ ॥
मल्लिकायुगलं रक्तकरवीरं च दक्षिणे ।
तमालं माधवी श्वेतमन्दारं पाटलद्वयम् ॥ २१९ ॥
गोक्षुरं भूकदम्बं चाप्यङ्कोलस्य च पल्लवः ।
बीजपूरस्य कुसुमं लवङ्गस्य च पल्लवः ॥ २२० ॥
राजार्कः स्वर्णयूथी च प्रत्यग् द्वादशकस्य तु ।
श्वेतपल्लवपुष्पे द्वे श्वेतदूर्वा महामरी ॥ २२१ ॥
कश्मीरोशीरमुस्ताश्च पलाशकुसुमं ततः ।
सितासितोन्मत्तपुष्पे शेफाली बृहती तथा ॥ २२२ ॥
मध्यद्वादशके सौम्ये द्रव्याणि स्युर्यथाक्रमम् ।
पार्श्वद्वादशकान्यष्टावापूर्य स्वच्छवारिभिः ॥ २२३ ॥
सचन्दनं हिरण्यं च पुष्पाण्यप्येषु निक्षिपेत् ।
अष्टोत्तरशतप्रोक्तैर्मन्त्रैस्तैर्नवकैः क्रमात् ॥ २२४ ॥

एकादशानुवाकैस्तु रौद्रद्वादशकैः शिवम् ।
ऐन्द्रादिकैस्तु संस्नाप्य शिष्टद्वादशकेन तु ॥ २२५ ॥
ब्रह्मभिर्मध्यमं कुम्भं महत्या व्योमविद्यया ।

द्विपञ्चाशदधिकद्विशतस्य ।

कलशत्रिशतस्यापि हेमरत्नकुशाम्बुभिः ॥ २२६ ॥
मध्यकुम्भं समापूर्य तद्बाह्यकलशाष्टकम् ।
रत्नाष्टकेन तीर्थाद्भिः समापूर्यास्य बाह्यतः ॥ २२७ ॥
अष्टोत्तरशतद्रव्यैस्तथैवापूर्य मन्त्रतः ।
तत्कोणे नवकान्तःस्थपदानां तु चतुष्टयम् ॥ २२८ ॥
शुद्धाद्भिः पूरयेत् तस्माद् बाह्यकाङ्गलकोणगात् ।
द्विपञ्चाशद्द्विशतवद् द्रव्यैर्मन्त्रैश्च दैवतैः ॥ २२९ ॥
पूरयित्वा तु तन्मध्यनवकानि त्रिकाणि च ।
द्वादशाष्टप्रसंख्यानि हेमाम्भोभिः प्रपूरयेत् ॥ २३० ॥

त्रिशतस्य ।

अष्टाधिकपञ्चशते मध्यकुम्भं तु पूर्ववत् ।
सपञ्चरत्नहेमाद्भिः समापूर्य यथाविधि ॥ २३१ ॥
बाह्ये त्रिकारकुम्भांश्च तद्बाह्यनवकाष्टके ।
मध्यत्रिकाष्टके चैव सद्वादशश(तान्? तं) घटान् ॥ २३२ ॥
अष्टोत्तरशतद्रव्यैश्चतुर्भिश्चैव पूरयेत् ।
तद्बाह्यतस्तु परितो नवकावरणद्वये ॥ २३३ ॥
चत्वारिंशत्प्रसंख्यानि नवकानि भवन्ति हि ।
तेषां तु मध्यकुम्भेषु तावद्द्रव्याणि निक्षिपेत् ॥ २३४ ॥
शिष्टद्रव्यचतुष्केण कोणकुम्भांस्तु पूरयेत् ।
शिष्टांस्तु कलशान् सर्वान् शुद्धाम्भोभिः प्रपूरयेत् ॥ २३५ ॥
सहेमगन्धकुसुमान् मूलेन तु यथाविधि ।
मध्यावरककुम्भैस्तु रुद्रेणैवाभिषेचयेत् ॥ २३६ ॥
तद्बाह्ये नवकैः सर्वैः क्रमान्नारायणोदितैः ।
[illegible] ऋग्भिरभिषिच्य क्रमेण तु ॥ २३७ ॥

मध्यस्थनवकुम्भेन स्नपयेद् व्योमविद्यया ।
अथवा सर्वकुम्भैश्च संहितामनुभिः क्रमात् ॥ २३८ ॥

ब्रह्मभिः शिवगायत्र्या सावित्र्या व्योमविद्यया ।
अभिषिञ्चेद् गुरुर्देवं तत्तत्सूक्तान्यनुक्रमात् ॥ २३९ ॥

अष्टौ मूर्तिधरा विप्रा जपेयुः परितः स्थिताः ।
कुशकूर्चैस्तु कलशान् संस्पृशन्तस्तथा शिवम् ॥ २४० ॥

अष्टाधिकपञ्चशतस्य ।

अथ सप्तशते विंशत्याधिके मध्यमं घटम् ।
हेमरत्नैश्च शुद्धाद्भिः पूरयेत् संहिताजपात् ॥ २४१ ॥

द्वासप्ततिं तु कलशांस्तद्बाह्ये नवकाष्टके ।
तावद्द्रव्यैः क्रमान्मन्त्रैरष्टोत्तरशतोदितैः ॥ २४२ ॥

बाह्ये द्वासप्ततिव्यूहान् क्रमादावरणत्रये ।
तेषां नवकमध्यस्थकुम्भास्तावन्त एव हि ॥ २४३ ॥

तेषु द्रव्याणि तावन्ति क्रमात् तान्येकशः क्षिपेत् ।
द्रव्यद्वादशकं शिष्टं कोणेष्वावरणत्रये ॥ २४४ ॥

क्रमाद् द्वादशकुम्भेषु शार्वाशान्तं विनिक्षिपेत् ।
मध्यादिकेषु व्यूहेष्वप्येकाशीतिप्रसङ्ख्यया ॥ २४५ ॥

व्योमव्यापिपदान्येषु क्रमात् तावन्ति विन्यसेत् ।
तत्तदुद्दिष्टमध्वानं षड्विधं चैषु योजयेत् ॥ २४६ ॥

संपूज्य च विधानेन महत्या व्योमविद्यया ।
अभिषिञ्चेद् गुरुर्देवं रुद्रेण ब्रह्मभिस्तथा ॥ २४७ ॥

प्राग्वन्मूर्तिधरा विप्राः कद्रुद्रं पौरुषं ततः ।
श्रीसूक्तं पवमानं च जपेयुः कूर्चपाणयः ॥ २४८ ॥

विंशत्यधिकसप्तशतस्य ।

पञ्चावरणयुक्तस्य सहस्रकलशस्य तु ।
गन्धकाञ्चनरत्नैश्च कुशतीर्थजलैर्घटम् ॥ २४९ ॥

शिवाख्यं पूरयेन्मध्ये तद्बाह्यघटविंशतेः ।
अग्न्यादिकोणकुम्भांस्तु पाद्याचामार्घ्यगन्धकैः ॥ २५० ॥

शिष्टान् दुग्धघृतक्षौद्रदधीक्षुफलवारिभिः ।
कषायतोयगोमूत्रपुष्पगोमयकाञ्चनैः ॥ २५१ ॥
पृथग् बिल्वस्य पञ्चाङ्गैः सहाम्भोभिः प्रपूरयेत् ।

प्रथमावरणस्य ।

---

अथ द्वितीयावरणे दूर्वायवतिलाम्बुभिः ॥ २५२ ॥
शाल्युत्पलत्रयाम्भोभिश्चतुःक्षीरनगाङ्कुरैः ।
जम्बूशिरीषपालाशसप्तपर्णासनार्जुनैः ॥ २५३ ॥
प्रियङ्गुमाषगोधूममुद्गसर्षपवैणवैः ।
निष्पावकमहाव्रीहिश्यामाकाणुगवीधुकैः ॥ २५४ ॥
मसूरककुळस्थैश्चाप्याढकीभिश्च जर्तिलैः ।
सिद्धार्थैरपि नीवारैः पूरयेत् तु यथाविधि ॥ २५५ ॥
ततो विशुद्धदेशस्थनदीवल्मीकतीर्थजाः ।
वृ(षभे ? षेभ)गिरिशृङ्गेभ्यः कुली(रे? र)क्षेत्रयोर्मृदः ॥ २५६ ॥
पलाशकुशबिल्वानां क्षीरागानां च मूलतः ।
वेश्या वराहकू(टै ? टा)श्च मृदो देवगृहस्य च ॥ २५७ ॥
कुमुदोत्पलपद्मानां मूलेभ्यो मृत्तिकाः पृथक् ।
चम्पकद्वयमुन्मत्तत्रयं वै पाटलं यवम् ॥ २५८ ॥
अशोकद्रोणकुसुमकरवीरचतुष्टयम् ।
पद्मद्वयं च कुमुदद्वयं वै तुलसीद्वयम् ॥ २५९ ॥
शतपत्रं कुब्जकं च माधवी मल्लिकाद्वयम् ।
सप्तकालं च नारं च पुष्पे पुन्नागनागयोः ॥ २६० ॥
राजार्कं धवलार्कं च कल्हारेन्दीवरे तथा ।
सितारुणे च मन्दारे कर्णिकारं महामरी ॥ २६१ ॥
आर्तिं कुसुम्भकुसुमं सितकृष्णापराजिते ।
पलाशपुष्पं बकुलं नन्द्यावर्तं कदम्बकम् ॥ २६२ ॥
दमनं पद्मतुलसी मुण्डी कुरवकं तथा ।
ह्रीरिबेरं मरुवकं मुस्ता ग्र(न्थी ? न्थि)रुशीरकम् ॥ २६३ ॥

बृहत्यारग्वधौ जम्बूपल्लवं चूतपल्लवम् ।
अरुणागस्तिकुसुममाम्रपुष्पं च चोरकम् ॥ २६४ ॥
शेफालीकुसुमं लक्ष्मी सहदेवी कृताञ्जलिः ।
भीतेन्द्रवल्ली मुसलीभद्रे दूर्वाद्वयं तथा ॥ २६५ ॥
हरिक्रान्ता भृङ्गराजद्वयं चैकदलाम्बुजम् ।
भूकदम्ब इतीमानि द्वात्रिंशदधिकं शतम् ॥ २६६ ॥

द्वितीयावरणस्य ।

---

तृतीयेऽपि च माल्यङ्गं शमीपुष्पं च तद्दलम् ।
अपामार्गः शङ्खपुष्पं तापिञ्छं च तमालकम् ॥ २६७ ॥
ब्राह्मी रुद्रजटा सूर्यवर्तिनी च सुवर्चला ।
वनमाला तथा श्यामा पट्टी रावणबिल्वकम् ॥ २६८ ॥
कर्पूरवल्लिका सोमवल्ली धान्याङ्कुरं तथा ।
दूर्वासनप्रसूने द्वे बकपुष्पं तथार्जकम् ॥ २६९ ॥
कुटजं सरलं कुष्ठं चन्दनं रक्तचन्दनम् ।
कुङ्कुमं च मुरं मांसी कर्पूरं चागरुद्वयम् ॥ २७० ॥
जातीफलं च मञ्जिष्ठा देवदारुश्च रोचना ।
सर्पं चषालपद्माक्षौ गन्धामलकगन्धकाः ॥ २७१ ॥
एलालवङ्गतक्कोलहरितालमनःशिलाः ।
गैरिकं माक्षिकं काक्षी सिन्दूरं दरदं शिला ॥ २७२ ॥
अयस्तीक्ष्णमयस्कान्तस्ताम्रं त्रपु च पित्तलम् ।
सीसकं रजतं स्वर्णं वैक्रान्तं चाभ्रकत्रयम् ॥ २७३ ॥
(सौ ? सू)र्येन्दुकान्तौ स्फटिकं लोहं तुत्थं च कांस्यकम् ।
नालिकेराम्रपनसरम्भालिकुचदाडिमाः ॥ २७४ ॥
मातुलुङ्गं च जम्बीरं बैल्वमातुण्डिकाफलम् ।
पूगं च बदरं द्राक्षा नारङ्गामलकीफले ॥ २७५ ॥
मधूकाश्वत्थवृक्षौ च श्रीपर्णीखदिरावपि ।
पलाशं सर्जलोध्रौ च रौहीतकविकङ्कतौ ॥ २७६ ॥

बिल्वारग्वधशाकाश्च धात्री चैव हरीतकी ।
जम्बूश्च साराण्येतेषां रत्नानि च पृथक् नव ॥ २७७ ॥
वज्रादिकानि क्रमशो हैमान्यस्त्राण्यथो दश ।
हरिद्रायवगोधूमशालीचूर्णानि भस्म च ॥ २७८ ॥
मुद्गमाषकुलस्थानां चूर्णान्यपि च सक्तवः ।
धानाः करम्बाश्चोडुम्बा बला चातिबला तथा ॥ २७९ ॥
समुद्रसिन्धुतीर्थाम्भो वापीकूपतटाकजम् ।
ह्रदनिर्झरतोयं च रुद्राक्षं च यथाक्रमम् ॥ २८० ॥
इत्थं तृतीयावरणे कलशानां चतुष्टयम् ।
शतं च चत्वारिंशच्च द्रव्यैरुक्तैः प्रपूरयेत् ॥ २८१ ॥

तृतीयावरणस्य ।

---

चतुर्थावरणे चाथ + + + कलशोत्तरम् ।
चतुश्शतं हि कलशान् हेमकर्पूरकुङ्कुमैः ॥ २८२ ॥
माद्यैः पूरयेत् तोयैर्गायत्र्या शिवसंज्ञया ।

चतुर्थावरणस्य ।

---

पञ्चमावरणे तद्वद् द्वासप्ततिशतद्वयम् ॥ २८३ ॥
कुम्भाः स्युस्तान् सकर्पूरचन्दनागरुवारिभिः ।
पूरयेच्छिवसावित्र्या प्रादक्षिण्याद् यथाविधि ॥ २८४ ॥
ततः सन्धिस्थकुम्भांस्तु तीर्थतोयेन पूरयेत् ।
त्रियम्बकेन गन्धं च हिरण्यं चैव निक्षिपेत् ॥ २८५ ॥
सर्वत्रावृतिकुम्भानां पूरणे पूजने तथा ।
प्रागादिकं स्यादीशान्तं क्रमोऽयं स्नपनेऽपि च ॥ २८६ ॥
व्यूहानां नवकादीनां प्राग्याम्याप्यैन्दवान्तकम् ।
अग्निरक्षोनिलेशान्तं पूरयेत् स्नपयेदपि ॥ २८७ ॥
ईशानाद्यास्तु सद्यान्तं मध्याद्यावरणेश्वराः ।
सदाशिवादयश्चापि शान्त्यतीतादिकाः कलाः ॥ २८८ ॥

अध्वानोऽपि पुनश्चैषु मध्याद्येषु स्थिताः क्रमात् ।
मध्यमे शिवकुम्भे तु सर्वेषु कलशेष्वपि ॥ २८९ ॥
स्मर्तव्याः स्युः षडध्वानः समष्टिव्यष्टिमार्गतः ।
सर्वत्रापि च कुम्भेषु स्वर्णं माषमितं क्षिपेत् ॥ २९० ॥
तदर्धं वाप्यतोऽर्धं वा श्रेष्ठमध्याधमक्रमात् ।
त्रिद्व्येकनिष्कं श्रेष्ठाद्यं मध्ये शिवघटे क्षिपेत् ॥ २९१ ॥
सामान्यं सर्वकुम्भानां गव्यमध्वैक्षवं विना ।
पूरणं शुद्धतोयेन वस्त्रं कूर्चं च काञ्चनम् ॥ २९२ ॥
पल्लवानि पिधानं च गन्धादीनां च तत् समम् ।

पञ्चावरणसहस्रकलशाधिकारः ।

---

अष्टोत्तरसहस्रस्य प्राग्वच्छिवघटं जलैः ॥ २९३ ॥
सरत्नहेमगन्धैस्तु समापूर्य यथाविधि ।
पूर्वादिदिक्पञ्चकेषु द्रव्यैर्विंशतिभिः क्रमात् ॥ २९४ ॥
पूर्ववत् पूरयेन्मन्त्रैः पञ्चकान्यानलादिषु ।
शुद्धाम्भोभिः सकर्पूरैः पूरयेत् कुसुमान्वितैः ॥ २९५ ॥

मध्यमव्यूहस्य ।

---

बाह्ये द्वितीयव्यूहे तु विकारनवकानि तु ।
तृतीयावरणप्रोक्तैर्माल्यश्राद्यैः प्रपूरयेत् ॥ २९६ ॥

द्वितीयव्यूहस्य ।

---

अथ तृतीयव्यूहे तु चतुर्दिङ्नवकानि तु ।
दूर्वादिनीवारान्तैस्तु द्वितीयावरणोदितैः ॥ २९७ ॥
पद्माक्षरुद्राक्षाभ्यां च तत्त्वद्रव्यैस्तु पूरयेत् ।
शिष्टाशीतिप्रसंख्यानां नवकानां यथाक्रमम् ॥ २९८ ॥
मध्यकुम्भांस्तु तावद्भिर्द्वितीयावरणोदितैः ।
नदीमृदादिकैर्द्रव्यैः पूरयेद् व्योमविद्यया ॥ २९९ ॥

अष्टद्रव्यैस्ततः शिष्टैर्द्वारकुम्भान् यथापुरम् ।
आपूरयेत् तु मूर्तीशमन्त्रैरष्टाभिरेव तु ॥ ३०० ॥

अष्टोत्तरसहस्रकलशानाम् ।

---

चतुर्व्यूहेऽपि मध्यस्थकुम्भं प्राग्वत् प्रपूरयेत् ।
ततस्त्रयाणां व्यूहानां दिक्कोणान्तांस्तु दिक्स्थितान् ॥ ३०१
व्यूहेषु लाङ्गलाभेषु कलशान् पूर्ववत् क्रमात् ।
पूर्वोक्तद्रव्यमन्त्रैश्च सन्धिस्थानपि पूरयेत् ॥ ३०२ ॥
पञ्चावरणवत् सर्वं देवताध्वादिकं स्मृतम् ।

चतुरावरणसहस्रकलशाधिकारः ।

---

एकविंशातिके व्यूहे मध्यकुम्भं च तद्बहिः ॥ ३०३ ॥
विंशतिं मध्यमव्यूहे प्राग्वद् द्रव्यैस्तु पूरयेत् ।
तद्बाह्यविंशतिव्यूहमध्यस्थकलशांस्ततः ॥ ३०४ ॥
दूर्वादिविंशतिद्रव्यैर्गोधूमान्तैः प्रपूरयेत् ।
ततोऽष्टदिक्षु व्यूहानां बाह्यावरणगान् घटान् ॥ ३०५ ॥
अष्टाविंशतिसंख्यांस्तु प्रतिव्यूहं क्रमेण तु ।
मुद्गादिभिस्तु तावद्भिरुक्तैर्द्रव्यैः प्रपूरयेत् ॥ ३०६ ॥
अन्तर्व्यूहचतुष्कस्थकुम्भान् कुङ्कुमवारिभिः ।
सहिरण्यैः समापूर्य पार्श्वव्यूहाष्टकं बहिः ॥ ३०७ ॥
गोमूत्रगोमयक्षीरदध्याज्यैक्षवमाक्षिकैः ।
नालिकेरपयोभिश्च क्रमेणैवाभिपूरयेत् ॥ ३०८ ॥
अथाष्टदिक्षु व्यूहानामन्तरा प्रतिविंशतेः ।
चतुष्कोणस्थकलशान् शिष्टैर्द्रव्यैस्तु पूरयेत् ॥ ३०९ ॥

एकविंशतिव्यूहस्य ।

---

सहस्रकलशानां तु पृथगावरणक्रमात् ।
देवतानि च मन्त्राश्च कथ्यन्ते क्रमशोऽधुना ॥ ३१० ॥
नवव्यूहादिकानां च व्यूहैरावरणानि तु ।
पञ्चधा पृथगुक्तानि पञ्चावरणवत् क्रमात् ॥ ३११ ॥

मध्यस्थशिवकुम्भस्य दैवतं हि सदाशिवः ।
ब्रह्माङ्गानि च मूलं च मन्त्राः स्युर्व्योमविद्यया ॥ ३१२ ॥
गर्भावरणकस्याथ देवतास्त्वष्टमूर्तयः ।
द्वितीयावरणस्यापि वामाद्याः शक्तयः स्मृताः ॥ ३१३ ॥
तृतीयस्य तु मूर्तीशाः शर्वाद्या देवताः स्मृताः ।
चतुर्थावरणस्याथ दैवमङ्गुष्ठमात्रकम् ॥ ३१४ ॥
भुवनेशान ईशान एकपिङ्गेक्षणस्तथा ।
उद्भवश्च भवश्चाथ महादेवो महाद्युतिः ॥ ३१५ ॥
पञ्चमावरणस्याथ शतरुद्रदशादिगाः ।
कपालीशोऽग्निरुद्रश्च याम्यो निर्ऋतिसंज्ञकः ॥ ३१६ ॥
बलः शीघ्रो निधीशश्च विद्याधिपतिरष्टमः ।
एतेऽष्टदिक्स्थव्यूहानामधिदेवाः क्रमात् स्मृताः ॥ ३१७ ॥
द्वारशोभोपशोभाद्यौ विघ्नेशा रक्षकाः स्थिताः ।
पाद्येनेदंविष्णुराद्यादापोहिष्ठेत्यनन्तरम् ॥ ३१८ ॥
आपः पुनन्त्वित्यर्घ्येण चाग्निमीळेति गन्धतः ।
इषेत्वेति घृतेनापि मधुना मधुवाततः ॥ ३१९ ॥
आप्यायस्वेति दुग्धेन दधिक्राव्णादिना दधि ।
उपत्वामेतीक्षुरसान्मानस्तोकात् करम्भकैः ॥ ३२० ॥
अश्वावत्या कषायाद्भिः सुमित्रानेति लाजकान् ।
अग्न आयाहि धानाभिः पुष्पावत्या तु पुष्पकैः ॥ ३२१ ॥
समुद्रज्येष्ठतश्चापि ब्रह्मजज्ञानतोऽपि च ।
हरिद्राद्भिश्च सक्त्वद्भिरभिषिञ्चेन्महेश्वरम् ॥ ३२२ ॥
रक्षोहणेन सिद्धार्थैः शन्नोदेव्या तिलाम्भसा ।
वास्तोष्पतेतिशाल्यद्भिर्दूर्वाद्भिश्चायनेति वै ॥ ३२३ ॥
पद्माम्भोभिः श्रियैजातात् त्रिष्टुभा चोत्पलाम्बुभिः ।
आशुःशिशानभावेन स्नपयेन्मृत्तिकाम्बुभिः ॥ ३२४ ॥
श्रीसूक्ताद् गन्धतोयैस्तु कद्रुद्रेण फलाम्बुभिः ।
चमकेन तु धान्याद्भिः साराद्भिः पौरुषेण तु ॥ ३२५ ॥

आपोराजानमाद्येन स्नपयेद् रत्नवारिभिः ।
त्रैयम्बकेन भस्माद्भिरिमां रुद्राय कूप (पै.? जैः) ॥ ३२६ ॥

कनिक्रदाद्यात्लोहाद्भिरीशानाभिर्झराम्बुभिः ।
पुरुषेण तटाकाद्भिरघोरेण समुद्रगात् ॥ ३२७ ॥

वामदेवेन नद्यद्भिरजातेन ह्रदाम्बुभिः ।
तीर्थैरिमं मे गङ्गेति गन्धद्वारेति गोमयात् ॥ ३२८ ॥

ओषध्यद्भिस्तु रुद्रेण स्वस्त्याद्येनाङ्कुराम्बुभिः ।
पवमानैः कुङ्कुमाद्भिः सावित्र्या घनसारकैः ॥ ३२९ ॥

हिरण्यवर्णाः शुचय इत्याद्येन कुशाम्भसा ।
यासा राजेति मन्त्रेण बिल्वपत्राद्ववारिभिः ॥ ३३० ॥

यासां देवेति मन्त्रेण गोमूत्रेणाभिषेचयेत् ।
शिवेन मा चक्षुषेति स्नपयेत् पल्लवाम्बुभिः ॥ ३३१ ॥

स्नपयेद् धातुसलिलैः पवमानःसुवर्जनात् ।
जातवेदःपवित्राद्यैरनुवाकान्ततः क्रमात् ॥ ३३२ ॥

यवमाषादिभिश्चूर्णैः स्नपयेद् घर्षयेत् तथा ।
अम्भस्यपार इत्याद्याद्धेमाम्रसलिलैरपि ॥ ३३३ ॥

तरत्समन्दीत्याद्येन रुद्राक्षसलिलैस्ततः ।
अभिषिञ्चेन्महादेवं पुष्पधूपजलान्तरम् ॥ ३३४ ॥

प्रारभ्य गर्भावरणादाबाह्यावरणान्तकम् ।
क्रमेण दिग्विदिग्योगात् कलशैः स्नपयेच्छिवम् ॥ ३३५ ॥

एकैकावरणव्यूहनवकस्नपनादनु ।
स्नपयेच्छिवगायत्र्या सपुष्पैः शीतवारिभिः ॥ ३३६ ॥

पुष्पधूपार्चितं कृत्वा स्नपयेच्च पुनः पुनः ।
आसमाप्तेस्तु कुम्भानां स्नपयित्वोदितक्रमात् ॥ ३३७ ॥

मार्जयेन्मार्जनद्रव्यैरीशानेन तु चोदितैः ।
ब्राह्मीं च वैष्णवीं रौद्रीं विमलां च कृताञ्जलिम् ॥ ३३८ ॥

रजनीं सहदेवीं च शिरीषं सूर्यवर्तिनीम् ।
सदाभद्रां कुशाग्राणि मिलित्वा मार्जयेच्छिवम् ॥ ३३९ ॥

पञ्चाशद्दर्भकूर्चेन शन्नइन्द्रादिना ततः ।
संप्रोक्ष्य स्नपयेच्चाद्भिः कुर्यान्नीराजनं ततः ॥ ३४० ॥
शालिपिष्टादिविहितैर्हेमामत्रादिषु क्रमात् ।
देवाष्टमङ्गलैश्चान्यैर्लोकपालायुधैरपि ॥ ३४१ ॥
उच्चैः पिष्टप्रदीपैश्च दूर्वासिद्धार्थपङ्कजैः ।
दध्यक्षतैश्च सुन्यस्तैः पुंसा नीराजयेद् विभुम् ॥ ३४२ ॥
संगीतनृत्तवादित्रैः शङ्खकाहलगोमुखैः ।
तिमिलानकभेर्याद्यैर्निनदद्भिरनारतम् ॥ ३४३ ॥
वेदघोषैश्च मूर्च्छद्भिर्जयशब्दादिमङ्गलैः ।
नीराज्य तद्वत् स्नपयेत् ततो मध्यघटेन तु ॥ ३४४ ॥
अभिषिच्याथ शुद्धेन वाससा परिमार्जयेत् ।
ततः सुसूक्ष्मैरहतैरौ(क्ष्णैः ? र्णैः) कार्पासिकैरपि ॥ ३४५ ॥
परिधाप्य च मूलेन पाद्यं दद्यादथेशतः ।
हृदयेन मुखेष्वर्घ्यं नेत्रेणाचमनं तथा ॥ ३४६ ॥
दत्त्वा विभूषणैर्हैमैर्नानारत्नविचित्रितैः ।
मकुटाद्यैर्यथाशोभं पिण्डिकाभूषणान्तकैः ॥ ३४७ ॥
आभूषयेत् तु वक्त्रेण रूपिणाचामयेदपि(?) ।
चन्दनेन सुपिष्टेन सकर्पूरहिमाम्भसा ॥ ३४८ ॥
कुङ्कुमागरुमिश्रेण लिम्पेद् गन्धेन वामतः ।
पुष्पैरपि च मालाभिरलङ्कुर्यादजाततः ॥ ३४९ ॥
असितागरुकर्पूरपूरैस्तु सितयान्वितैः ।
धूपयेच्छिखया शम्भुं दीपं दद्याच्च वर्मतः ॥ ३५० ॥
सकर्पूरदशैर्दीपैः सुगन्धाद्यैः प्रदीपितैः ।
आरात्रिकमथास्त्रेण भ्रमयित्वावतारयेत् ॥ ३५१ ॥
नैवेद्यमथ सुस्वादु सिद्धं कलशसम्मितैः ।
शालिजैस्तण्डुलप्रस्थैस्ततोऽर्धैर्वाप्यतोऽर्धतः ॥ ३५२ ॥
श्रेष्ठादिकं निवेद्यं स्यात् तद्युक्ताज्याधिकप्लुतम् ।
पायसं चाथ दध्यन्नं सहरिद्रं सुसाधितम् ॥ ३५३ ॥

कृसरान्नं गुलान्नं च मुद्गान्नं च यथाक्रमम् ।
ईशानादिमुखाग्रेषु प्राज्याज्याक्तं निवेदयेत् ॥ ३५४ ॥
सर्वत्र दधिमध्वाज्यसितोपलरसोत्तरम् ।
ससूपं सूपदंशाढ्यं समूलफलमोदकम् ॥ ३५५ ॥
निवेदयीत शर्वाय तोयं शीतं सुगन्धि च ।
लवङ्गजातितक्कोलकर्पूरैलान्वितं जलम् ॥ ३५६ ॥
हस्तावसेचनं दत्त्वा प्रदायाचमनं तथा ।
सजातिफलतक्कोलकर्पूरक्रमुकान्वितम् ॥ ३५७ ॥
ताम्बूलं विनिवेद्याथ स्तुत्वा नत्वा च भक्तितः ।
शिवं प्रदक्षिणीकृत्य चाग्निं संरुध्य वै क्रमात् ॥ ३५८ ॥
वह्निस्थं च शिवं कुम्भे कुम्भस्थं हृदि योजयेत् ।
विसृज्य द्वारलोकेशान् भोजयेद् गुरुमूर्तिपान् ॥ ३५९ ॥
अध्येतॄन् परिचारांश्च ब्राह्मणान् लिङ्गिनस्तथा ।
दीनान्धकृपणादींश्चाप्यन्यानन्नार्थिनो जनान् ॥ ३६० ॥
मृष्टान्नाज्यैस्तु सन्तोष्य प्रतिष्ठोक्तक्रमेण तु ।
तोषयेद् दक्षिणाभिश्च वसनाभरणादिभिः ॥ ३६१ ॥
गोभिर्ग्रामैर्गजाश्वाद्यैः सन्तर्प्याथ प्रसन्नधीः ।
यजमानः सहाचार्यः क्षालिताङ्घ्रिकराननः ॥ ३६२ ॥
स्वाचान्तोऽन्तः प्रविश्येशं नमस्कृत्य प्रसाद्य च ।
सगन्धदूर्वाकुसुमं जलं संगृह्य पाणिना ॥ ३६३ ॥
स्नपनार्चनदानादेः फलं निरवशेषतः ।
निवेदयीत शर्वाय श्लोकेनानेन पादयोः ॥ ३६४ ॥

ओं

वित्तशाठ्यविहीनेन भक्त्या शक्त्यनुरूपतः ।
स्नपितः पूजितश्च त्वं दत्तं देयं च यन्मया ॥ ३६५ ॥
तत् सर्वं मम देवेश! प्रसन्नस्त्वं सहाम्बया ।
प्रतिगृह्णीष्व तच्चेदं ममास्तु फलसाधकम् ॥ ३६६ ॥

इत्यर्पयेद् बुभुक्षुश्चेन्मुमुक्षुरपि तत् तथा ।
त्वत्प्रसादेन कर्मेदं मास्तु मे नाथ! बन्धकम् ॥ ३९७ ॥

इति देवस्य पादाब्जद्वये कर्म समर्पयेत् ।

इति ह निगदितोऽयं शैवसिद्धान्तसिद्धो
दशशतकलशादिर्नन्दकुम्भावसानः ।
स्नपनविधिरुदारः श्रीमतश्चन्द्रमौले-
रभिमतपुरुषार्थप्रार्थनाकल्पवृक्षः ॥ ३९८१/२ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे क्रियापादे स्नपनपटलः पञ्चाशत्तमः ॥

---

## अथैकपञ्चाशः पटलः ।

अथ सूर्यादिदेवानां प्रतिष्ठा पूर्वमेव हि ।
शिवलिङ्गप्रतिष्ठायां समासात् सम्प्रदर्शिता ॥ १ ॥

कर्षणाद्युत्सवान्तं यत् प्रोक्तं कर्मात्र तत् समम् ।
तत्त्वमूर्त्यादिविन्यासक्रमः सर्वत्र वै समः ॥ २ ॥

सूर्यविघ्नेश्वरस्कन्दा हरनारायणस्तथा ।
दुर्गागौरीसरस्वत्यः शास्ता काली च मातरः ॥ ३ ॥

धामसु क्षेत्रपालश्च शिवाङ्गत्वेन वा पृथक् ।
एते सर्वे प्रतिष्ठाप्याः पूज्याश्चैव पृथक् पृथक् ॥ ४ ॥

एतेषां मूर्तिमूर्तीशमन्त्रावरणभेदतः ।
प्रतिष्ठाद्यं समासेन यथावदथ कथ्यते ॥ ५ ॥

सूर्यस्य मन्त्राः पूजा च प्रागेव समुदाहृताः ।
तत्प्रतिष्ठाविधौ बेरं स्यान्मुख्यं दशतालतः ॥ ६ ॥

प्रतिमालक्षणोक्तैस्तु मानोन्मानादिभिर्युतम् ।
चित्रादिकं तद्धेमादिलोहरत्नशिलामयम् ॥ ७ ॥

तस्याधिवासने प्राग्वन्मण्डपे तोरणानि तु ।
विभूतिर्विमलस्तार आराध्यश्चेति पूर्वतः ॥ ८ ॥

प्रत्यूषश्च प्रभासश्च प्रद्योतो द्योतनस्तथा ।
दण्डी च पिङ्गलश्चण्डस्तीव्रश्च द्वारपालकाः ॥ ९ ॥
प्राग्याम्याप्यैन्दवद्वार्षु द्वौ द्वौ कलशगौ यजेत् ।
लोकेशास्त्राङ्किताः पूज्या ध्वजास्तदधिदेवताः ॥ १० ॥
ततो विकिराविक्षेपात् सूर्यकुम्भास्त्रयोर्भ्रमात् ।
मण्डपं परिगृह्याथ लोकेशान् कुम्भगान् यजेत् ॥ ११ ॥
प्राग्वदाकारशुद्धिं च कृत्वा नयनमोक्षणम् ।
स्वमूलाङ्गैस्ततः कुर्याज्जले चाप्यधिवासनम् ॥ १२ ॥
ग्रामप्रदक्षिणादूर्ध्वं प्राग्वद् भावनमण्डपे ।
कलशैः स्नपयेत् प्राग्वत् पूरितैः सप्तसप्तकैः ॥ १३ ॥
अघमर्षणसूक्तेन चासत्येनादिना ततः ।
उद्यन्नद्यादिना चापि पवमानैस्तथा क्रमात् ॥ १४ ॥
ततः खषोल्किमूलाङ्गैः सावित्र्याष्टाक्षरेण च ।
दशप्रणवगायत्र्या मध्येन त्वभिषेचयेत् ॥ १५ ॥
इष्ट्वा प्रवेशयेद् देवमधिवासनमण्डपे ।
शयने शाययेत् प्राग्वन्निद्राकुम्भं च विन्यसेत् ॥ १६ ॥
ऐशान्यां सूर्यकुम्भाख्ये देवकुम्भांश्चतुर्दिशम् ।
न्यसेच्चात्मादितत्त्वानि जानुकण्ठशिरोवधि ॥ १७ ॥
ब्रह्मादिभागेष्वृग्वेदयजुस्सामगुणान्वितम् ।
मण्डलं पुरुषं चापि रश्मीन् भागत्रये क्रमात् ॥ १८ ॥
मूर्तिद्वादशकं चापि त्रिषु भागेषु विन्यसेत् ।

तद्यथा —

भूम्यप्तेजोमरुद्व्योममनोहङ्कारबुद्धयः ॥ १९ ॥
प्रकृतिः पुरुषः कालः परमात्मा च मूर्तयः ।
धातार्यमा च मित्रश्च वरुणोंऽशो भगस्तथा ॥ २० ॥
पूषा विवस्वान् पर्जन्यः सविता चेन्द्र एव च ।
विष्णुश्च मूर्तिपास्त्वेते द्वादशैवाथ शक्तयः ॥ २१ ॥
दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला तथा ।
अमोघा विद्युता चैव कथिता सर्वतोमुखी ॥ २२ ॥

प्रभा सन्ध्या च संज्ञा च शक्तयस्ताश्च विन्यसेत् ।
स्वाङ्गमूलखषोल्कैश्च सावित्र्या मूर्तिमूर्तिपैः ॥ २३ ॥
शक्तिभिश्चापि जुहुयुः प्राग्वत् कुण्डेषु मूर्तिपाः ।
पालाशार्कसमित्सर्पिश्चरुलाजतिलाक्षतैः ॥ २४ ॥
सिद्धार्थैः सर्वधान्यैश्च हुत्वाज्येन पुनः शतम् ।
हुत्वा सम्पातिताज्येन शान्तिकुम्भजलैरपि ॥ २५ ॥
संसिच्य त्रिषु भागेषु स्पृशेयुर्गुरुमूर्तिपाः ।
पीठे चापि क्रियाशक्तिं संस्मृत्य विनियोजयेत् ॥ २६ ॥
अनुक्तं च यथापूर्वं कर्म कृत्वाधिवास्य तु ।
प्रातः स्नानादिकं कृत्वा गर्भागारं प्रविश्य तु ॥ २७ ॥
लग्ने कूर्मशिलां न्यस्येत् तस्याः पूर्वक्रमेण तु ।
रत्नादिपञ्चवर्गांस्तु विन्यस्येष्ट्वाभिमन्त्रयेत् ॥ २८ ॥
ओं नमो व्यापिनीत्यादिमन्त्रमन्तर्जपन् गुरुः ।
आधारशक्तिमावाह्य संपूज्य विधिना ततः ॥ २९ ॥
क्रियाशक्त्यात्मकं पीठं तस्यास्तूपरि विन्यसेत् ।
ततो मुहूर्ते संप्राप्ते स्थापको मूर्तिपैः सह ॥ ३० ॥
प्रणवेन क्रियाशक्तौ पीठे बेरं ततो रवेः ।
ज्ञानशक्त्यात्मकं ध्यायन् स्थापयेत् प्रणवाणुना ॥ ३१ ॥
साङ्गमूलं खषोल्कं तु हंसं तद्हृदि विन्यसेत् ।
दशप्रणवगायत्र्या सावित्र्या चाभिमन्त्रयेत् ॥ ३२ ॥
स्थिरीकृत्याष्टबन्धेन बेरं प्रक्षाल्य वारिभिः ।
निद्राकुम्भेनाभिषिञ्चेत् किञ्चिच्छान्त्युदकैरपि ॥ ३३ ॥
अर्घ्यपञ्चामृतैश्चापि जलधूपान्तरैः क्रमात् ।
प्रक्षाल्य यवचूर्णाद्यैः कुम्भात्सलिलैस्ततः ॥ ३४ ॥
बेरकुम्भैश्चाभिषिञ्चेच्छान्तिकुम्भं न्यसेदपि ।
शेषं कर्म यथापूर्वं स्वमन्त्रेण समापयेत् ॥ ३५ ॥
आत्मतत्त्वादि विन्यस्य मूर्तौ प्राग्वद् विधाय तु ।
स्यात् प्रभूतासनं पीठं विभूतिविमलादिकाः ॥ ३६ ॥

पीठस्य पादाश्चत्वारो मध्ये ध्येया प्रबोधिनी।
दीप्तादिशक्तीश्चाराध्य मण्डले पुरुषं रविम् ॥ ३७ ॥
ध्यात्वा मूलाङ्गविन्यासं कृत्वा न्यस्येत् तथाध्वनः।
मूलोऽङ्गानि खषोल्कश्च तथा सदशतारका ॥ ३८ ॥
गायत्री चैव सावित्री मन्त्राध्वा कथितो रवेः।
दशप्रणवगायत्र्यास्तत्त्वसंख्यापदानि तु ॥ ३९ ॥
पदाध्वा तस्य निर्दिष्टः शेषाध्वानो यथापुरम्।
विभाव्यैवं तु तन्मूर्तौ हृदि हंसं सतारकम् ॥ ४० ॥
विन्यस्यार्घ्यादिभिर्देवमुपचारैस्तु पूजयेत्।
अथाचार्यः स्वकुण्डेऽग्नावमीभिर्जुहुयाद् घृतम् ॥ ४१ ॥
स्थिरोऽथ व्यापकस्तद्वदप्रमेयस्ततः परम्।
अनादिबुद्धो नित्यश्च ततः स्यादपि निश्चरः ॥ ४२ ॥
नित्यतृप्तश्च सप्तान्ते भवस्वाहेति योजिताः।
मन्त्राः स्युरेभिर्हुत्वाज्यमेभिर्देवं ततः स्पृशेत् ॥ ४३ ॥
सहस्रं वा तदर्धं वा शतं वा जुहुयाद् घृतम्।
अङ्गमूलखषोल्काद्यैर्मन्त्रैर्व्याहृतिभिस्तथा ॥ ४४ ॥
हुत्वा पूर्णां च संपूज्य लोकपालायुधादिभिः।
नीराज्य स्नपयेत् प्राग्वन्निवेद्यान्तं यजेदपि ॥ ४५ ॥
विभाव्य देवं तन्मूर्तौ सान्निध्यं प्रार्थ्य मन्त्रतः।
निशि भूतबलिं दत्त्वा यथापूर्वं दिनत्रयम् ॥ ४६ ॥
नीत्वा चतुर्थदिवसे हुत्वाग्नीनस्य मन्त्रतः।
सावित्र्या चैव गायत्र्या पृथगष्टोत्तरं शतम् ॥ ४७ ॥
हुत्वा जयादीनाज्येन प्रायश्चित्ताहुतीरपि।
पूर्णां च हव्यवाहादात्

हव्यवाहमित्यनूच्य स्विष्टमग्न इति याज्यया जुहोतीति यावत्।

ततोऽग्नीन् स्वहृदम्बुजे ॥ ४८ ॥

नियोज्य तेजश्चण्डं तु निर्माल्यैरीशगोचरे।
यजेत् त्रिनेत्रं पिङ्गाक्षं रक्तं रक्ताम्बरादिकम् ॥ ४९ ॥

चतुर्भुजं धृताम्भोजं यजेत् सवरदाभयम् ।
ततस्तु कलशैर्देवमभिषिच्योक्तमार्गतः ॥ ५० ॥
दक्षिणाश्च प्रदेयानि दत्त्वा पूर्वोदितक्रमात् ।
ततो नित्यविधानेन विभवानुगुणेन तु ॥ ५१ ॥
पूजां प्रवर्तयेत् सम्यक् त्रिसन्ध्यं सोपचारकम् ।

सूर्यप्रतिष्ठाधिकारः ।

---

नित्योत्सवे तु सूर्यस्य द्वारस्थौ चण्डपिङ्गलौ ॥ ५२ ॥
लोकेशस्थानगास्त्वष्टौ ग्रहाः सोमादयः क्रमात् ।
मातरश्चैव दुर्गा च तेजश्चण्डश्च दिग्गताः ॥ ५३ ॥
अरुणो मण्डपस्याग्रे सप्तच्छन्दस्तुरङ्गमाः ।
स्वाख्याभिस्ते च पूज्याः स्युर्गायत्र्युष्णिगनुष्टुभः ॥ ५४ ॥
बृहती पङ्क्तिस्त्रिष्टुब्जगती च यथाक्रमम्(?) ।
अन्तःस्थौ गोपुरद्वाःस्थौ पक्षौ शुक्लासितौ येजत् ॥ ५५ ॥
तथैव तद्बहिष्ठावप्ययने दक्षिणोत्तरे ।
निक्षिप्यैषां बलिं दत्त्वा बलिपीठाद् बहिः स्थितः ॥ ५६ ॥
आवाहयेद् बलिभुजः सर्वान् सूर्यगणान् गुरुः ।
ये समस्तं जगद् व्याप्य तिष्ठन्ति बलिकाङ्क्षिणः ॥ ५७ ॥
सूर्यपारिषदाः सर्वे गृह्णन्तु बलिमुत्तमम् ।

इति ।

ततो द्वादशराशिभ्यो यथास्थानं प्रदक्षिणम् ॥ ५८ ॥
मेषादिभ्यो बलिं दद्यान्मासेभ्यश्चापि तैः सह ।
मधुमाधवशुक्रेभ्यः शुचये नभसे तथा ॥ ५९ ॥
नभस्याय तथेषोर्जसहोभ्यश्च ततः परम् ।
सहस्यायाथ तपसे तपस्याय बलिं क्षिपेत् ॥ ६० ॥
तत तु बलिपीठस्य परितोऽष्टदिशास्वपि ।
क्षिपेद् गणानामष्टानां स्वाख्याप्रणवनमोन्तकम् ॥ ६१ ॥
गन्धर्वाश्चासुरगणाः पितृरक्षोगणास्ततः ।
नागा मरुद्गणास्तद्वद् यक्षभूतगणास्तथा ॥ ६२ ॥

---

१. 'तिः'(?) ख. पाठः.

पद्मपत्रे ऋषिगणाः स्थिताः + + + + + + ।
स्वाख्याभिरेतान् संपूज्य बलिं चैषां त्रिनिक्षिपेत् ॥ ६३ ॥
नित्योत्सवविधिः ॥

महोत्सवे तु शैवोक्तमार्गेणारोपयेद् ध्वजम् ।
पताकां चारुणाश्वाङ्कां गणांश्चावाह्य पूर्ववत् ॥ ६४ ॥
सन्धिस्थांश्च तथा देवानङ्कुरार्पणपूर्वकम् ।
उत्सवं कारयेत् प्राग्वदुत्तमादिक्रमेण तु ॥ ६५ ॥
बलिप्रक्षेपमन्त्रैस्तु सूर्यपार्षदान्तकैः ।
येभूताद्यैर्यथापूर्वमिष्ट्वा तेभ्यो बलिं क्षिपेत् ॥ ६६ ॥
नित्योत्सवोक्तविधिना प्रक्षिप्य परितो बलिम् ।
वैशेषिके[1] (च ? ण) विधिना राशिबाह्ये क्षिपेद् बलिम् ॥ ६७ ॥
इन्द्रादिलोकपालेभ्यस्तदस्त्रेभ्यश्च बाह्यतः ।
ऐन्द्र्यां दिशि गणा ये तु वज्रहस्ता महाबलाः ॥ ६८ ॥
इत्यादिभिस्तु दिङ्मन्त्रैः परितो विकिरेद् बलिम् ।
ततस्तु बलिपीठस्थगणेभ्यः पूर्ववद् बलिम् ॥ ६९ ॥
क्षिप्त्वा स्नात्वा यथापूर्वमन्तर्देवं प्रवेशयेत् ।
कृत्वा कौतुकबन्धाद्यं तीर्थयात्रां च पूर्ववत् ॥ ७० ॥
स्वमन्त्रैर्विधिवत् कृत्वा स्नपनान्तं समापयेत् ।
इत्थं समासादिह सूर्यतन्त्रप्रोक्तं प्रतिष्ठादिकमुत्सवान्तम् ।
बिम्बादितन्त्रेषु यथोदितं तच्छैवोक्तमार्गेण समस्तमूह्यम् ॥ ७१ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे क्रियापादे
सूर्यतन्त्रपटल एकपञ्चाशः ॥

---

अथ द्विपञ्चाशः पटलः ।

अथ विघ्नेश्वरस्यापि बेरः स्यात् पञ्चतालतः ।
पूर्वोक्ता एव मन्त्राः स्युः प्रतिष्ठाकर्म शैववत् ॥ १ ॥
सूर्यप्रतिष्ठाविहितं क्रियाचक्रं यदेव हि ।
विघ्नेशादिप्रतिष्ठासु प्रायशः समभेव तत् ॥ २ ॥

---

१. 'का' क. पाठः.

विशेषः कथ्यते सोऽयं विज्ञेयः स्यात् पृथक् पृथक् ।
तोरणा द्वारपालाश्च मूर्तिमूर्तीशशक्तयः ॥ ३ ॥
मन्त्राश्च परिवाराश्चाप्यध्वानः पद्मन्त्रयोः ।
सुपूर्णः पूर्णभद्रश्च प्रशान्तो विजयस्तथा ॥ ४ ॥
पूर्वादि तोरणानि स्युर्लोकेशाद्यैर्ध्वजाः स्मृताः ।
प्राचि कुण्डोदरो द्वाःस्थस्तद्वत् कुम्भोदरोऽपि च ॥ ५ ॥
विकटो वामनो याम्ये जयश्च विजयोऽम्बुपे ।
पूज्यौ द्वारेऽथ कौबेरे मेघनादमहोदरौ ॥ ६ ॥
कुम्भेषु पूजयेद् द्वाःस्थाल्लोकपालांश्च कुम्भगान् ।
गणेशकुम्भं चैशान्यामस्त्रं चेष्ट्वा तयोर्क्रमात् ॥ ७ ॥
अङ्कुशाख्यं (गणेशस्युरस्त्रं ?) श्रीविग्रहं यजेत् ।
अधिवासस्नपनयोः क्रमात् स्वीकृत्य मण्डपौ ॥ ८ ॥
कृत्वाथ करशुद्धिं च नेत्रमोक्षं ततो जले ।
अधिवास्य पुरादेस्तु परिक्रम्य प्रदक्षिणम् ॥ ९ ॥
स्नपयेच्च प्रवेश्याथ शाययेच्चाधिवासयेत् ।
पृथ्व्याद्या मूर्तयः पञ्च मनोहङ्कारबुद्धयः ॥ १० ॥
मूर्तयोऽष्टौ गणेशस्य विघ्नेशाद्यास्तदीश्वराः ।
विघ्नो विनायको वीरः शूरो हस्तिमुखस्तथा ॥ ११ ॥
एकदन्तस्ततः क्षिप्रप्रसादोऽथ गणेश्वरः ।
तीव्रा च ज्वालिनी नन्दा भोगदा कामरूपिणी ॥ १२ ॥
उग्रा तेजोवती सन्ध्या नवमी विघ्ननाशनी ।
शक्तयः क्ष्मादिमूर्तीनां त्रिभागे विन्यसेदिमाः ॥ १३ ॥
क्रियाशक्तिं च तत्पार्श्वे तत्पीठे विन्यसेद् यजेत् ।
वेद्यामैशे तु कुम्भास्त्रे दिक्षु मूर्तीशकुम्भगान् ॥ १४ ॥
निद्राकुम्भं चोपधाने विन्यस्यैषां जुहोति च ।
गर्भागारं प्रविश्याथ शक्तिं कूर्मशिलां न्यसेत् ॥ १५ ॥
रत्नादि पीठं बेरं च प्रतिष्ठाप्य तु मूर्तिमत् ।
चैतन्यं सर्वगं सूक्ष्मं तद्बीजं हंससम्पुटम् ॥ १६ ॥

स्वहृद्व्योमाम्बुजानीतं विन्यसेत् तदृपुद्भञ्जे ।
तन्मूर्तिमन्त्रं चाङ्गानि गणानांत्वादिकं तदा ॥ १७ ॥

गायत्रीं च गणेशस्य मन्त्राध्वानं च विन्यसेत् ।
विनायकाय विद्महे गजवक्त्राय धीमहि । तन्नो दन्ती प्रचोदयात् ।
पदानि विघ्नगायत्र्याः पदाध्वान्ये तु पूर्ववत् ॥ १८ ॥

षडध्वभावनां कृत्वा प्राग्वत् संस्नाप्य पूजयेत् ।
मन्त्रपादोदिता ये तु मन्त्रा विघ्नेश्वरस्य तु ॥ १९ ॥

मूर्तयोऽपि च कल्पोक्तास्तत्तद्भक्तैर्यथाविधि ।
तथातथा प्रतिष्ठाप्यास्तन्मन्त्रावरणादिभिः ॥ २० ॥

शक्तिकूर्मावनन्ताख्यपीठं धर्मादिकानपि ।
त्रिगुणार्कादिबिम्बेशब्रह्मविष्ण्वीशपङ्कजे ॥ २१ ॥

प्रथमावरणं स्वाङ्गैस्ततस्तीव्रादिशक्तिभिः ।
द्वितीयं मूर्तिपैश्चापि तृतीयं तु चतुर्थकम् ॥ २२ ॥

स्वस्थैस्तु पञ्चमं चाथ लोकेशैश्चायुधादिभिः ।
तत्तन्नाम्ना भवेदन्ते विघ्नपारिषदाय तु ॥ २३ ॥

तेषां पारिषदेभ्यश्च नमोन्तं विनियोजयेत् ।
संपूज्यैवं गणाधीशं स्थिराद्यैरथ सप्तभिः ॥ २४ ॥

हुत्वा स्पृ(श्येऽशे)द् यथापूर्वं प्रायश्चित्तं तु मूलतः ।
अङ्गैर्गणेशगायत्र्या गणानांत्वादिना ततः ॥ २५ ॥

मूर्तिलोकेशमन्त्रैश्च समिदाद्यैर्यथापुरम् ।
मध्याद्यग्निषु सर्वत्र हुत्वा नीत्वा दिनत्रयम् ॥ २६ ॥

चतुर्थदिवसे प्राग्वद् गायत्र्या च जयादिभिः ।
प्रायश्चित्तं च कृत्वा तु कर्म चापरिषेचनात् ॥ २७ ॥

गणचण्डं समाराध्य वह्नीन् संहृत्य चात्मनि ।
उद्वास्य कुम्भलोकेशद्वारपांस्तोरणध्वजान् ॥ २८ ॥

गणेशं स्नपनेनेष्ट्वा दक्षिणाद्यं प्रदाय तु ।
बलिं विकीर्य रात्रौ तु यथाविभवमर्चनम् ॥ २९ ॥

नित्यपूजां च संकल्प्य कर्ताभीष्टं समश्नुते ।

गणेशप्रतिष्ठाधिकारः ।

---

नित्योत्सवे गणेशस्य द्वाःस्थाः कुण्डोदरादयः ॥ १० ॥
लोकेशा वाहनं चाखुर्मातरश्च स्वदिग्गताः ।
भृङ्गीशः पश्चिमे वायौ तारो नागे तु चण्डिका ॥ ११ ॥
भल्लाटे तु गुहः सोमे श्रीदेव्यैशेऽङ्कुशी स्मृतः ।
गणचण्डश्च तत्रैतान् संपूज्य विकिरेद् बलिम् ॥ १२ ॥
गोपुरद्वार्यथश्चण्डप्रचण्डौ दक्षिणोत्तरे ।
गङ्गा च यमुना चोर्ध्वे द्वारश्रीर्मध्यगोपरि ॥ १३ ॥
ता एता देवताः पूज्या बलिं चासां विनिक्षिपेत् ।
ततस्तु मध्यहारायामष्टदिक्षु गणेश्वराः ॥ १४ ॥
वज्रदन्तो गजास्यश्च भीमश्च महिषाननः ।
मेघनादो विरूपाक्षो विकटो बहुभक्ष्यभुक् ॥ १५ ॥
एते कोष्ठगणाधीशाः संपूज्यैषां बलिं क्षिपेत् ।

अथ बलिपीठे

प्रागादि गजवक्त्रश्च विघ्नेशगणनायकौ ॥ १६ ॥
चण्डविक्रमकृद् विघ्नकरो भुजगमेखलः ।
शूर्पकर्णो नागदन्तो रुद्रवक्त्रो(द्)भवस्ततः ॥ १७ ॥
गणसेनश्च दशमस्तेषां पीठे बलिं क्षिपेत् ।

ओं नमः सर्वविघ्नपार्षदेभ्यस्तत्पार्षदेभ्यो नमः इति मध्येऽन्नमशेषं जलपुष्पान्वितं पीठोपरि प्रक्षिपेत् ।

नित्योत्सवविधिस्तुल्यस्तुल्यश्चैष महोत्सवे ॥ १८ ॥
विशेषस्तु ध्वजे पूज्यो मूषिकः स्यात् स्वमन्त्रतः ।

ओं मूं मूषिकाय नमः इति ।

यथापूर्वं गणान् सर्वानावाह्य विकिरेद् बलिम् ॥ १९ ॥
गणेशपरिषन्नाम्ना तदा पारिषदान्तकम् ।
वज्रदन्तादिकानां च बाह्ये दशदिशास्वपि ॥ २० ॥

ऐरावतं पुण्डरीकं कुमुदाञ्जनवामनान्।
पुष्पदन्तं सार्वभौमं सुप्रतीकं च दिक्कुमात् ॥ ४१ ॥
तारादिभिर्नमोन्तैश्च नामभिः प्राग्वदर्चयेत्।
ऐन्द्यां दिशि गणा ये तु वज्रहस्ता महाबलाः ॥ ४२ ॥
इत्यादिभिः क्रमान्मन्त्रैर्विघ्नपारिषदान्तकैः।
नमोन्तैर्विकिरेद् रात्रौ भूतक्रूरेण वै बलिम् ॥ ४३ ॥
तीर्थस्नानं यथापूर्वं कारयेत् स्नपनं तथा।
मन्त्रास्तु स्नपने शैवकथिताः स्वाङ्गमूलतः ॥ ४४ ॥
गायत्र्या च गणानांत्वेत्यादिना मध्यकुम्भतः।
अभिषिञ्चेद् गणाधीशमुपचारैर्यथोदितैः ॥ ४५ ॥
लभन्ते पूर्वकथितं यजमानादयः फलम्।
एवं समासेन गणेशतन्त्रं तन्त्रान्तरोक्तं प्रविचार्य सम्यक्।
प्रोक्तं प्रतिष्ठादिकमुत्सवान्तं शैवानुसारेण तु तद्विधेयम् ॥ ४६ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे क्रियापादे
गणेशतन्त्रपटलो द्विपञ्चाशः ॥

---

## अथ त्रिपञ्चाशः पटलः।

अथ स्कन्दप्रतिष्ठादौ कर्म शैवसमं स्मृतम्।
विशेषाश्चापि ये तत्र लिख्यन्ते तन्त्रचोदिताः[1] ॥ १ ॥
कनिष्ठदशतालेन स्कन्दस्य प्रतिमा स्मृता।
प्राग्वच्चित्रादिभेदेन शैली लोहमयी तथा ॥ २ ॥
मृन्मयी रत्नजा तस्य स्थितासीना तथा भवेत्।
मयूरवाहना वा स्यात् षण्मुखी षण्मुखस्य तु ॥ ३ ॥
सनत्कुमारस्कन्दादीनेकवक्त्रांस्तु कारयेत्।
चतुर्भुजान् वा द्विभुजान् त्रिनेत्रानेव कारयेत् ॥ ४ ॥
षण्मुखो द्वादशभुजो द्वादशाक्षः स्वलङ्कृतः।
षड्भुजो वा चतुर्हस्तो मयूरस्थः स्थितोऽथवा ॥ ५ ॥

---

1. 'त्र' ख. पाठः

अभयं शक्तिशूलेषुकुलिशं चाङ्कुशं करैः ।
दक्षिणे धारयंस्तद्वत् कटिस्पर्शिवरप्रदम् ॥ ६ ॥
दण्डं च तोमरं चापं घण्टां पाशं च वामतः ।
अधोहस्तात् प्रभृत्यूर्ध्वं स्याद् द्वादशभुजो विभुः ॥ ७ ॥
अभयं पङ्कजं शक्तिं दक्षिणे वरतोमरे ।
कुलिशं षड्भुजो बिभ्रत् कर्तव्यः षण्मुखो विभुः ॥ ८ ॥
दक्षिणे पङ्कजं शक्तिं मातुलुङ्गं च वामतः ।
पाशं च बिभ्रत् षड्वक्त्रस्त्वेकास्यो वा चतुर्भुजः ॥ ९ ॥
द्विभुजश्चेद् गुहः शक्तिकटिस्थवरदान्वितः ।
शक्तिवज्रधरो वा स्याद् दण्डशक्तिधरोऽथवा ॥ १० ॥
प्रसन्नवदना रक्ता रक्ताकल्पविभूषिताः ।
मौलिकुण्डलहाराद्यैर्युक्ताः स्युः स्कन्दमूर्तयः ॥ ११ ॥
एका मूर्तिस्त्वेकबेरे प्रतिष्ठाप्या भवेद् यदा ।
बहुबेरे प्रतिष्ठाप्याः षड् वा द्वादश मूर्तयः ॥ १२ ॥
वरदश्च यशोदश्च पुष्टिदः श्रीप्रदः क्रमात् ।
प्रागादि तोरणानि स्युर्कोकेशाङ्किता ध्वजाः ॥ १३ ॥
वीरसेनमहासेनौ भद्रसेनसुषेणकौ ।
चारुसेनश्च सेनानीः पूर्णसेनस्ततः परम् ॥ १४ ॥
चित्रसेनश्च कुम्भस्था द्वौ द्वौ द्वाःस्थास्तु पूर्वतः ।
प्रतिद्वारं लाजकुम्भौ बीजाङ्कुरघटावपि ॥ १५ ॥
निधाय विकिरक्षेपात् कुम्भाग्रे पूजयेदपि ।
दूर्वाकुशाग्रमाषाश्च व्रीहयस्तण्डुलास्तिलाः ॥ १६ ॥
सिद्धार्थास्तुलसी चेति स्कन्दस्य विकिराः स्मृताः ।
कुम्भे स्कन्दं मयूरस्थं कुक्कुटेऽस्त्रं च वर्धनीम् ॥ १७ ॥
इष्ट्वा प्राग्वत् परिभ्रम्य प्राग्वत् स्वीकृत्य मण्डपम् ।
विशोध्य स्वाकरं नेत्रमोक्षं तोयाधिवासनम् ॥ १८ ॥
ग्रामभ्रमं च स्नपनं शयनं च विधाय तु ।
वेद्यां कुमारकुम्भाग्रे मूर्तिकुम्भांश्च षण् न्यसेत् ॥ १९ ॥

निद्राकुम्भं चोपधाने संपूज्याथाधिवासयेत् ।
आत्मादितत्त्वभागेषु ब्रह्मादींस्त्रिगुणान्वितान् ॥ २० ॥
क्ष्माद्याः पञ्चाप्यहङ्कारो मूर्तयः षड् गुहस्य तु ।
सनत्कुमारः स्कन्दश्च विशाखः षण्मुखस्तथा ॥ २१ ॥
नैगमेषो हेमचूडः षडेते मूर्तिपाः स्मृताः ।
देवसेना देवयानी षष्ठी विद्या च कुक्कुटा ॥ २२ ॥
विजया चेति मूर्तीनां शक्तयः षड् यथाक्रमात् ।
मूर्तिमूर्तीशशक्तीस्तु त्रिभागेष्वपि विन्यसेत् ॥ २३ ॥
मध्ये च षट्सु कुण्डेषु गुरुर्मूर्तिधरास्तथा ।
मूलाङ्गमूर्तिमन्त्रैश्च जुहुयुः शक्तिभिस्ततः ॥ २४ ॥
पकं तु स्कन्दगायत्र्या मूलाङ्गैश्च शतं पृथक् ।
मन्त्रोद्धारे पूर्वमेव मूलमन्त्रः प्रदर्शितः ॥ २५ ॥
अङ्गानि चापि तेनैव गायत्री कथ्यतेऽधुना ।
महासेनश्चतुर्थ्यन्तो विद्महेतिपदं ततः ॥ २६ ॥
शक्तिहस्तश्चतुर्थ्यन्तो धीमहीति च तत्पदम् ।
नः स्कन्दश्च प्रकारान्ते चोदयात् तारपूर्विका ॥ २७ ॥
शक्तिभिर्मूर्तिभिश्चापि ततो द्वादशमूर्तिभिः ।
बाणः शाखो भद्रसेनः सेनानीश्च भवात्मजः ॥ २८ ॥
सुब्रह्मण्यः कार्त्तिकेयो गुहो वै कुक्कुटध्वजः ।
मयूरवाहनश्चैव गाङ्गेयश्च ततः परम् ॥ २९ ॥
देवसेनापतिश्चेति प्रोक्ता द्वादश मूर्तयः ।
तारादिभिस्तु स्वाख्याभिस्तन्मन्त्राः स्युर्नमोन्तकाः ॥ ३० ॥
स्वाहान्तैरेव जुहुयाच्चतुर्थ्यन्तं तु सर्वदा ।
मायूरखादिराश्वत्थप्लाक्षौदुम्बररौहिणाः ॥ ३१ ॥
समिधः स्युः षडमीनां पलाशा मध्यमे स्मृताः ।
आज्यं चरुं यवान् व्रीहीँल्लाँजसिद्धार्थसर्षपान् ॥ ३२ ॥
मायूरसमिधश्चापि सर्वत्र जुहुयुः क्रमात् ।
होमसम्पातिताज्येन शान्तिकुम्भाम्भसा तथा ॥ ३३ ॥

सिञ्चेयुः स्कन्दगायत्र्या भागेषु गुरुमूर्तिपाः ।
बाह्येऽथ मण्डपाद् दिक्षु मन्त्रैर्लोकेशदैवतैः ॥ ३४ ॥

समिदाज्यतिलाल्लाँजांश्चरुं च जुहुयुः पृथक् ।
नैर्ऋत्यां चापि वायव्यां बिल्वकाश्मरिसम्भवाः ॥ ३५ ॥

समिधो जुहुयात्स्वाहान्तं चाष्टोत्तरं शतम् ।
बेरस्य वामतः पीठे क्रियाशक्तिं निधाय तु ॥ ३६ ॥

अधिवास्य ततः प्रातः कृतनित्यक्रियो गुरुः ।
गर्भागारं प्रविश्याथ लग्ने कूर्मशिलां न्यसेत् ॥ ३७ ॥

तत्रेष्टाधारशक्तिं तु रत्नाद्यं वर्गपञ्चकम् ।
तस्यां विन्यस्य गर्तेषु मध्ये प्रागादिदिक्ष्वपि ॥ ३८ ॥

हैमं गजं मयूरं च शक्तिं वज्रं च कुक्कुटम् ।
पद्मं रसं च माणिक्यं मध्याद् बाह्ये क्रमान्न्यसेत् ॥ ३९ ॥

ऊर्ध्वे तस्यास्तथा पीठे क्रियाशक्तिं च विन्यसेत् ।
युवं वस्त्रादिनाच्छाद्य बहिर्निर्गत्य देशिकः ॥ ४० ॥

बेरं प्रवेश्य लग्ने तु गुरुर्मूर्तिधरैर्युतः ।
ध्रुवाद्यौरादिना पीठे प्रतिष्ठाप्य स्थिरं यथा ॥ ४१ ॥

ज्ञानशक्त्यात्मकं ध्यात्वा मूर्तिं विन्यस्य षण्मुखीम् ।
तस्यामावाहयेद् देवं मन्त्रैरेभिरनुक्रमात् ॥ ४२ ॥

ओं

आयाहि स्कन्द! भद्रं ते कुमार! शिवसम्भव! ।
मयूरवाहन! विभो! इह वारणवाहन! ॥ ४३ ॥

सुब्रह्मण्य! नमस्तेऽस्तु कार्त्तिकेय! सुरेश्वर! ।
देवसेनापते! देव! असुरेन्द्रविमर्दन! ॥ ४४ ॥

शक्तिवज्रायुधधर! धृतदण्डवराङ्कुश! ।
सचक्रतोमर! विभो! असुरेन्द्रविमर्दन! ॥ ४५ ॥

आवाहयामि त्वां देवेत्यन्ते मूलाङ्गसंयुतम् ।
उच्चार्य स्वहृदम्भोजात् परं तेजो गुहात्मकम् ॥ ४६ ॥

नीत्वा व्योमाब्जमध्यस्थतेजसैक्यं ततोऽपि च ।
गृहीत्वा निष्कलान्तं तु मूलं हंसं च कीर्तयेत् ॥ ४७ ॥
आनीय नाडीमार्गेण मूर्तौ हृत्पङ्कजे न्यसेत् ।
व्योमाम्बुजं सुधाम्भोभिराप्लाव्याथ सचेतनाम् ॥ ४८ ॥
मूर्तिं ध्यात्वा हृदब्जेऽस्य मन्त्राध्वानं तु विन्यसेत् ।
मूलाङ्गानि च गायत्री मूर्तिमन्त्राश्च स स्मृतः ॥ ४९ ॥
पदानि स्कन्दगायत्र्याः पदाध्वान्ये तु पूर्ववत् ।
हृदि वक्त्रे तथा मूर्ध्नि नाभौ गुह्ये च पादयोः ॥ ५० ॥
षडध्वनो न्यसेत् सम्यग् विभाज्य तु यथाक्रमम् ।
मूर्तीशनिद्राकुम्भाद्यैः स्नपयित्वा तु पूजयेत् ॥ ५१ ॥

तद्यथा —

स्नातस्तु सकलीकृत्य विघ्नं द्वारं च पूजयेत् ।
अस्त्रं क्षिप्त्वा प्रविश्यान्तर्देहल्यां तन्निधाय च ॥ ५२ ॥
वास्तुब्रह्मासनानीष्ट्वा तूपविश्याङ्गमूर्तिभिः ।
सकलीकृत्य कृत्वार्घ्यं शुद्धीः पञ्च विधाय तु ॥ ५३ ॥
सत्रिपुण्ड्रः सतिलकः सपुष्पकृतशेखरः ।
आधारशक्त्यनन्ताद्यमयूरासनगात्रगान् ॥ ५४ ॥
धर्मादीन् सूर्यबिम्बादिमण्डलेशांश्च कादिकान् ।
केसरेषु च विद्याद्याः शक्तीर्मध्ये च पूजयेत् ॥ ५५ ॥
विद्या शान्तिः स्मृतिर्मेधा प्रज्ञा कान्तिर्द्युतिर्धृतिः ।
व्यापिनी चेति पूर्वादिक्रमाल्ललितविग्रहाः ॥ ५६ ॥
देवसेना देवयानी देव्यौ दक्षिणवामयोः ।
दाडिमीकुसुमप्रख्ये यजेद् दिव्याम्बरादिकैः ॥ ५७ ॥
आसनं स्कन्दमूर्तिं च मन्त्रदेहं ततो गुहम् ।
क्रमादावाह्य मूर्त्यङ्गैः शक्तिभिः सकलीकृतम् ॥ ५८ ॥
अर्घ्याद्यैस्तु निवेद्यान्तैरुपचारैस्तु पूजयेत् ।
पत्रेष्वावरणं स्वाङ्गैः पत्राग्रे मूर्तिमूर्तिपैः[1] ॥ ५९ ॥

---

१. 'भैमू' ख. पाठः.

पीठप्रान्ते द्वादशभिर्मूर्तिभिः स्यात् तृतीयकम् ।
द्वाःस्थैश्चतुर्थं लोकेशैः पञ्चमं तु तदायुधैः ॥ ६० ॥
षष्ठमावरणं चैव यजेत् पञ्चोपचारकम् ।
ततः स्थिरादिभिः सप्तमन्त्रैर्हुत्वा स्पृशेद् गुहम् ॥ ६१ ॥
दिनत्रयं यथापूर्वं संपूज्याग्निं जुहोति च ।
चतुर्थदिवसेऽभ्यर्च्य धूर्तसेनं तु बेरगम् ॥ ६२ ॥
प्रतिष्ठाप्यैशकोणे तु शक्तिटङ्ककरं विभुम् ।
रक्ताकल्पं रक्तवर्णं निर्माल्यैरभिपूजयेत् ॥ ६३ ॥
प्रायश्चित्तं तु मूलाङ्गमूर्तिमन्त्रैश्च शक्तिभिः ।
हुत्वा तु स्कन्दगायत्र्या तिलाज्ये जुहुयात् पृथक् ॥ ६४ ॥
सहस्रमर्धं तु शतं हुत्वा चैव जयादिभिः ।
प्रायश्चित्तं स्विष्टकृतं हुत्वाग्नीन् हृदि संहरेत् ॥ ६५ ॥
विशेषस्नपनेनाथ श्रेष्ठाद्यन्यतमेन तु ।
यथोपपत्ति स्नपयेन्मन्त्रैः शैवोदितैः क्रमात् ॥ ६६ ॥
विधाय च महापूजां दद्याद् भूतबलिं निशि ।
दक्षिणाश्च प्रदेयानि दत्त्वा शक्त्या तु पूर्ववत् ॥ ६७ ॥
नित्यपूजामविच्छिन्नां ग्रामक्षेत्रधनादिभिः ।
संकल्प्य कर्ता पूर्वोक्तं पुष्कलं लभते फलम् ॥ ६८ ॥

स्कन्दप्रतिष्ठाधिकारः ।

---

स्कन्दनित्योत्सवे द्वाःस्थौ वज्रशक्तिधरौ पुरः ।
विघ्नविश्वेश्वरौ चाथ वीरसेनसुषेणकौ ॥ ६९ ॥
वज्रसेनश्च सेनानीर्द्वाःस्थौ पूर्वादितः क्रमात् ।
स्कन्दपारिषदान्ताः स्युर्लोकेशाः स्वस्वदिग्गताः ॥ ७० ॥
मयूरं मण्डपे मातृः स्वस्थाने त्वर्गले विभुम् ।
धूर्तसेनं तथैशान्यां संपूज्यैषां बलिं हरेत् ॥ ७१ ॥
गोपुरद्वार्यभिकेतुं सूर्यकेतुं च पूजयेत् ।
ततो निष्क्रम्य बाह्ये तु बलिपीठाग्रतः स्थितः ॥ ७२ ॥

ओं

ये समस्तं जगद् व्याप्य तिष्ठन्ति बलिकाङ्क्षिणः ।
+ + + + + + सर्वे गृह्णन्तु बलिमुत्तमम् ॥ ७३ ॥
अनेन तु स्कन्दगणान् सर्वानावाहयेदपि ।
ततस्तु बाह्यहारायामुन्माथादीन् गणेश्वरान् ॥ ७४ ॥
कोटिकोटिगणाध्यक्षानिष्ट्वा तेषां बलिं क्षिपेत् ।
उन्माथश्च प्रमाथश्च सुभासो भास्वरो मणिः ॥ ७५ ॥
सुमणिश्च तथा ज्योतिर्ज्वालाजिह्वस्तथाष्टमः ।
ततस्तु दर्शमूर्तिभ्यो बलिपीठे बलिं क्षिपेत् ॥ ७६ ॥
परिघो विकटो भीम उत्क्रोशो वज्रवल्कलौ ।
दण्डहस्तौ वर्धनश्च कुमुदो नन्दनस्तथा ॥ ७७ ॥
स्कन्दसेनोऽथ दशमः पीठे पद्मस्य मध्यतः ।
नित्योत्सवे विधिश्चैष तुल्यश्च स्यान्महोत्सवे ॥ ७८ ॥
विशेषः कथ्यते तत्र मयूरं तु ध्वजे यजेत् ।

ओं मयूराय नमः । स्कन्दवाहनाय नमः ।

ततः स्कन्दगणान् सर्वान् प्राग्वदावाहयेद् गुरुः ॥ ७९ ॥

ओं

ये भूताः स्कन्दसेनाद्याः स्कन्दपारिषदेश्वराः ।
ते तृप्यन्तु मुदं यान्तु तेभ्यस्ताभ्यो नमो नमः ॥ ८० ॥
इत्यावाह्य स्कन्दगणान् प्रागाद्यष्टदिशास्वपि ।
कोटिकोटिगणेशाः स्युर्द्वात्रिंशत् स्युर्गणेश्वराः ॥ ८१ ॥
कुमुदः कुन्दरश्चाथ डम्बराडम्बरौ पुरः ।
वक्रोऽनुवक्रः सुमुखः सुव्रतो वह्निदिग्गताः ॥ ८२ ॥
सत्यसन्धः सुप्रभश्च शुभकर्मा च लाङ्गली ।
याम्येऽथ नैर्ऋते कालो बलश्चातिबलोऽलसः ॥ ८३ ॥
सुवर्चाश्चातिवर्चाश्च काञ्चनातिघनावपि ।
पश्चिमे त्वथ वायव्ये मेघमाली स्थिरस्तथा ॥ ८४ ॥
अतिस्थिरश्चोच्छ्रितश्च चतुर्थस्त्वतिविभिवः! ।
उदीच्यां मेघनादश्च संग्रहोन्माथविग्रहाः ॥ ८५ ॥

ऐशान्यां पुष्पदन्तश्च शङ्कुकर्णजयावपि ।
महाजयश्च चत्वारः कोटिकोटिगणेश्वराः ॥ ८६ ॥
एतेभ्यश्चाप्यथैतेषां परिषद्भ्यस्त्वनन्तरम् ।
स्कन्दपारिषदान्ते तु स्वाहान्तं तु बलिं क्षिपेत् ॥ ८७ ॥
उद्दिष्टदिवसान्ते तु कौतुकारम्भपूर्वकम् ।
तीर्थयात्रां च कुर्वीत यथापूर्वं निमन्त्र्य तु ॥ ८८ ॥

ओं

तीर्थयात्रा त्वया देव! श्वः कर्तव्या सुरेश्वर! ।
तत्र प्रतिसरारम्भं त्वमनुज्ञातुमर्हसि ॥ ८९ ॥
इत्यामन्त्र्य गुहं देवं शैवोत्सवविधानतः ।
तीर्थयात्रां स्वकैर्मन्त्रैः कृत्वा प्रतिनिवृत्य तु ॥ ९० ॥
अन्तः प्रवेश्य षड्वक्त्रं विशेषयजनादनु ।
निशि भूतबलिं दत्त्वा मुख्यादिस्नपनेन तु ॥ ९१ ॥
यथोपपत्त्या स्नपयेच्छैवस्नपनचोदितैः ।
मन्त्रैर्यथावद् विधिवन्महापूजां प्रवर्तयेत् ॥ ९२ ॥
पूर्वोक्तफलमाप्नोतीत्याह देवः स्वयं शिवः ।
इति प्रतिष्ठादिकमुत्सवान्तं षडास्यतन्त्रं तु यथावदुक्तम् ।
यथा बृहत्तन्त्रमुखेषु दृष्टं तदुक्तशैवानुगुणेन विद्यात् ॥ ९३ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे उपरिभागे
क्रियापादे स्कन्दतन्त्रपटलस्त्रिपञ्चाशः ॥

---

अथ चतुष्पञ्चाशः पटलः ।

हरनारायणस्याथ प्रतिष्ठाद्यं निगद्यते ।
मन्त्रश्च वान्तो बिन्द्वन्तो ब्रह्माथाग्निश्च पञ्चमात् ॥ १ ॥
अन्तो दीर्घः सदीर्घोऽग्निर्वायुस्तादिश्च दीर्घयुक् ।
नमोन्तस्तु दशार्णः स्यात् तारशक्तिरवादिकः ॥ २ ॥
त्रयोदशाक्षरो ह्यस्यच्छन्दोऽतिजगती मता ।
ऋषिर्ब्रह्मास्य दैवं तु देवो हरहरिः स्वयम् ॥ ३ ॥
दीर्घस्वरैः शक्तिबीजं नामजातियुतं च तत् ।
हृदाद्यङ्गानि षट् तेन ह्यङ्गान्तानि तु कल्पयेत् ॥ ४ ॥

तान्यङ्गुलीषु शैवोक्तक्रमाद् विन्यस्य मूलतः ।
व्यापकं च हृदादीनि स्वे स्वे स्थाने क्रमान्न्यसेत् ॥ ५ ॥
तारं च शङ्करायाथ विद्महे तदनन्तरम् ।
नारायणाय तस्यान्ते धीमहे तच्च नःपदम् ॥ ६ ॥
पुरुषश्च ततः प्रेति चोदयात्पदमन्ततः ।
हरनारायणस्यैवं गायत्री यजनोचिता ॥ ७ ॥
शक्तिश्रीकामबीजानि मूलस्यादौ नियोज्य तु ।
सर्वभूतात्मने चान्ते नमः स्याद् यजने मनुः ॥ ८ ॥
ईशादिकानि ब्रह्माणि मूर्धाद्यङ्घ्र्यन्तकं न्यसेत् ।
स्वे स्वे स्थाने हरार्धे च वासुदेवं तथान्यतः ॥ ९ ॥
सङ्कर्षणं च प्रद्युम्नमनिरुद्धं च केशवम् ।
मूर्धास्यहृत्सुगुह्याङ्घ्र्योर्हरेरर्धे न्यसेत् क्रमात् ॥ १० ॥
शैवोक्तं तु क्रियाचक्रमत्रापि प्रायशः समम् ।
विशेषः कथ्यते तत्राप्यधिवासनमण्डपम् ॥ ११ ॥
प्रागादितोरणाः पूज्याः शैववैष्णवनामभिः ।
शान्तिभूतिबलारोग्यास्तोरणे दक्षिणार्धगाः ॥ १२ ॥
सुशोभनः सुभद्रश्च सुपूर्णः पूर्ण एव च ।
तोरणानां तु वामार्धे पूजनीयाः स्वनामभिः ॥ १३ ॥
प्रतिद्वारं तु कुम्भस्थाश्चत्वारो द्वारपालकाः ।
प्राच्यां नन्दीशपूर्णौ च महाकालश्च पुष्करः ॥ १४ ॥
भृङ्गीशनन्दनौ याम्ये विघ्नेशो'नन्दनस्तथा ।
पश्चाद् वृषो वीरसेनः षण्मुखश्च सुषेणकः ॥ १५ ॥
दुर्गा च सम्भवश्चोदक् चण्डश्च प्रभवस्तथा ।
विकिरक्षेपपूर्वं तु कुम्भे हरहरिं यजेत् ॥ १६ ॥
शूलं चक्रं च वर्धन्यामिष्ट्वा स्वीकृत्य मण्डपम् ।
मध्यकुण्डानलं प्राग्वन्नवधा संविभज्य तु ॥ १७ ॥
पूर्वद्रव्यैः स्वमूलाङ्गैर्जुहुयुर्गुरुमूर्तिपाः ।
मन्त्रसन्तर्पणं कृत्वा कुर्याचाकारशोधनम् ॥ १८ ॥

नेत्रमोक्षं जलेवासं तथा ग्रामप्रदक्षिणम् ।
स्नपनं च यथा पूर्वं मण्डपे शयनं तथा ॥ १९ ॥
वेद्यां कुम्भास्त्रविद्येशसाष्टमूर्तिघटान् यजेत् ।

तद्यथा —

सानन्तां पृथिवीं सूक्ष्मयुक्ताम्भश्च शिवोत्तमम् ॥ २० ॥
साग्निं चैकाक्षवायू च ततः खं च शिखण्डिनम् ।
श्रीकण्ठं च मनोयुक्तं त्रिमूर्तिं बुद्धिसंयुतम् ॥ २१ ॥
एकरुद्रमहङ्कारयुक्तं शैवोदितक्रमात् ।
इत्थमभ्यर्च्य कुम्भांस्तु न्यसेत् तत्त्वादिकं ततः ॥ २२ ॥
आत्मादीनि त्रितत्त्वानि जानुकण्ठशिरोवधि ।
ब्रह्मादीनपि तत्त्वेशान् मूर्तीः पृथ्व्यादिका रविम् ॥ २३ ॥
सोमं च यजमानं च मनश्चाहङ्कृतिं धियम् ।
प्रकृतिं चेति भागेषु मूर्तिद्वादशकं न्यसेत् ॥ २४ ॥
शर्वादींश्चाष्टमूर्तीशान् वासुदेवादिकानपि ।
विद्येश्वरीं शिवां सूक्ष्मां शाङ्करीं हरिवल्लभाम् ॥ २५ ॥
वैष्णवीं च महालक्ष्मीं क्षमां नारायणीं तथा ।
सामान्यशक्तयो ह्येता हरनारायणस्य याः ॥ २६ ॥
वामाद्या नवशक्तीश्च विमलाद्यास्तथा न्यसेत् ।
विमलोत्कर्षणी ज्ञाना क्रिया योगा तथैव च ॥ २७ ॥
सत्या प्रृथ्वी तथेशानानुग्रहा नवमी स्मृता ।
विन्यस्यैवं तु संपूज्य ध्यात्वा तु सकलं विभुम् ॥ २८ ॥
क्रियाशक्तिं तथा पीठे विनिधायाभिपूजयेत् ।
तत्रैव धारिकाद्याश्च शक्तीरष्टौ यजेदपि ॥ २९ ॥
नवकुण्डेषु हुत्वैवं तत्त्वतत्त्वेश्वरादिभिः ।
मूलाङ्गैरपि गायत्र्या शैवोक्तेन क्रमेण तु ॥ ३० ॥
मन्त्रसन्तर्पणं कृत्वा शान्तिकुम्भेषु पातयेत् ।
आचार्यो मूर्तिपाश्चैव संस्पृशेयुः क्रमात् त्रिधा ॥ ३१ ॥
सर्वं शैवप्रतिष्ठावद् द्रव्यमन्त्रक्रियादिकम् ।
अत्रापि तुल्यमूलं स्यात्संक्षेपेण तु देशिकैः ॥ ३२ ॥

अथ लग्ने प्रविश्यान्तः प्राग्वत् कूर्मशिलां न्यसेत् ।
तस्यां च धारिणीं शक्तिं तत्त्वतत्त्वेश्वरादिभिः ॥ ३३ ॥
रत्नादिपञ्चवर्गांश्च तदूर्ध्वे तु यथापुरम् ।
विन्यस्य पीठं तत्स्थां च क्रियाशक्तिं च शक्तिभिः ॥ ३४ ॥
लग्ने देवं प्रतिष्ठाप्य ज्ञानशक्त्यात्मकं विभुम् ।
मूलेनावाह्य तन्मूर्तिं मन्त्रदेहं च भावयेत् ॥ ३५ ॥
तथैव विमलं ज्योतिस्तस्यैव हृदयाम्बुजे ।
प्रोक्तत्रिबीजपुटितं हंसं स्वहृदयाम्बुजात् ॥ ३६ ॥
नीत्वा व्योमाब्जचैतन्यं मूर्तिहृत्पङ्कजे न्यसेत् ।
ततः प्रक्षाल्य संस्नाप्य वेदिकुम्भाम्बुवारिभिः ॥ ३७ ॥
अनन्ताद्यष्टकुम्भैश्च ततो न्यस्येत् षडध्वनः ।
स्वमूलाद्यैः स्वगायत्र्या ब्रह्मभिः प्रणवादिभिः ॥ ३८ ॥
नमोभगवतेयुक्तैर्वासुदेवादिनामभिः ।
चतुर्थ्यन्तैस्तु निर्दिष्टो मन्त्राध्वाथ पदैरपि ॥ ३९ ॥
गायत्र्यास्तु पदाध्वा स्याच्छेषाध्वानो यथापुरम् ।
ततः स्थिरादिभिर्मन्त्रैर्हुत्वा स्पृष्ट्वाथ पूजयेत ॥ ४० ॥
आसनादिक्रमेणोक्तैरुपचारैर्यथाक्रमम् ।

तद्यथा —

विघ्नेश्वरं गुरुं चेष्ट्वा सकलीकृत्य विग्रहम् ॥ ४१ ॥
सामान्यार्घ्यकरो द्वारस्योर्ध्वोदुम्बरपार्श्वयोः ।
विघ्नं सरस्वतीं गङ्गां यमुनां मध्यतः श्रियम् ॥ ४२ ॥
नन्दीशं चैव चण्डं च द्वाःस्थौ द्वारोत्तरस्थितौ ।
महाकालं प्रचण्डं च यजेद् द्वारस्य दक्षिणे ॥ ४३ ॥
नाराचास्त्रं क्षिपेच्चान्तः प्रविश्यास्त्रं निधाय च ।
वास्त्वीशं वेधसं मध्ये तथानन्तासनं यजेत् ॥ ४४ ॥
पञ्चशुद्धीर्विधायाथ तिलकीपुष्पशेखरः ।
मूलाद्यैरर्घ्यमापाद्य जलक्षीरकुशाक्षतैः ॥ ४५ ॥

यवचन्दनसिद्धार्थैः पुष्पैरपि च पूजयेत् ।
तत्प्रोक्षितात्मद्रव्यादिरस्त्रप्राकाररक्षितः ॥ ४६ ॥
आधारशक्तिं कूर्मं चाप्यनन्तासनमेव च ।
धर्मादीनप्यधर्मादीन् मायां विद्यां गुणत्रयम् ॥ ४७ ॥
पैत्रादिन्यात्तसूर्यादिबिम्बाद्यष्टदलाम्बुजम् ।
द्वे द्वे केसरयोः शक्तीर्वामाद्या विमलादिकाः ॥ ४८ ॥

ओं वामाविमलाभ्यां नम इति पूर्वदलकेसरादिषु ।

पूर्वादिक्रमतो मध्ये मनोन्मन्यात्वनुग्रहात् (?) ।
तत्कर्णिकायां तन्मूर्तिं विद्यामन्त्रतनुं तथा ॥ ४९ ॥
इष्ट्वा हृदम्बुजात् प्राग्वद् ब्रह्मज्योतिः शिवात्मकम् ।
आवाहनस्थापने च सान्निध्यं सन्निपातनम् ॥ ५० ॥
प्ररोचनामृतीकारौ कुर्यादप्यवगुण्ठनम् ।
तन्मूलाङ्गैश्च गायत्र्या सकलीकृत्य तु क्रमात् ॥ ५१ ॥
ध्यायेच्चतुर्भुजं देवं हरनारायणं विभुम् ।
दक्षिणे शूलटङ्कौ च शङ्खचक्रे च वामतः ॥ ५२ ॥
बिभ्राणं वा कपालं च शूलमब्जं सुदर्शनम् ।
दक्षिणेतरयोश्चर्म वैयाघ्रं पीतमम्बरम् ॥ ५३ ॥
वसानं नैकनागार्घहारिहारविराजितम् ।
तथाहिमकराकारकुण्डलं सुन्दराननम् ॥ ५४ ॥
सकपर्दकिरीटं सचन्द्रचूडामणिं विभुम् ।
सबिल्वदलनीलाब्जसरोजतुलसीस्रजम् ॥ ५५ ॥
नानाभुजङ्गरत्नाढ्यमुद्रिकाकङ्कणाङ्गदम् ।
अर्धनीलगलोल्लासिनैकाहिमणिभूषणम् ॥ ५६ ॥
साहिहेमोदराबद्धकटिसूत्राङ्घ्रिभूषणम् ।
भस्माङ्गरागोल्लसितं हरिचन्दनचर्चितम् ॥ ५७ ॥
रौद्ररम्याकृतिं सर्वशोभातेजोनिधिं विभुम् ।
दक्षिणेतरपार्श्वस्थपार्वतीश्रीविराजितम् ॥ ५८ ॥

---

१. 'पा' क. पाठः.

एवंरूपं हरहरिमुपचारैर्यजेत् क्रमात् ।
अङ्गैश्च शक्तिभिश्चाष्टमूर्तीशैर्द्वारपालकैः ॥ ५९ ॥
प्रागुक्तैरथ लोकेशैरिष्ट्वावरणपञ्चकम् ।
संपूज्यैवं हरहरिं हुत्वा च समिदादिभिः ॥ ६० ॥
जुहुयुश्च द्वितीयेऽह्नि तृतीये त्र्यम्बकेन च ।
विष्णोर्नुकादिना चापि मूलाङ्गाद्यैर्यथाक्रमम् ॥ ६१ ॥
प्रायश्चित्तं चतुर्थेऽह्नि हुत्वाघोरास्त्रमन्त्रतः ।
सुदर्शनेन पालाशसमिदाज्यैर्यथाक्रमम् ॥ ६२ ॥
चण्डसेनं यथापूर्वं समाराध्य जयादिभिः ।
प्रायश्चित्तैस्तथा हुत्वा पूर्णां स्विष्टकृतं तथा ॥ ६३ ॥
अग्नीनात्महृदम्भोजे समारोप्य विसृज्य तु ।
तोरणध्वजलोकेशद्वारकुम्भस्थदेवताः ॥ ६४ ॥
ततस्त्वष्टोत्तरशतैः कलशैः स्नपयेदपि ।
संपूज्य सविशेषं तु दक्षिणाद्यं प्रदाय तु ॥ ६५ ॥
रात्रौ भूतबलिं दत्त्वा नित्यपूजादिसिद्धये ।
सङ्कल्प्य विभवं भक्त्या यथेष्टं लभते फलम् ॥ ६६ ॥

शङ्करनारायणप्रतिष्ठाधिकारः ।

---

नित्योत्सवे तु प्राग्द्वारे नन्दीशश्चण्ड एव च ।
महाकालः प्रचण्डश्च भृङ्गी विघ्नश्च दक्षिणे ॥ ६७ ॥
पश्चिमे वृषभानन्तौ चण्डसेनावथोत्तरे(?) ।
स्वाशासु लोकपालेभ्यः स्वैः स्वैर्मन्त्रैर्बलिं क्षिपेत् ॥ ६८ ॥

तत्रायं विशेषः— इन्द्राय सुराधिपतये सायुधसवाहनपरिवाराय शङ्करनारायणपार्षदे नमः । तत्पार्षदेभ्यो नमः । इति दिक्षु सर्वत्र शङ्करनारायणपार्षदद्वययुक्तैरेव मन्त्रैर्बलिं विकिरेन्नित्योत्सवे । महोत्सवे 'तु दैत्यदर्पविनाशाय'त्यादिभिश्च 'ये भूताः पुरस्सद' इत्यादिभिश्च शैवमहोत्सवोदितैः 'शङ्करनारायणस्य भगवत' इत्यादिभिस्तत्र बलिं क्षिपेत् ।

इष्ट्वा वृषार्कगरुडं मण्डपस्थं बलिं क्षिपेत् ।
गणेशं वीरभद्रं च मातॄः शास्तारमेव च ॥ ६९ ॥

दुर्गां च सोमं स्वाशासु चण्डसेनं च पूजयेत् ।
सशूलचक्रवरदाभीतिमिष्ट्वा बलिं क्षिपेत् ॥ ७० ॥
मृगास्यं पाञ्चजन्यं च तीक्ष्णनेत्रं सुदर्शनम् ।
चतुरो गोपुरद्वारि संपूज्यैषां बलिं क्षिपेत् ॥ ७१ ॥
बलिपीठात् स्थितः प्राच्यामनेनावाहयेद् गणान् ।

ओं

आयान्तु पार्षदाः सर्वे शाङ्करा वैष्णवाश्च ये ॥ ७२ ॥
स्थिताः सर्वे जगद् व्याप्य गृह्णन्तु बलिमुत्तमम् ।
ततस्तु नन्दीशादिभ्यः कुमुदादिभ्य एव च ॥ ७३ ॥
द्वयोर्द्वयोः प्रतिदिशं मण्डलेषु बलिं क्षिपेत् ।

तद्यथा —

नन्दीशश्च महाकालो भूतनाथो महीधरः ॥ ७४ ॥
पर्वतेशो गुहेशश्च कालपाशकपालिनौ ।
कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः ॥ ७५ ॥
शङ्कुकर्णः शङ्कुनेत्रः सुमुखः सुप्रतिष्ठितः ।

ओं नन्दीशकुमुदाभ्यां शङ्करनारायणपार्षदाभ्यां नम इति पूर्वस्याम् । इत्याग्नेयादिदिक्ष्वपि बलिं विकिरेत् ।

ततस्तु बलिपीठे तु भूतिदादिभ्य एव च ॥ ७६ ॥
शङ्खिने चाक्रिणे चापि गदिने शार्ङ्गिणे तथा ।
पद्मिनेऽथो मुसलिने पाशिनेऽङ्कुशिने तथा ॥ ७७ ॥
कुमुदोर्ध्वे नन्दकिने नमोहरिहरादिकम् ।
सेनायेति च पीठाब्जकर्णिकायां बलिं क्षिपेत ॥ ७८ ॥
अत्रापि पूर्ववद् दिक्षु द्वाभ्यां द्वाभ्यां बलिं क्षिपेत् ।

ओं भूतिदचक्रिभ्यां शङ्करनारायणपार्षदाभ्यां नम इत्यादिद्वन्द्वशब्दः ।

नित्योत्सवविधिस्त्वेष तुल्यश्चापि महोत्सवे ॥ ७९ ॥
विशेषः कथ्यते लेख्यो वृषार्षगरुडः पटे ।
पूज्यश्च स्यात् स्वनाम्नैव बलिं च विकिरेत् ततः ॥ ८० ॥
मन्त्रैस्तृतीयद्वारायां विविधानां स्वनामभिः ।
भूतेशानां शाङ्कराणां वैष्णवानां च दिक्क्रमात् ॥ ८१ ॥

शैवा विंशतिसङ्ख्याः स्युः पञ्चाशद् दिक्षु वैष्णवाः ।

तद्यथा —

महाकालो विधाता च वज्रपाणिः क्रतु(ः?) प्रभुः ॥ ८२ ॥

दक्षः शतक्रतुस्तद्वदप्रमेयोऽथ वीर्यवान् ।
नित्यो विद्युत्प्रभश्चैव शूलहस्तस्त्रिलोचनः ॥ ८३ ॥

स्वाङ्गदीपस्तमोघ्नश्च सृष्टिकृच्चोरुविक्रमः ।
मान्धाता च महावीर्यो नित्ययोगः प्रसादनः ॥ ८४ ॥

उत्कूटः प्रकटश्चैव उन्मुखो द्विमुखो हरिः ।
अश्वग्रीवोऽश्ववदनो ह्यश्वजिह्वोऽश्वलोचनः ॥ ८५ ॥

केशवो वामनश्चैव नरो नारक एव च ।
मन्दरो मन्दहष्टिश्च कन्दः कन्दुकलोचनः ॥ ८६ ॥

पटहाक्षो विशालाक्षः क्षामकः क्षमकस्तथा ।
पाण्डरः पाण्डुपृष्ठश्च दुर्दिनः सुदिनस्तथा ॥ ८७ ॥

वामदेवो महादेवो मोहनो मधुसूदनः ।
कलनः कालनश्चैव भावनो भगवान् भवः ॥ ८८ ॥

हनूमान् भागधेयश्च भास्करो भासुरस्तथा ।
विश्वेशो विश्वसेनश्च विष्वक्सेनो विसारणः ॥ ८९ ॥

विस्तारो विस्तरश्चैव विदण्डी दण्ड एव च ।
कामुकोऽकामुकश्चैव कामहृत् कामनाशनः ॥ ९० ॥

सप्ततिस्तु गणाः प्राच्यां हरनारायणस्य तु ।
अग्निरग्निसमानश्च ज्वालामाली च विश्वभुक् ॥ ९१ ॥

हुताशो मूर्तिमान् व्यापी कपिलो रक्तलोचनः ।
उग्रो रक्तवपुर्धूम्रः सप्तार्चिर्विश्वभेषजः ॥ ९२ ॥

सुतपा वेगवांश्चाथ भस्मच्छन्नो मरुत्सखः ।
योगप्रियो दारुजश्चाप्यप्रमेयो निधनस्तथा ॥ ९३ ॥

अग्निजिह्वो हुताशश्चाप्यग्निरूपोऽग्निकेतनः ।
अग्निवर्णोऽग्निरग्न्यास्यो महासेनो महोदरः ॥ ९४ ॥

महानासः करालश्च कालजिह्वो विवर्तकः ।
मण्डूर्मण्डूककाकास्यौ देवो देवलकस्तथा ॥ ९५ ॥
शमकश्चमकश्चैव शङ्कुः शङ्कुश्रवास्तथा ।
मारीचो द्रोणमारीचो महिषो भीषणस्तथा ॥ ९६ ॥
कुम्भनासो विनासश्च कुम्भकर्णोऽथ कुम्भकः ।
विसरी विक्रमी चैव मत्सरी मस्करस्तथा ॥ ९७ ॥
सूकरः सूकरास्यश्च शशः शशमुखस्तथा ।
सिंहः सिंहमुखश्चैव नारसिंहो नरस्तथा ॥ ९८ ॥
कालहृत् कालसूत्रश्च सूत्रकः सूत एव च ।
विनाली नालकर्णश्चेत्याग्नेय्यां दिशि सप्ततिः ॥ ९९ ॥
यमो वैवस्वतो धाता दैत्यघाती प्रजान्तकः ।
मृत्युः प्रेताधिपो धर्मः कृष्णः कृष्णाक्ष एव च ॥ १०० ॥
नित्ययोगी च कालश्च आशुकारी परेतपः ।
मायारूपी कृतान्तश्च सत्यः सत्यप्रियः सुहृत् ॥ १०१ ॥
पितृनाथश्च कीनाशो धर्मो धर्मरतस्तथा ।
धर्म्यश्च धर्मजश्चापि धन्वी च प्रश्रयो नयः ॥ १०२ ॥
कुणकः कुणिवाहश्च निःश्रेयो नीरिणोऽलसः ।
निष्कोपो निरनुक्रोशः कुब्जः पांसुविमर्दनः ॥ १०३ ॥
आहो उताहो आहुश्च निर्मलो निवहो वहः ।
एकलव्यश्च पलल ऊहुः संरक्षणस्तथा ॥ १०४ ॥
शङ्खी चक्री च धन्वी च कङ्कटः कटुको विटः ।
वसुदेवः सुभद्रश्च शार्ङ्गी शार्ङ्गधरस्तथा ॥ १०५ ॥
चित्राङ्गदश्चित्ररथः केतुमान् केतुदः क्षमी ।
वल्कको वल्कीहस्तो द्विरदो विग्रहोऽम्बरः ॥ १०६ ॥
मार्जम्बो दुन्दुभिः श्वेतश्चैते याम्यां दिशि स्थिताः ।
राक्षसश्चासुरः क्रव्याद् वीरहा निर्ऋतिस्तथा ॥ १०७ ॥
तीक्ष्णनेत्रो यातुधानो यज्ञहन्ता निशाचरः ।
महामूर्तिः कैकसेयः क्रूरः क्रूरवपुस्तथा ॥ १०८ ॥

---

१. 'ह्रो' क. पाठ.

दक्षः कोणपको धूम्रो धूम्राक्षो भीषणस्तथा ।
विरूपाक्षोऽथ भस्माङ्गः सुकृतिर्विकृतिस्तथा ॥ १०९ ॥
दारुणो दमनश्चैव नैर्ऋतिः प्रकृतिस्ततः ।
मांसपो मांसकश्चैव राक्षसो रक्षकस्तथा ॥ ११० ॥
प्रलम्बो लम्बकश्चैव निष्ठुरः खरभाषणः ।
वीरसेनोऽक्षराशश्च प्राणदः प्रणवस्तथा ॥ १११ ॥
कामदश्च विभाषी च रक्ताक्षो लोहिताक्षकः ।
विद्युत्केशो विशालाक्षो रक्तजिह्वो विजिह्वकः ॥ ११२ ॥
अक्षरः प्रक्षरश्चैव वीक्षको निरहङ्कृतः ।
सर्वगः सर्वविद् गौरः कामरूपी विरूपवान् ॥ ११३ ॥
वैकर्तनो विकर्ता च संप्लवः सम्भवस्तथा ।
विमदो मदनश्चैव वारुणो वसुरेव च ॥ ११४ ॥
नन्दकी नन्दकश्चैव कपर्दिवृषभावपि ।
शोणः पिनाकी वरुण इत्येते नैर्ऋते स्थिताः ॥ ११५ ॥
वरुणः शबलोऽम्भोधिः प्रचेता निम्नगापतिः ।
यादोनाथः पाशपाणिरानन्दोऽम्बुपतिः शिवः ॥ ११६ ॥
कपर्दी प्राणदः श्वेतः श्यामनेत्रः सनातनः ।
प्रत्यङ्निवासो जलदो जीवनो नक्रवाहनः ॥ ११७ ॥
पयोधिनिलयश्चैव दारुणो वारणस्तथा ।
क्षेपणः क्षोभणश्चैव पाशी पाशधरो गुरुः ॥ ११८ ॥
सन्नाहो नाहनो हंसो नारदः पर्वतो रविः ।
भानुमान् वसुमान् भद्रो वैकुण्ठः परमः परः ॥ ११९ ॥
महाकर्णो विकर्णश्च विद्रवः प्रद्रवस्तथा ।
वानरस्तारकश्चैव शशकः शाकलः शलः ॥ १२० ॥
चक्रभृच्छत्रभृद् वज्री कर्णी कर्णस्तथांशुमान् ।
कुररः कुरवश्चैव वज्रनाभो विनायकः ॥ १२१ ॥

---

१. 'चः' ख. पाठः.

दुर्गन्धः पूतिगन्धश्च दक्षिणोऽदक्षिणः सुहृत् ।
विरोधो रोधनो रोधस्ताक्ष्यों गरुड एव च ॥ १२२ ॥
अङ्गदी कङ्कणी चेति वारुण्यां गणसप्ततिः ।
वायुर्गन्धवहः सूक्ष्मः स्पर्शनश्च प्रभञ्जनः ॥ १२३ ॥
प्राणोऽपानस्तथा व्यान उदानश्च समानकः ।
नागः कूर्मोऽथ कृकरो देवदत्तो धनञ्जयः ॥ १२४ ॥
ध्वजपाणिश्च पवनः श्वसनो मारुतोऽनिलः ।
विद्वान् मरुन्मारुतश्च वातो वह्निसखो हरिः ॥ १२५ ॥
अलर्को वर्तकः कङ्को मार्गणः प्राङ्कणो बलः ।
अबलो बलधिर्वीरो द्विधीरो रोधकोऽपि च ॥ १२६ ॥
सविधिः सुविधिश्चैव सङ्गरो विकटस्तथा ।
माली मानी सुधीश्चैव समर्थः साहसो धरः ॥ १२७ ॥
कुकुटः कुटकश्चैव गन्धो गन्धवहस्तथा ।
सक्तगोऽसक्तगो रागी सेचनोऽसेचनः स्वनः[1] ॥ १२८ ॥
औषधं भेषजं जीवो रोगी रोगो भगः सुखी ।
कारणं करणं कर्ता पराधीनो बलोऽबलः ॥ १२९ ॥
इत्येते सप्ततिगणा वायव्यां दिशिसंस्थिताः ।
यक्षेशो रयिमान् सोमो माणिभद्रोऽथ गुह्यकः ॥ १३० ॥
चेली[2] माली कुबेरश्च जम्भलः शिविकुण्डली ।
किन्नरेशश्चैलबिलिर्धनदश्च धनाधिपः ॥ १३१ ॥
राजराजस्तथा श्रीदो ज्येष्ठो मालाधरो धनी ।
उत्तराशानिवासश्च ततः स्यादेककुण्डलः ॥ १३२ ॥
सोमः सोमकलः सौम्यः सोमवित् सोमवर्धनः ।
सुधासुधाता भञ्जीरः सुराष्ट्रः काष्ठालिः कलिः ॥ १३३ ॥
कालवान् कालचक्रश्च कालकूटं विषज्वरः ।
अमृतं चामृतेशोऽम्भः केयूरी केवली वली ॥ १३४ ॥

---

१. 'गः सेचनस्वनः', २. 'ऌ' ख. पाठः.

विष्णुः कृष्णः पिशङ्गी च रेखा लेखेश्वरः परः ।
नलकः शुनकः क्राथः श्येनः श्येनमुखोऽरुणः ॥ १३५ ॥
मार्जारो वल्गुमाक्षी च गुल्मः कणवकः कणः ।
शेबो विशेषो विश्लेषः कर्दमः पूतिविग्रहः ॥ १३६ ॥
साम्बः संवत्सरः शम्भुर्वेगी वेगधरोऽमरः ।
उत्तराशास्थिता ह्येते गणा हरहरौ स्मृताः ॥ १३७ ॥
ईशान ईश्वरः शम्भुः शूलहस्तस्त्रिलोचनः ।
अनादिनिधनो धाता कपिलः पिङ्गलोचनः ॥ १३८ ॥
रुद्रो रुद्रगणाधीशो विश्वो[1] भर्ता दिगम्बरः ।
नीलग्रीवः कपर्दी च वृषवाहो वृषध्वजः ॥ १३९ ॥
हरः शर्वो विश्वभुज ईशो व्यापी त्रिशूलधृक् ।
वीरो भर्गो वशी शम्भुर्विवासा व्यसनो बुधः ॥ १४० ॥
वृक्षः क्षमा क्षान्तिपरः शकुनिः शकुनो वटः ।
ब्रह्मण्यो ब्रह्मविद् ब्रह्मो मारीचो हरिपिङ्गलः ॥ १४१ ॥
वेदी वेदविदुद्गन्धो ब्रह्मी च ब्रह्मसाधनः ।
धीमान् सुदृष्टिरष्टात्मा शङ्करः शाङ्करस्तथा ॥ १४२ ॥
विनेता विकचो वादी शिष्टात्मा शिष्टकर्मकृत् ।
एकदृक् सर्वभुक् सर्वो विनोदी दीपकम्पकः ॥ १४३ ॥
गोविन्दो गोपतिर्गोप्ता सर्वभागी सनातनः ।
दण्डी मुण्डी शिखण्डी चेत्यैशान्यां सप्ततिर्गणाः ॥ १४४ ॥
एवमेषां बलिं क्षिप्त्वा बलिपीठे बलिं क्षिपेत् ।
ततो देवं प्रवेश्यान्तः स्नात्वा प्राग्वद् यजेदपि ॥ १४५ ॥
उत्सवान्ते यथापूर्वं मुख्यस्नानं विधाय तु ।
अवरोप्य ध्वजं प्राग्वद् गणान् सर्वान् विसृज्य च ॥ १४६ ॥
यथोपपत्त्या स्नपयेत् सविशेषं च पूजयेत् ।
दत्त्वा च देशिकादिभ्यो दक्षिणास्तदनन्तरम् ॥ १४७ ॥
प्रदेयानि यथायोग्यमर्थिभ्यः प्रतिपादयेत् ।

1. 'श्व' क. पाठः.

बृहति महति तन्त्रे यच्च देवोद्भवाख्ये
निगदितमवलोक्य स्थापनाद्युत्सवान्तम् ।
इति हरहरितन्त्रं सम्यगुक्तं समासात्
तदिह सकलमूह्यं कर्म शैवानुसारात् ॥ १४८२ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे
उपरिभागे क्रियापादे शङ्करनारायणतन्त्र-
पटलः चतुष्पञ्चाशः ॥

---

अथ पञ्चपञ्चाशः पटलः ।

अथ दुर्गाप्रतिष्ठाद्यं कथ्यते तन्त्रचोदितम् ।
शैवोदितक्रियाचक्रं प्रायस्तुल्यमिहापि हि ॥ १ ॥
दुर्गामूलाङ्गमन्त्रादेरुद्धारोऽपि च कथ्यते ।
तारं च शक्तिबीजं च पञ्चमस्य तृतीयकम् ॥ २ ॥
पञ्चमस्वरयुग् दण्डी ततस्तद्बिन्दुवर्जितम् ।
सान्तं लिपिसदीर्घं च द्वादशस्वरवान् मरुत् ॥ ३ ॥
नमश्च शक्तिबीजं च दुर्गामन्त्रो नवाक्षरः ।
दीर्घैः स्वरैर्युतो नादः साग्निर्युक्तो हृदादिभिः ॥ ४ ॥
चतुर्थ्या जातियुक्तानि षडङ्गान्यस्त्रमन्त्रतः ।
तद्गायत्री तु पूजायां शक्तितारद्वयादिका ॥ ५ ॥
तारं कात्यायनीशब्दश्चतुर्थ्यन्तश्च विद्महे ।
कन्याकुमार्यैशब्दान्ते धीमहीति पदं भवेत् ॥ ६ ॥
तन्नःपदद्वयान्ते स्याद् दुर्गा प्रेति च चोदयात् ।
एषा हि दुर्गागायत्री पूजयेदनया शिवाम् ॥ ७ ॥
जातवेदस इत्याद्या ऋगाद्याथ ततः परम् ।
तामग्निवर्णामग्नेत्वंविश्वानीत्यादिका ततः ॥ ८ ॥
पूतनाजितमित्याद्या ऋग् दुर्गा पञ्चमी भवेत् ।
एवमुक्तस्तु मन्त्राख्या दुर्गायास्तन्त्रचोदितः ॥ ९ ॥

---

१. 'मूलं हि म', २. 'च दुर्गामन्त्रो नवाक्षरः ।' ख. पाठः. ३. 'रेपे क. पाठः.

चतुर्भुजा वाष्टभुजा स्यात् षोडशभुजाथवा ।
सिंहासने वा स्वासीना स्थिता वा महिषोपरि ॥ १० ॥
प्रतिष्ठाप्या भवेद् दुर्गा भीत्यादौ सिंहगाथवा ।
वरदाभयशङ्खारिहस्ता दुर्गा चतुर्भुजा ॥ ११ ॥
वामतस्तर्जनीचापचर्मशङ्खांस्तु बिभ्रती ।
शूलेषुखड्गचक्राणि दक्षिणेऽष्टभुजा यदा ॥ १२ ॥
कपालं चाङ्कुशगदे शतघ्नीप्रासकौ धनुः ।
चर्म शङ्खं तथा वामे बिभ्रतीमथ दक्षिणे ॥ १३ ॥
शूलपाशाग्निवज्राणि तोमरं शरमप्यसिम् ।
चक्रं चाधःकराद्यं तु कुर्याद् यष्टभुजा यदा ॥ १४ ॥
मध्येन दशतालेन बेरं श्रीमानतो भवेत् ।
मण्डपे तोरणाः कार्याः प्राग्वत् क्षीरतरूद्भवाः ॥ १५ ॥
प्रागाद्यासु चतुर्दिक्षु यज्ञेशश्च प्रभाकरः ।
मङ्गलश्च सुभद्रश्च स्थाप्या वेदादिभिः क्रमात् ॥ १६ ॥
तोरणाभ्यन्तरे ध्वजा तद्दैवता अपि ।
कुन्दा च कुमुदा चैव विद्युन्माला च भीषणा ॥ १७ ॥
कलुषी घोषणी चैव कराली विकृतिस्तथा ।
पूज्याः स्युस्तत्पताकासु शङ्खाद्य(त्रै ? द्यै)स्तु चिह्नयेत् ॥ १८ ॥
सितारुणासितश्यामधूम्रपीताश्च कर्बुराः ।
मिश्राश्चाथ प्रतिद्वारं द्वे द्वे दूत्यौ क्रमेण तु ॥ १९ ॥
काली कराली विरजा मन्दरा विन्ध्यवासिनी ।
सुप्रभा सिंहवक्त्रा चाप्यष्टमी दैत्यमर्दनी ॥ २० ॥
खड्गखेटधराः सर्वा भूषिताः कुम्भगा यजेत् ।
ततो विकिरविक्षेपात् कुम्भे सिंहगतां शिवाम् ॥ २१ ॥
अस्त्रं चाप्यर्च्य वर्धन्यां कृत्वा चाकारशोधनम् ।
नेत्रमोक्षं जले वासं प्राग्वद् ग्रामप्रदक्षिणम् ॥ २२ ॥

---

१. 'मा', २. 'भ्र' क. पाठः.

स्नपनं चाधिवासार्थं मण्डपे शयनक्रियाम् ।
वेद्यां कुम्भाब्जनिद्राख्यमूर्तिकुम्भाष्टकार्चनम् ॥ २३ ॥

आत्मादितत्त्वब्रह्मादिविभागेषु न्यसेदथ ।
मूर्तीश्च क्ष्मादिकास्त्वष्टौ मूर्तीशा धारिकादिकाः ॥ २४ ॥

धारिका दीप्तिमत्युग्रा ज्योत्स्ना चैव बलोत्कटा ।
धात्री विभुश्च ज्ञानीं तु मूर्तौ पीठे क्रियां न्यसेत् ॥ २५ ॥

प्राग्वन्नवसु कुण्डेषु मान्त्रिकेऽग्नौ विभाजिते ।
आवाह्य दुर्गामूलाङ्गैरात्मतत्त्वादिभिः क्रमात् ॥ २६ ॥

प्राग्वद्धुत्वा संस्पृशेयुः साचार्या मूर्तिसाधकाः ।
अथ प्रतिष्ठां लग्ने तु कुर्याद् युक्तपदे गुरुः ॥ २७ ॥

सप्तसप्तपदे गर्भे ब्रह्मादिषु पदेषु वै ।
शैलीं रत्नमयीं लौहीं दुर्गां तु शिववन्न्यसेत् ॥ २८ ॥

मृन्मयीं दैविके तद्वद् दारवीमथ मानुषे ।
भित्तावालेख्यगां दुर्गां प्रतिष्ठाप्य स्थिरं यजेत् ॥ २९ ॥

लग्ने कूर्मशिलायां तु शक्तिमाधारसंज्ञिताम्[१] ।
रत्नादिपञ्चवर्गांश्च न्यसेत् पीठं तथोपरि ॥ ३० ॥

पीठमध्ये क्रियाशक्तिं पीठे बेरं च विन्यसेत् ।
बेरे ज्ञानात्मिकां मूर्तिं हंसं बीजं च तद्धृदि ॥ ३१ ॥

स्वहृदम्भोजकुहरात् कुण्डलिन्यां समुद्गताम्[२] ।
उत्थाप्य चिन्मयीं शक्तिं हंससंपुटमध्यगाम् ॥ ३२ ॥

शक्तिबीजं ब्रह्मनाडीपदेनोर्ध्वे स्वपङ्कजे ।
योजयेन्निष्कलान्तं तन्मन्त्रमुच्चारयन् सुधीः ॥ ३३ ॥

तस्माच्छाक्तं परं ज्योतिर्निष्कलान्तमुदीरयन् ।
आनीय पुष्पाञ्जलिना मूर्तिहृत्पङ्कजे न्यसेत् ॥ ३४ ॥

हृत्स्थमावाह्य संस्थाप्य संनिरोध्य च मूलतः ।
सन्निधाप्यावगुण्ठ्यास्य चावकुण्ठ्य प्ररोच्य च ॥ ३५ ॥

१. 'ख्याः', २. 'गाम्', ३. 'त' क. पाठः.

स्वमूलाङ्गानि गायत्री पञ्च दुर्गार्णवस्तथा ।
मन्त्राध्वा स्यात् पदाध्वा च पञ्चदुर्गापदैर्मतः ॥ ३६ ॥
शेषाध्वानो यथापूर्वं सर्वांस्तांस्तत्र भावयेत् ।
ततः प्रक्षाल्य सलिलैर्मूर्तिकुम्भास्त्रवारिभिः ॥ ३७ ॥
अभिषिच्य यथापूर्वमर्घ्याद्यैरभिपूजयेत् ।

तद्यथा —

स्नात्वा क्षालितपाण्यङ्घ्रिर्विघ्नेशमभिपूज्य तु ॥ ३८ ॥
आत्मशुद्धिं विधायाथ सकलीकृतविग्रहः ।
सामान्यार्घ्यकरो द्वारि जयां च विजयामपि ॥ ३९ ॥
गङ्गां च यमुनां द्वारश्रियं चोपरि पूजयेत् ।
पार्ष्णिघातादिभिर्विघ्नान् भौमादीनपसार्य तु ॥ ४० ॥
नाराचास्त्रं क्षिपेदन्तः प्रविश्यास्त्रं निधाय च ।
बाह्ये तु शस्त्रप्राकारं वर्मणा चावकुण्ठनम् ॥ ४१ ॥
विधाय मध्ये वास्त्वीशं ब्रह्माणं स्वासनं यजेत् ।
उपविष्टो विशेषार्घ्यात् पञ्च शुद्धीर्विधाय च ॥ ४२ ॥
कृत्वा ललाटे तिलकं पुष्पालङ्कृतमस्तकः ।
अधो मध्ये प्रकृत्यै(च) ततो वज्रासनाय च ॥ ४३ ॥
इति सिंहासनं हैमं नमोन्तमभिपूज्य तु ।
आर्यां च प्रलयां चापि महाप्रलयकामपि ॥ ४४ ॥
सृष्टिं चाग्न्यादिपादांस्तु दिक्ष्वथैषां प्रपूजयेत् ।
अव्यक्तं नियतिं कालं कलां चेन्द्रादिषु क्रमात् ॥ ४५ ॥
त्रिगुणैः कन्दनालाब्जसूर्यसोमाग्निबिम्बकान् ।
ब्रह्मविष्णुहरन्यासपत्रकेसरकर्णिकाः ॥ ४६ ॥
प्रभां मायां जयां सूक्ष्मां विशुद्धां नन्दिनीमपि ।
सुप्रभां विजयां दिक्षु मध्यतः सर्वसिद्धिदाम् ॥ ४७ ॥
दीर्घस्वरादिस्वाख्याभिर्नमोन्तैस्तु क्रमाद् यजेत् ।

केसराग्रेषु मध्ये चेति यावत् ।

ततस्तु मूर्तिं दुर्गायाः शक्तिदेहं च मूलतः ॥ ४८ ॥

हृदयादिक्रमावाद्य ततो देवीं हृदम्बुजात् ।
व्योमाम्बुजसुधासारचैतन्यपरिबृंहिताम् ॥ ४९ ॥
निष्कलान्तोक्तबीजेन मूर्तावावाह्य देशिकः ।
स्थापनाद्यैर्यथापूर्वममृतीकरणान्तकम् ॥ ५० ॥
कृत्वा यथोदितां ध्यात्वा तद्गायत्र्या हृदाद्यया ।
अर्घ्याद्यैरुपचारैस्तु यथापूर्वं यजेच्छिवाम् ॥ ५१ ॥
भोगार्थमङ्गान्यङ्गेभ्यः कोणेष्वस्त्रं चतुर्दिशम् ।
पीठप्रान्तेऽब्जबाह्ये तु शङ्खाद्यस्त्राण्यपि क्रमात् ॥ ५२ ॥
याद्यष्टार्णैस्तु बिन्द्वन्तैरादावायोज्य पूजयेत् ।
नैवेद्यान्तं ततो दिक्षु मन्त्रैर्लोकेशदैवतैः ॥ ५३ ॥
हुत्वा द्वितीयदिवसे समिदाज्यचरूंस्तिलान् ।
लाजान् व्रीहींश्च सिद्धार्थान् पायसं च पृथक् पृथक् ॥ ५४ ॥
अष्टोत्तरशतं हुत्वा मूलेनाङ्गैर्दशांशतः ।
तृतीयदिवसे पञ्चदुर्गाभिर्जुहुयाद् घृतम् ॥ ५५ ॥
चतुर्थे सिंहगामैशे यजेन्निर्माल्यधारिणीम् ।
लोकपालांस्तथा सिंहं मातृः स्वाशासु विन्यसेत् ॥ ५६ ॥
बलिपीठं च तत्रस्थान् दैवतानभिपूज्य तु ।
अष्टोत्तरशतेनापि स्नपयित्वा तु पूर्ववत् ॥ ५७ ॥
मन्त्रैस्तु वैदिकैस्तैस्तैः शैवस्नपनचोदितैः ।
गायत्र्या पञ्चदुर्गाभिर्मध्यमेनाभिषेचयेत् ॥ ५८ ॥
निशि[1] भूतबलिं दत्त्वा दक्षिणाश्च प्रदाय तु ।
विभवं चापि संकल्प्य नित्यपूजादिसिद्धये ॥ ५९ ॥
फलं तु कर्ता पुर्वोक्तमिह चामुत्र विन्दति ।
त्रिष्टुप्प्रभृतिकान् दौर्गान् वनदुर्गादिकांस्तु वा ॥ ६० ॥
दुर्गामन्त्रान् साधयन्ति यथोक्तान् पूर्वपद्धतौ ।
तत्तद्विधानतस्त्वेवं प्रतिष्ठाप्य यजन्ति चेत् ॥ ६१ ॥

---

1. 'भा' क. पाठः.

तत्तत्कल्पोदितां सिद्धिं ते ते विन्दन्त्ययत्नतः ।

दुर्गाप्रतिष्ठाधिकारः ।

---

नित्योत्सवे तु दुर्गायाः पूर्वादिद्वारपालिकाः ॥ ६२ ॥
जया च विजया रौद्री भीषणी शूलिनी प्रभा ।
अपराजिता जयन्ती च कन्या वेत्रासिधारिकाः ॥ ६३ ॥
ताभ्यः क्षिप्त्वा बलिं लोकपालेभ्यः स्वस्वगोचरे ।
दुर्गापारिषदे चेति सर्वत्रायोज्य निक्षिपेत् ॥ ६४ ॥
सिंहाय मण्डपे वज्रनखदंष्ट्रायुधाय ते ।
महासिंहाय हुं स्वाहा नमश्चेति बलिं क्षिपेत् ॥ ६५ ॥
विघ्नवीरमातृभ्यः शास्त्रे स्कन्दाय चेन्दवे ।
स्वाशासु निक्षिपेच्चैवं सिंहिकायै बलिं क्षिपेत् ॥ ६६ ॥
निर्माल्यधारिणी सिंहिकेति यावत् ।
ह्लादिन्यै चापि मादिन्यै द्वार्यन्तर्गोपुरस्य तु ॥ ६७ ॥
कात्यायन्यै च चण्डायै गोपुरद्वारि बाह्यतः ।
अथ पीठाग्रतः स्थित्वा मन्त्रमेनमुदीरयेत् ॥ ६८ ॥

ओं

ये समस्तं जगद् व्याप्य चरन्ति बालकाकृया ।
दुर्गापारिषदाः सर्वे गृह्णन्तूपहृतं बलिम् ॥ ६९ ॥
ततो द्वितीयहारायां दिक्ष्वष्टौ कालिकादिकाः ।
काली कराली विरजा मन्दरा विन्ध्यवासिनी ॥ ७० ॥
सुप्रभा सिंहवक्त्रा चाप्यष्टमी दैत्यमर्दनी ।
ताभ्यो बलिं विकीर्याथ बलिपीठेऽथ निक्षिपेत् ॥ ७१ ॥
ब्रह्मघोषा सुघोषा च कुमारी वरवर्णिनी ।
आर्या च हेमवर्णा च कृत्तिका चाभयप्रदा ॥ ७२ ॥
प्रागाद्याशास्थिता ह्यष्टौ ब्राह्मी कुमुदके स्थिता ।
दुर्गासेना पीठमध्ये चासां तस्यै बलिं क्षिपेत् ॥ ७३ ॥
नित्योत्सवे विधिस्त्वेष स्यात् तुल्यश्च महोत्सवे ।
विशेषस्तु ध्वजे लेख्यः सिंहः पूज्यश्च मन्त्रतः ॥ ७४ ॥

तथा तृतीयद्वारायामष्टावष्टौ तु कन्यकाः ।
स्थिताः प्रतिदिशं ताश्च सहस्रगणनायिकाः ॥ ७५ ॥
सौम्या भद्रा जया नन्दा कुन्दा च कुमुदा द्युतिः ।
विद्युन्माला च पूर्वस्यामथाग्नेय्यां महाबला ॥ ७६ ॥
बला च सुबला बाला चाबला भीषणा रतिः ।
कलुषा चेत्यथो याम्ये घोषणी नन्दनी स्मृतिः ॥ ७७ ॥
युद्धप्रिया देवसिद्धपूजिता विकृतिः कृतिः ।
सप्तैतास्त्वष्टमी चास्यां महासुरविमर्दनी ॥ ७८ ॥
विकराली पालिनी च शूलकात्यायनी ततः ।
महायोगेश्वरी गौरी चण्डा चण्डी च खड्गिनी ॥ ७९ ॥
नैर्ऋत्यामथ वारुण्यां ह्लादिनी क्षेमकारिका ।
आर्या भद्रा भद्रकाली वारुणी चामृताम्बिका ॥ ८० ॥
अथ क्षेम्या वेदगर्भा चानन्ता सर्वनिष्कला ।
शान्तिश्च भैरवी प्राणा चेतना वायुगोचरे ॥ ८१ ॥
ऋद्धिर्लक्ष्मीस्तथा तुष्टिः पुष्टिः कीर्तिर्धनेश्वरी ।
अद्भुता च मदा चाष्टौ कौबेर्यां दिशि नायिकाः ॥ ८२ ॥
श्रुतिः स्मृतिस्तथा नीतिर्भीमा च ब्रह्मचारिणी ।
नीलाम्बरा शूलिनी चाप्यष्टमी स्यात् सरस्वती ॥ ८३ ॥
ऐशभागे स्थितास्त्वेताः सर्वासां विकिरेद् बलिम् ।
एतासां बाह्यतो दिक्षु गणेभ्यः पूर्ववद् बलिम् ॥ ८४ ॥
ऐन्द्र्यां दिशि गणा ये तु वज्रहस्ता महाबलाः ।
इत्यादिभिः क्रमान्मन्त्रैः पूर्वोक्तैर्विकिरेद् बलिम् ॥ ८५ ॥
शैवोत्सवोक्तं यत् कर्म तदत्रापि समूहयेत् ।
मन्त्राणां दैवतानां च भेदः कश्चिद् भवेदिह ॥ ८६ ॥
तीर्थस्नानं यथापूर्वं सङ्कल्प्य तु समाचरेत् ।
चैत्रे मासे तु चित्रा(तु ? यां) वैशाखे च विशाखभे ॥ ८७ ॥
आषाढे पूर्वफल्गुन्यां श्रावणे कृत्तिकासु च ।
महानवम्यां शरदि पैर्णमास्यां च कार्तिके ॥ ८८ ॥

पुष्यमासस्य पुष्ये चाप्युत्तरायां च फाल्गुने ।
उत्सवश्च तदा कार्यो दुर्गायास्तुष्टये नृभिः ॥ ८९ ॥
इत्थं दुर्गां प्रतिष्ठाप्य भक्त्या पूजयतां सताम् ।
दृष्टादृष्टफलं सर्वमभीष्टं सुलभं भवेत् ॥ ९० ॥

इतीदं हि दौर्गं समासेन तन्त्रं स्मृतं पावने यच्च देवोद्भवोक्तम् ।
प्रतिष्ठादिकृत्यं क्रमादुत्सवान्तं समस्तं तदुक्तं हि शैवानुसारात् ॥९१॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे उपरिभागे
क्रियापदे दुर्गातन्त्रपटलः पञ्चपञ्चाशः ॥

---

## अथ षट्पञ्चाशः पटलः ।

अथ गौर्याः प्रतिष्ठाद्यं समासात् सम्यगुच्यते ।
तन्मूलबीजं प्रागेव शक्तिसंज्ञं प्रदर्शितम् ॥ १ ॥
तारं च शक्तिबीजं च खान्तश्चौकारसंयुतः ।
ससूक्ष्मोऽग्निस्ततो रुद्रपदं च दयितेपदम् ॥ २ ॥
द्वादशान्तयुतो वायुः खान्तः सैकादशाक्षरः ।
अष्टमाद्यो वकारस्थो वह्निः सूक्ष्मेण संयुतः ॥ ३ ॥
हुंफडग्निप्रियान्तोऽयं मन्त्रः सप्तदशाक्षरः ।
नेत्राब्धिशरवेदाब्धिनेत्रस्वार्णैः स्वजातिभिः ॥ ४ ॥
सदीर्घस्वरनाद्याद्यं षडङ्गान्यस्यमन्त्रतः ।
अष्टमस्य तृतीयं तु पञ्चमस्वरसंयुतम् ॥ ५ ॥
षष्ठवर्गाच्चतुर्थं च गायै इत्यक्षरद्वयम् ।
विद्महे कामशब्दौ च मालिन्यै चेति धीमहि ॥ ६ ॥
तन्नअन्ते भवेद् गौरी प्रकारोऽन्ते च चोदयात् ।
एषा हि गौरीगायत्री विनियोगोऽर्चनादिषु ॥ ७ ॥
मध्येन दशतालेन गौर्यास्तु प्रतिमा भवेत् ।
चतुर्भुजा सवरदा सपाशा साभयाङ्कुशा ॥ ८ ॥
पीनोत्तुङ्गस्तनी नीलधम्मिल्लमकुटोज्ज्वला ।
त्रिलोचना स्मितमुखी मणिकुण्डलमण्डिता ॥ ९ ॥

---

१. 'न्तस्यैकादशस्वरः ।' क. पाठः.

ग्रैवेयकोल्लसद्धारिहारा सूदरबन्धना ।
हेमाङ्गदोल्लसद्रत्नवलयाङ्गुलिवेष्टना ॥ १० ॥
हेमकाञ्चीपरिलसत्कौशेयवसनोज्ज्वला ।
नखरत्नांशुविलसत्पदाब्जासक्तनूपुरा ॥ ११ ॥
सर्वलावण्यसौन्दर्यसौकुमार्यगुणास्पदा ।
एवंरूपा मनोन्मन्या गौर्यास्तु प्रतिमा भवेत् ॥ १२ ॥
शिलालोहादिविहिता प्रोक्तसीमानतः क्रमात् ।
प्रोक्ते विमाने शैवोक्तमार्गेण स्थापयेच्छिवाम् ॥ १३ ॥
यो यो विशेषः पूर्वोक्तात् तं तमत्र वदाम्यतः ।
षोडशस्तम्भयुक्तः स्यादधिवासनमण्डपः ॥ १४ ॥
धर्मादयोऽन्तश्चत्वारःस्तम्भाः सूर्याश्च बाह्यतः ।
भद्रश्च विजयश्चैव विजृम्भो लोहितस्तथा ॥ १५ ॥
प्रागादितोरणा ज्ञेया जयाद्या द्वारकुम्भगाः ।
जया च विजया प्राच्यामजिता चापराजिता ॥ १६ ॥
नित्या विलासिनी शौण्डी चाघोरा दक्षिणादिषु ।
कुन्दां च कुमुदां चैव विद्युन्मालां विभूषणाम् ॥ १७ ॥
कलुषां घोषणीं चैव करालीं विकृतां तथा ।
द्वे द्वे द्वार्ध्वजयोर्दूत्यौ यजेत् कुम्भगते क्रमात् ॥ १८ ॥
पुण्याहविकिरक्षेपात् कुम्भान्ते प्राग्वदर्चयेत् ।
वृषारूढां घटे गौरीं सिंहेऽस्त्रं वर्धनीगतम् ॥ १९ ॥
योषिद्रूपं चतुर्हस्तं शूलटङ्कवराभयैः ।
पीनोत्तुङ्गस्तनं श्यामं भूषितं सत्रिलोचनम् ॥ २० ॥
षड्खण्डातकं रौद्रं सर्वासुरभयङ्करम् ।
पिङ्गोर्ध्वकेशं नानाहिभूषणं सौम्यभीषणम् ॥ २१ ॥
उमास्त्रमेवं स्त्रीरूपं तत्पूजाभ्रमणादनु ।
मध्यकुण्डस्थशैवाग्निं नवधा संविभज्य तु ॥ २२ ॥
प्राग्वन्नवसु कुण्डेषु क्षिप्त्वा तस्य हृदम्बुजे ।
गौरीमावाह्य मूलाङ्गैर्जुहुयुर्गुरुमूर्तिपाः ॥ २३ ॥

१. 'बंस्तक' ख. पाठः.

विधायाकारशुद्धिं च प्राग्वन्नयनमोक्षणम्।
जलाधिवासनं ग्रामभ्रमणं स्नपनं तथा ॥ २४ ॥

मण्डपेऽथ ततो वेद्यां शयने पञ्चधास्तृते।
पञ्चभूतात्मके देवीं शाययित्वाभिपूजयेत् ॥ २५ ॥

रक्तपीताम्बराच्छन्नां ततः कुम्भात्मकं न्यसेत्।
गौरीकुम्भं शिरःस्थाने निद्राकुम्भं च विन्यसेत् ॥ २६ ॥

परितो मूर्तिकुम्भेषु वामाद्याभिस्तु संयुतान्।
ब्रह्मादीन् पञ्च गायत्रीं सावित्रीं च सरस्वतीम् ॥ २७ ॥

पीठे चैव क्रियाशक्तिं बेरे ज्ञानीं च विन्यसेत्।
त्रिभागेष्वपि च न्यस्येत् तत्त्वं तत्त्वेश्वरान् क्रमात् ॥ २८ ॥

पृथ्व्याद्या मूर्तयः प्राग्वन्मूर्तीशा धारिकादिकाः।
पृथक् क्रमेण हुत्वैभ्यः स्पृशेयुर्गुरुमूर्तिपाः ॥ २९ ॥

ततः प्रातः कूर्मशिलां लग्ने न्यस्येद् यथापुरम्।
रत्नादिपञ्चवर्गांश्च पीठं चाथ स्वमूलतः ॥ ३० ॥

प्रतिमां स्थापयेत् पीठे हृत्पद्मेऽस्यास्तु चिन्मयम्।
कुम्भात् तच्छक्तिबीजं तु विन्यस्य स्नपयेत् ततः ॥ ३१ ॥

रुद्रेण पवमानैश्च गौरी(रि ? मि)त्यादिनापि च।
ततो मूलाङ्गगायत्र्या मन्त्राध्वा स्याच्च तत्पदैः ॥ ३२ ॥

पदाध्वा स्याद् यथापूर्वं शेषाध्वानो यथापुरम्।
ततः प्रधाननिद्राख्यमूर्तिकुम्भाभिषेचिताम् ॥ ३३ ॥

अर्घ्याद्यैस्तु यथापूर्वं पूजयेत् परमेश्वरीम्।

तद्यथा—

स्नात्वा प्रक्षाल्य चरणावाचम्य सकलीकृतः ॥ ३४ ॥

विघ्नं गुरुं च संपूज्य सामान्यार्घ्यकरो गुरुः।
जया च विजया द्वारि स्थिते वेत्रकरे भुवि ॥ ३५ ॥

गङ्गा च यमुना चोर्ध्वे द्वारश्रीर्मध्यगोपरि।
ता इष्ट्वा शिलनाराचः प्रविश्यास्त्रं निधाय च ॥ ३६ ॥

वास्तुब्रह्मासनादीष्ट्वा पञ्चशुद्धीर्विधाय तु ।
मूलाङ्गपूरितार्घ्यः सन् तिलकी पुष्पशेखरः ॥ ३७ ॥
कूर्माधो धारिणीं शक्तिं पीठे शक्त्यासनं तु तत्
हैमं सिंहासनं ध्यात्वा पादान् धर्मादिकानपि ॥ ३८ ॥
सत्त्वादिकन्दनालाब्जं सूर्यबिम्बादिकादिकान् ।
पत्रादिषु ततः शक्तीर्वामाद्याः केसराग्रगाः ॥ ३९ ॥
मनोन्मनीं स्वयं साक्षान्मध्ये गौरीं शिवा भवेत् ।
तन्मूर्तिं मन्त्रदेहं च चिच्छक्तिं स्वादृधृदम्बुजात् ॥ ४० ॥
द्वादशान्तगतां प्राग्वन्मूर्तिहृत्पङ्कजे न्यसेत् ।
स्थापनं चैव सान्निध्यं सन्निरोधं प्ररोचनम् ॥ ४१ ॥
अमृतीकरणं चावकुण्ठनं हृदयादिभिः ।
ब्रह्माणि चेशानादीनि कास्यहृद्दशनाङ्घ्रिषु ॥ ४२ ॥
विन्यसेत् पञ्च शक्तीश्च हृल्लेखां गगनां तथा ।
रक्तां करालिकां चापि महोच्छुष्मां च कादिषु ॥ ४३ ॥
ब्रह्मादीन् पञ्च पादादि हृदये च सरस्वतीम् ।
गायत्रीमपि सावित्रीं स्तनयोर्विन्यसेत् ततः ॥ ४४ ॥
क्रमादर्घ्यादिभिः सम्यगुपचारैर्यजेच्छिवाम् ।
पत्रेष्वङ्गावृतिं चेष्ट्वा बाह्ये दूत्यष्टकं यजेत् ॥ ४५ ॥
अनङ्गरूपा चानङ्गमदना मदनातुरा ।
तथा पवनवेगा च ततो भुवनपालिका ॥ ४६ ॥
स्यात् सर्वशिशिरानङ्गवेदनानङ्गमेखला ।
इष्ट्वैता गन्धपुष्पाद्यैर्द्वाःस्थाश्चापि जयादिकाः ॥ ४७ ॥
इन्द्रादीँल्लोकपालांश्च वृषभं मुखमण्डपे ।
वीरं विघ्नं ततो मातॄः शास्तृस्कन्दौ निशाकरम् ॥ ४८ ॥
निर्माल्यधारिणीमैशे स्थापयेत् सुभगाह्वयाम् ।
बलिपीठे च संस्थाप्य दिक्पालेभ्यो जुहोति च ॥ ४९ ॥

---

१. 'हृ', २. 'भ्यो क. पाठः. ३. 'तृ' ख. पाठः.

द्वितीयेऽह्न्यथ मूलाङ्गैर्गायत्र्या समिदादिभिः।
अष्टद्रव्यैः शतं मूलेनाङ्गानां तु दशांशतः॥ ५० ॥
गायत्र्या च शतं गौरीमिमायेत्यादिनाऽपि च।
तृतीयेऽह्नि तिलाज्याभ्यामघोरास्त्राच्छिवास्त्रतः॥ ५१ ॥
हुत्वा पाशुपतास्त्रेण प्रायश्चित्तैर्जयादिभिः।
चतुर्थदिवसे प्राग्वदिष्ट्वा निर्माल्यधारिणीम्॥ ५२ ॥
अग्नीनात्मनि संहृत्य स्नापयेत् कलशैः शतैः।
दक्षिणाश्च प्रदेयानि दत्त्वा भूतबलिं निशि॥ ५३ ॥
विकिरेन्नित्यपूजार्थं विभवं चापि कल्पयेत्।
फलं शिवप्रतिष्ठोक्तं कर्ता सर्वं समश्नुते॥ ५४ ॥
आवाहनी स्थापनी च निष्ठुरा क्षोभणी तथा।
मोहनी द्रावणी चैव कर्षणी सन्निधापनी॥ ५५ ॥
वन्दनी च महामुद्रा गौरीमुद्रा दश स्मृताः।
अञ्जलिः पूर्णपुष्पो य उत्तानो द्वादशान्ततः॥ ५६ ॥
आमूर्तिहृदयानीतो मुद्रा ह्यावाहनी स्मृता।
सैव पुष्पं विना मुद्रा स्मृता स्थापन्यधोमुखी॥ ५७ ॥
निष्ठुरा चोच्छ्रिताङ्गुष्ठश्लिष्टमुष्टिकरद्वयात्।
अन्योन्यसंमुखौ हस्तौ संश्लिष्टौ मुक्ततर्जकौ॥ ५८ ॥
मध्यमाङ्गुष्ठसंयोगात् क्षोभणी स्यात् प्ररोचनी।
श्लिष्टाङ्गुष्ठतलौ हस्तौ प्रसृताङ्गुष्ठतर्जकौ॥ ५९ ॥
कनिष्ठानामिकामध्यासंश्लेषान्मोहनी स्मृता।
अमृतीकरणं देव्या मोहन्या तु प्रकल्पयेत्॥ ६० ॥
तथैव श्लिष्टकरयोस्तर्जन्यौ संप्रसार्य तु।
मध्यमाङ्गुष्ठसंयोगाद् द्रावण्यानन्ददायिनी॥ ६१ ॥
सैव सुश्लिष्टकरयोर्वक्रतर्जाग्रयोगतः।
कर्षणी स्यात् तया देवीं प्रसन्नां परिभावयेत्॥ ६२ ॥
सैव मध्याग्रतर्जाभ्यां ज्येष्ठिकाद्वयपीडनात्।
सन्निधापकरी मुद्रा सान्निध्यं कल्पयेत् तया॥ ६३ ॥

बद्धाञ्जलिपुटौ पाणी सरोजमुकुलोपमौ ।
वन्दनी नाम मुद्रा स्यात् सा योज्या वन्दनादिषु ॥ १४ ॥
अनामिके द्वे तर्जन्यामधः पाण्योर्निबद्धय तु ।
उत्तानपाणितलयोर्मध्यमे सकनिष्ठिके ॥ ६५ ॥
पार्श्वाभ्यां संहताग्रे स्तामृज्वायतमवस्थिते ।
तदङ्गुष्ठाग्रयुग्मेन कनिष्ठामूलयोः स्पृशेत् ॥ ६६ ॥
एषा गौर्या महामुद्रा दशमी सर्वसिद्धिदा ।

गौरीप्रतिष्ठाधिकारः ।

---

गौरीनित्योत्सवे देवी स्यात् सुवर्णादिनिर्मिता ॥ ६७ ॥
गौर्यङ्गमध्यमन्त्रस्थमावाह्येष्टाग्रतो वहेत् ।
जयादिकाभ्यो द्वाःस्थाभ्यो लोकेशेभ्यो वृषाय च ॥ ६८ ॥
गौरीपारिषदे(तन्तं ? भ्यश्च) सर्वेभ्योऽपि बलिं क्षिपेत् ।
वीरविघ्नेशमातृभ्यः शास्त्रे स्कन्दाय चेन्दवे ॥ ६९ ॥
सुभगायै बलिं क्षिप्त्वा गोपुरद्वारपार्श्वयोः ।
त्रिशूलिन्यै च खड्गिन्यै क्षिप्त्वा निष्क्रम्य गोपुरात् ॥ ७० ॥
पीठोपान्ते स्थितोऽनेन मन्त्रेणामन्त्रयेद् गणान् ।

ये समस्तं जगद् व्याप्य चरन्ति बलिकाङ्क्षया ॥ ७१ ॥
गौरीपारिषदाः सर्वे गृह्णन्तूपहृतं बलिम् ।

ततो द्वितीयहारायामष्टौ स्युर्गणनायिकाः ॥ ७२ ॥
कराली विकराली चाप्युग्रा वाणी शची तथा ।
मोहनी चैव माया च महालक्ष्मीस्तथाष्टमी ॥ ७३ ॥
आसां बलिं क्षिपेच्चाथ बलिपीठाष्टदिक्स्थिताः ।
ऋद्धिः स्मृतिर्धृतिः श्रद्धा मेधा कान्तिर्मतिः श्रुतिः ॥ ७४ ॥
आर्या कुमुदके पीठे गौरीसेना च मध्यतः ।
स्वाख्याभिर्विकिरेदासां नमोन्तं बलिमादरात् ॥ ७५ ॥

---

१. 'न', २. 'म् । त' क. पाठः.

नित्योत्सवविधिस्त्वेष तुल्यश्च स्यान्महोत्सवे ।
गौरीवाहनसंज्ञस्तु वृषः पूज्यो ध्वजो भवेत् ॥ ७६ ॥

आवाहनं गणादीनां प्राग्वद् गौर्युत्सवे स्मृतम् ।

विशेषस्तु ये भूताःपुरस्सदो गौर्यादिभगवत्यादिभिः प्रतिदिशं बलिं मण्डले विकीर्य तद्बाह्ये प्रतिदिशं द्वादशसहस्रपर्षन्नायिकाभ्यो बलिं विकिरेत् । ताश्च षण्णवतिसंख्याः ।

यथा —

विद्या प्रज्ञा सिनीवाली कुहूर्ह्रीः पुष्टिरेव च ॥ ७७ ॥
रुद्रवीर्या प्रभा नन्दा पोषणी शुभदा क्षमा ।
इति प्राच्यामथाग्नेय्यां कालरात्री कपर्दिनी ॥ ७८ ॥
भद्रकाली च विकृतिर्दण्डिनी च कपालिनी ।
मुसुण्ठिनी सेन्दुखण्डा ।नैसुम्भमथिनी ततः ॥ ७० ॥
शिखण्डिनी तथेन्द्राणी रुद्राणी चेति संस्थिताः ।
नारी नारायणी भद्रा शङ्करार्धशरीरिणी ॥ ८० ॥
+ + त्रिशूलिनी चा(प्य? पि अ)म्बिका ह्लादिनी रतिः ।
पिङ्गाक्षी च विशालाक्षी समृद्धिश्चेति दक्षिणे ॥ ८१ ॥
बुद्धिर्वृद्धिः स्वधा स्वाहा मायाभिख्या वसुन्धरा ।
त्रिलोकधात्री जगती बृहती त्रिदशेश्वरी ॥ ८२ ॥
अरुणा चेति नैर्ऋत्यां नायिका द्वादश स्थिताः ।
सुरुचा बहुरूपा च स्कन्दसेना च वारुणी ॥ ८३ ॥
अमला विमला ख्यातिः प्रकृतिर्विकृतिः स्थितिः ।
सृष्टिः सन्ध्या च वारुण्यां नायिका द्वादश स्थिताः ॥ ८४ ॥
संहृतिश्च जगन्माता सती चैव च हंसिनी ।
देवमाता वज्रिणी च मर्दनी भगवत्यपि ॥ ८५ ॥
पद्मासना देवकी च त्रिमुखी च चतुर्मुखी ।
गौरीपारिषदा मुख्या वायव्यां द्वादश स्थिताः ॥ ८६ ॥
सद्यानना चाष्टमुखी देवासुरविमर्दिनी ।
लम्बोष्ठी लम्बकेशी चाप्यूर्ध्वकेशी महोदरी ॥ ८७ ॥

रेखा च शशरेखा च विश्वरूपा कृशोदरी ।
धनदा चेति कौबेर्यां नायिका द्वादश स्थिताः ॥ ८८ ॥
सुररक्षणिका चार्या वागीशी + + + + + ।
+ + व्रता वज्रवेगा वायुवेगा महेश्वरी ॥ ८९ ॥
ऐशानी ज्वलिनीसंज्ञा शाङ्करी चेति नायिकाः ।
द्वादशैताः स्युरैशान्यां गौरीपारिषदाः स्थिताः ॥ ९० ॥
एताः पृथक् परिषदां सहस्रैः परिवारिताः ।
जगत्संहृतिसम्भूतिस्थित्यनुग्रहहेतवः ॥ ९१ ॥
सर्वासामपि चैतासां शुक्लान्नगुलपायसैः ।
घृतक्षौद्रप्लुतैर्दद्याद् बलिं भक्त्या तु देशिकः ॥ ९२ ॥
ततः शैवोक्तमार्गेण तीर्थस्नानं समाचरेत् ।
मूलाङ्गैर्वैदिकैर्मन्त्रैर्यजेच्च सविशेषकम् ॥ ९३ ॥
स्नपयेच्च सहस्रादिकलशैरुपपादितः ।
शिवगौरी चैकगौरी स्थिरगौरी द्विधा स्मृता ॥ ९४ ॥
पत्नीत्वेन शिवस्यैव स्थिरलिङ्गगतस्य या ।
प्रतिष्ठिता समीपे तु शिवगौरी स्मृता हि सा ॥ ९५ ॥
गौरी सभूतैर्देवैर्वा मुनिभिर्वाथ मानवैः ।
स्थिरलिङ्गं विना सा चेदेकगौरी प्रतिष्ठिता ॥ ९६ ॥
न पृथक्छिवगौर्यास्तु प्रशस्तः स्यान्महोत्सवः ।
शिवोत्सवे महेशेन यात्रा तस्याः प्रशस्यते ॥ ९७ ॥
नित्योत्सवान्ता(पूजान्तात् ?)पूजा स्याच्छिवगौर्या यथाविधि ।
एकगौर्याः स्वतन्त्रस्तु पृथक् कार्यो महोत्सवः ॥ ९८ ॥
इत्थं गौरीं प्रतिष्ठाप्य यथाविभवमादरात् ।
कल्पयन्त्युत्सवान्तां ये नित्यपूजां यथाविधि ॥ ९९ ॥
न तेषां शक्यते वक्तुं पुण्यं युगशतैरपि ।
यदभिष्टतमं लोके दृष्टादृष्टफलं महत् ॥ १०० ॥
तत् तत सर्वमयत्नेन लभन्ते कर्तृपूर्वकाः ।

निगदितमिह गौर्यास्तन्त्रमेतत् समासा-
ल्ललितमपि च बिम्बं भानुतन्त्रं च दृष्ट्वा ।
विविधमिह विधिज्ञैर्यत् प्रतिष्ठादिकृत्यं
सकलमपि तदुक्तं प्रोक्तशैवानुसारात् ॥ १०१ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे
उपरिभागे क्रियापादे गौरीनिन्त्रपटलः
षट्पञ्चाशः ॥

---

अथ सप्तपञ्चाशः पटलः ।

प्रतिष्ठाथ सरस्वत्याः कथ्यते तन्त्रचोदिता ।
तारश्च नादो बिन्द्वन्तस्तत्पूर्वोऽन्त्यस्वरान्वितः ॥ १ ॥

वीप्सितो (प ? व)दशब्दश्च वाग्वादिनिपदं ततः ।
मरुत्सखप्रियान्तोऽयं जगत्यर्णो हि वाङ्मनुः ॥ २ ॥

तारादिः स्याद् द्विजातीनामन्येषां केवलः स्मृतः ।
साग्निर्नादस्तु तारादिर्दीर्घैर्युक्तः क्रमात् स्वरैः ॥ ३ ॥

ऋगादिवेदशब्दैश्च धर्मशास्त्रपदेन च ।
पुराणपदसंयुक्तैः षड्भिर्मन्त्रपदैः क्रमात् ॥ ४ ॥

स्वजातियुक्तान्यङ्गानि षडङ्गान्तानि कल्पयेत् ।
वागीश्वरी चतुर्थ्यन्ता विद्महेपदसंयुता ॥ ५ ॥

वाग्वादिनीपदस्यान्ते धीमहीति पदं भवेत् ।
तन्नः सरस्वती प्रेति चोदयादिति योजिता ॥ ६ ॥

तारादिका सरस्वत्या गायत्री सर्वसिद्धिदा ।
मध्येन दशतालेन प्रोक्तश्रीमानतः कृता ॥ ७ ॥

प्रतिमा स्यात् सरस्वत्याः शुक्लवर्णा चतुर्भुजा ।
सवरां लेखनीं वामे कलशं चापि बिभ्रती ॥ ८ ॥

अभयं पुस्तकं तद्वदधश्चोर्ध्वे च दक्षिणे ।
शङ्खकुन्देन्दुधवला सकपर्देन्दुशेखरा ॥ ९ ॥

त्रिनेत्रा शुक्लवसना माल्यगन्धविभूषिता ।
हारिहारोल्लसत्तुङ्गपीवरस्तनमण्डला ॥ १० ॥
सुप्रसन्नमुखाम्भोजा सर्वाभरणभूषिता ।
पद्मासने(पू ? सू)पविष्टा नवयौवनमण्डिता ॥ ११ ॥
वागीश्वरीप्रतिष्ठायां कर्म शैवोक्तमार्गतः ।
विशेषो दक्षिणद्वारे स्थाप्या स्याद् दक्षिणामुखी ॥ १२ ॥
उत्तराभिमुखी पूज्या चाधिवासनमण्डपे ।
पुष्करः पूर्णभद्रश्चाप्यानन्दो नन्दनस्तथा ॥ १३ ॥
पूर्वादितोरणास्तद्वद् ध्वजौ द्वौ द्वौ यथाक्रमम् ।
प्राच्यामैन्द्रश्च वज्राङ्को याम्यो दण्डाङ्क एव च ॥ १४ ॥
वारुणश्चाथ पाशाङ्कः कौबेरश्च गदाङ्कितः ।
मेधा प्रज्ञा प्रभा विद्या धीर्धृतिस्मृतिबुद्धयः ॥ १५ ॥
द्वारकुम्भस्थिता पूज्याः पूजनीयाः स्वनामभिः ।
मध्यस्तम्भेषु चत्वारोऽप्याग्नेयादिष्वृगादयः ॥ १६ ॥
वेदबाह्ये रविस्तम्भाः शीक्षा कल्पो निरुक्तकम् ।
छन्दो ज्योतिः सूत्रपाठो मीमांसा न्यायविस्तरः ॥ १७ ॥
धर्मशास्त्रं पुराणं च दण्डनीतिश्च वै क्रमात् ।
विद्यात्मकं वितानं स्यात् स्वर्गं तु पृथिवी स्वयम् ॥ १८ ॥
सर्वत्रापि तारादिनमोन्तैः स्वाख्याभिरर्चयेत् ।
ततः पुण्याहविकिरक्षेपात् कुम्भास्त्रपूजने ।
स्यात् कुम्भे हंसगा वाणी तदस्त्रं सारसोपरि ॥ १९ ॥
रक्ताकल्पं रक्तवर्णं षड्भुजं सत्रिलोचनम् ।
स्त्रीरूपं भूषितं वामे वरपुस्तकपाशधृक् ॥ २० ॥
दक्षिणे साभयं +(कं ?)खेलिनीं चाङ्कुशं दधत् ।
प्राग्वन्नवसु कुण्डेषु वह्निं मध्यादिभाजितम् ॥ २१ ॥
निक्षिप्यावाह्य वागीशीं मूलाङ्गैर्मध्यमे गुरुः ।
योगादिमूर्तिभिर्दिक्षु जुहुयुर्मूर्तिधारकाः ॥ २२ ॥

गायत्र्या चापि लोकेशमन्त्रैरपि यथाक्रमम् ।
समिदाज्यचरूँल्लाजान् व्रीहिसिद्धार्थसर्षपान् ॥ २३ ॥
तिलांश्चाष्टोत्तरशतं जुहुयुस्ते पृथक् पृथक् ।
प्राग्वदाकारशुद्धिं च कुर्याच्चाक्षिविमोक्षणम् ॥ २४ ॥
जलाधिवासनं ग्रामभ्रमणं स्नपनं तथा ।
मूर्तीरथ सरस्वत्या विद्याकुम्भाष्टके यजेत् ॥ २५ ॥
योगां सत्यां च विमलां ज्ञानां बुद्धिं क्रियां तथा ।
मेधां श्रद्धां च ताः सर्वाः सकमण्डलुपुस्तकाः ॥ २६ ॥
साक्षमालालेखनिकाः शुक्लाः शुक्लाम्बरादिकाः ।
ततो बेरत्रिभागेषु जानुकण्ठशिरोवधि ॥ २७ ॥
आत्मादितत्त्वतत्त्वेशान् ब्रह्मादीन् विन्यसेत् क्रमात् ।
तेषु पृथ्व्याद्यष्टमूर्तीस्तच्छक्तीर्धारिकादिकाः ॥ २८ ॥
न्यसेज्ज्ञानीतनौ देव्याः पीठे शक्तिं क्रियाह्वयाम् ।
हुत्वा हुत्वा च तन्मन्त्रैः संस्पृशेयुर्यथापुरम् ॥ २९ ॥
अथ प्रातः कृतस्नानो गुरुर्मूर्तिधरैः सह ।
कृतसन्ध्याविधिर्ब्रह्मे लि । कूर्माह्वयां न्यसेत् ॥ ३० ॥
रत्नादिपञ्चवर्गांश्च तस्यां पीठं च पूर्ववत् ।
पीठे च प्रतिमां न्यस्येत् कुर्याद् बन्धेन सुस्थिरम् ॥ ३१ ॥
प्रक्षाल्य किञ्चिदिष्ट्वा च मूर्तिं विद्यातनुं न्यसेत् ।
कुम्भस्थां मूलतो वाणीमूर्तिहृत्पङ्कजे न्यसेत् ॥ ३२ ॥
ततो मूलाङ्गगायत्री मातृकोक्ताक्षराणि च ।
उक्ताक्षराणि नामशक्तिवाग्भवानीति यावत् ।
मन्त्राध्वानात् पदैरेव पदाध्वान्ये च पूर्ववत् ॥ ३३ ॥
अथापूर्याञ्जलिं पुष्पैः कुण्डलिन्यादितः स्वतः ।
ध्यायन् सूक्ष्मां च पश्यन्तीं मध्यमां वैखरीमपि ॥ ३४ ॥
कर्णावुत्क्षिप्य तां वाचं विद्युल्लेखानुकारिणीम् ।
द्वादशान्ते समायोज्य तच्चैतन्योपबृंहिताम् ॥ ३५ ॥

पुष्पाञ्जलौ सुसंक्रान्तां हंसमुच्चारयन् प्लुतम् ।
आनीय ब्रह्मनाड्या तां मूर्तिहृत्पङ्कजे न्यसेत् ॥ ३६ ॥

स्थापनं सन्निरोधं च रोचनं चावकुण्ठनम् ।
अमृतीकरणं चाङ्गैर्विधायार्घ्यं प्रदाय तु ॥ ३७ ॥

षडध्वभावनां कृत्वा विद्याकुम्भेऽष्टकेन च ।
निद्रास्त्राभ्यां चाभिषिच्य यजेदर्घ्यादिभिः क्रमात् ॥ ३८ ॥

तद्यथा —

स्नात्वा गणेशमभ्यर्च्य सकलीकृतविग्रहः ।
सामान्यार्घ्येण तद्वाःस्थौ विघ्नक्षेत्रपती यजेत् ॥ ३९ ॥

गङ्गां च यमुनां प्राग्वद् द्वारलक्ष्मीं तथोपरि ।
अस्त्रं क्षिप्त्वा प्रविश्यान्तर्देहल्यां विनिधाय तत् ॥ ४० ॥

वास्तुब्रह्मासनादीष्ट्वा सूपविष्टोऽर्घ्यमर्चयेत् ।
शुद्धीः पञ्च विधायाथ तिलकी पुष्पशेखरः ॥ ४१ ॥

आधारशक्तिं पृथिवीं विद्यां सिंहासनाकृतिम् ।
कृतत्रेतादिकान् पादान् सिंहाकारान् विदिग्गतान् ॥ ४२ ॥

रजस्तमश्च सत्त्वं च कन्दं नालं च पङ्कजम् ।
सूर्यादिमण्डलार्धांशान् ब्रह्मादीन् छदनादिषु ॥ ४३ ॥

मेरुं तत्कर्णिकायां च पत्रद्वादशके गिरीन् ।
दिक्ष्वेकैकं च कोणेषु पूजयेत् केसराह्वयान् ॥ ४४ ॥

प्राग्दले मन्दरगिरिर्दक्षिणे गन्धमादनः ।
विपुलः पश्चिमदले सुपार्श्वश्चोत्तरच्छदे ॥ ४५ ॥

हिमवान् हेमकूटश्च निषधो माल्यवांस्तथा ।
कैलासश्चैव नीलश्च श्वेतशृङ्गी च तान् यजेत् ॥ ४६ ॥

प्रोक्तमार्गेण वाङ्मूर्तिं विद्यादेहं यथापुरम् ।
देवीं चावाह्य मूलाङ्गैः स्थापनाद्यं विधाय तु ॥ ४७ ॥

अर्घ्याद्यैस्तु निवेद्यान्तैरुपचारैर्यजेत् क्रमात् ।
अङ्गानि केसरेष्विष्ट्वा शक्तिद्वादशकं ततः ॥ ४८ ॥

ऋद्धिं रतिं तथा प्रीतिं शान्तिं दिग्दलगां यजेत् ।
योगां सत्यादिके द्वे द्वे कोणच्छदयुगेष्वपि ॥ ४९ ॥

चन्द्रार्कौ भासयन्तौ द्वावूर्ध्वगौ दक्षिणोत्तरे ।
ब्रह्मा च दक्षिणे देव्या विष्णुर्वामे शिवोऽग्रतः ॥ ५० ॥

पश्चिमे मुनयश्चैतान् भित्तिष्वालेख्यगान् यजेत् ।
मेधाप्रज्ञादिके द्वे द्वे द्वाःस्थे द्वारचतुष्टये ॥ ५१ ॥

स्वाशासु लोकपालांश्च हंसं च मुखमण्डपे ।
वीरं विघ्नं तथा मातॄः शास्तारं चण्डिकामपि ॥ ५२ ॥

सोमं च क्षेत्रपालं च स्थापयेत् स्वदिशास्विमान् ।
बलिपीठं च संस्थाप्य पूजयेत् प्रथमेऽहनि ॥ ५३ ॥

द्वितीयेऽह्नि स्वमूलाङ्गैर्मूर्तिलोकेशदैवतैः ।
तृतीये व्याहृतीभिश्च गायत्र्या च जयादिभिः ॥ ५४ ॥

प्रायश्चित्तैश्च हुत्वाथ चतुर्थदिवसे ततः ।
प्राग्वत् संस्नाप्य तु यजेन्मार्तिं निर्माल्यधारिणीम् ॥ ५५ ॥

पूर्णां स्विष्टकृतं चापि हुत्वाग्नीन् स्वहृदम्बुजे ।
योजयेद् द्वादशान्ते वा स्नपयेच्च शताधिकैः ॥ ५६ ॥

सविशेषमथाराध्य दत्त्वाचार्यादिदक्षिणाः ।
निशि भूतबलिं दत्त्वा नित्यपूजां च कल्पयेत् ॥ ५७ ॥
प्राग्वद् वित्तानुसारेण प्रोक्तं कर्ताश्नुते फलम् ।

सरस्वतीप्रतिष्ठाधिकारः ॥

---

नित्योत्सवे सरस्वत्या मेधाद्या द्वारपालिकाः ॥ ५८ ॥

ताभ्यो विकीर्य तु बलिं लोकेशेभ्यो यथापुरम् ।

तत्रायं विशेषः—सरस्वतीपार्षदे नमः तत्पार्षदेभ्यो नमः इति तत्तल्लोकपालनाम्ना बलिं क्षिपेत् ।

सरस्वतीवाहनाय हंसायेत्यग्रमण्डपे ॥ ५९ ॥

विघ्नाय वीरभद्राय मातृभ्यः शास्त्र एव च ।
चण्डिकेन्दुक्षेत्रपेभ्यो मत्यै च प्रक्षिपेद् बलिम् ॥ ६० ॥

कुल्यै च प्रतिभायै च गोपुरद्वारि निक्षिपेत् ।
सम्प्राप्य बलिपीठाग्रं गणानामन्त्रयेत् ततः ॥ ६१ ॥
ये समस्तं जगद् व्याप्य चरन्ति बलिकाङ्क्षया ।
सरस्वतीपारिषदा गृह्णन्तूपहृतं बलिम् ॥ ६२ ॥

इति ।

ततो द्वितीयहारायामष्टदिक्षु स्थिताः क्रमात् ।
दिग्गजास्तु बलिं तेभ्यः स्वाख्याभिः प्रक्षिपेदपि ॥ ६३ ॥
ऐरावतः पुण्डरीकः कुमुदाञ्जनवामनाः ।
पुष्पदन्तः सार्वभौमः सुप्रतीकस्तथाष्टमः ॥ ६४ ॥
बलिपीठेऽथ विश्वेभ्यो दशभ्यः प्रक्षिपेद् बलिम् ।
क्रतुर्दक्षः सुवस्तव्यः का + + मो ध्वनिस्तथा ॥ ६५ ॥
कुरुमानष्टमस्ते तु पीठस्याष्टादीशी स्थिताः ।
मध्यमान्वै कुमुदकैः स्थितस्तेषां बलिं क्षिपेत् ॥ ६६ ॥

सरस्वतीसेनाया रोचमानाय नमः इति पीठोर्ध्वतो मध्ये रोचमानाय निक्षिपेत् ।

नित्योत्सवे बलिं + + + + + + + + + + + ॥ ६७ ॥
+ + + + + + + + + + + + + स्वनामतः ।
लोकपालबलेः पश्चाद् ओं ये भूताः पुरःसदः ॥ ६८ ॥
भगवत्याः सरस्वत्या इत्याद्यैः प्राक्षिपेद् बलिम् ।
तद्वत् तृतीयहारायां गणास्त्वष्टदिशं स्थिताः ॥ ६९ ॥

तद्यथा —

वसवश्चाश्विनौ रुद्राः पित्रादित्यगणा अपि ।
तार्क्ष्यः सप्तर्षिपूर्वाश्च प्रजानां पतयस्ततः ॥ ७० ॥

ते च —

धरो ध्रुवश्च सोमश्चाप्यापश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ तु पूर्वगाः ॥ ७१ ॥
नासत्यदस्रावाग्नेय्यामश्विनौ तु व्यवस्थितौ ।
अजैकपादहिर्बुध्न्यो विरूपाक्षोऽथ रैवतः ॥ ७२ ॥

पिनाकी चेश्वरः स्थाणुः कपाली च त्रियम्बकः ।
बहुरूपो भवश्चेति रुद्रास्त्वेकादश क्रमात् ॥ ७३ ॥

एते दक्षिणे स्थिताः ।

सोमश्च पितृमांस्तद्वद् यमः पितृगणेश्वरः ।
अङ्गिरस्वांस्तथा चाग्निः सप्तमः कव्यवाहनः ॥ ७४ ॥

पितरः पितामहाख्यास्तथैव प्रपितामहाः ।
दशैते पितरः ख्याताः स्थिता निर्ऋतिगोचरे ॥ ७५ ॥

धातार्यमा च मित्रश्च वरुणश्च भगस्तथा ।
इन्द्रो विवस्वान् पूषा च पर्जन्यो दशमः स्मृतः ॥ ७६ ॥

त्वष्टा च विष्णुरित्येते आदित्या द्वादशाम्बुपे ।
तार्क्ष्यश्चारिष्टनेमिश्च गरुडश्चारुणस्तथा ॥ ७७ ॥

अरुणिः कश्यनः काश्यः सुपर्णः सप्त मारुते ।
गौतमश्च भरद्वाजो विश्वामित्रोऽथ कश्यपः ॥ ७८ ॥

जमदग्निस्तथैवात्रिर्वसिष्ठश्चाप्यरुन्धती ।
ध्रुवश्च शिंशुमारश्चेत्येते तूत्तरतः स्थिताः ॥ ७९ ॥

भृगुर्दक्षो मरीचिश्चाप्यङ्गिराः पुलहः क्रतुः ।
पुलस्त्योऽत्रिर्वसिष्ठश्च प्रजानां पतयः स्थिताः ॥ ८० ॥

ऐश इति यावत् ।

ततश्चतुर्थहारायां गन्धर्वाश्चाप्सरोगणाः ।
सिद्धाः साध्यास्तथा नागा विद्याधरगणास्तथा ॥ ८१ ॥

यक्षाः सराक्षसा दैत्याः क्रमाद् दिक्ष्वष्टसु स्थिताः ।
एषां तारादिसंज्ञाभिर्नमोन्तं निक्षिपेद् बलिम् ॥ ८२ ॥

ततस्त्वैन्द्र्यां दिशि गणा वज्रहस्ता महाबलाः ।
इत्यादिमन्त्रैर्विकिरेद् बलिं दशदिशास्वपि ॥ ८३ ॥

उद्दिष्टदिवसान्ते तु गणानुत्सृज्य पूर्ववत् ।
तीर्थयात्रां विधायाथ सविशेषं यजेद् गिरम् ॥ ८४ ॥

अवतार्य ध्वजं चाथ महत्कलशादिभिः ।
कलशैरुपपत्त्या तु स्नपयित्वाभिपूज्य च ॥ ८५ ॥

दक्षिणाश्च प्रदेयानि दत्त्वा प्राग्वद् यथाविधि ।
पूर्वोक्तं फलमाप्नोति वागीश्वर्याः प्रसादतः ॥ ८६ ॥
इत्थं प्रोक्तं यद् बृहत्तन्त्रगीतं दृष्टं बिम्बे यच्च देवोद्भवाख्ये ।
वागीश्वर्यास्तन्त्रमेतत् समासादत्रैवोक्तं तच्च शैवानुसारात् ॥ ८७ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे
उपरिभागे क्रियापादे वागीश्वरीतन्त्र-
पटलः सप्तपञ्चाशः ॥

---

अथाष्टपञ्चाशः पटलः ।

अथ शास्तुः प्रतिष्ठाद्यं कथ्यते तन्त्रचोदितम् ।
मन्त्रश्चाप्यन्तनादौ तु नवमस्वरभूषितौ ॥ १ ॥
बिन्दुनादसमोपेतौ नमश्शब्दस्ततो भवेत् ।
षष्ठाद्यं च सदीर्घोऽग्निर्वायुर्गोप्त्रेपदं ततः ॥ २ ॥
नमोन्तो मूलमन्त्रोऽयं रुद्रार्णस्तारपूर्वकः ।
तारं षष्ठाचतुर्थं तु दीर्घोऽनुस्वारनादवान् ॥ ३ ॥
भूताधिपतयेशब्दो नमोन्तोऽस्यार्चने मनुः ।
रेवन्ताय ततः शास्त्रे गोप्त्रे च प्रभवे तथा ॥ ४ ॥
दीप्त्रे चैव प्रशास्त्रे च षडिमे प्रणवादिकाः ।
नमोन्ता जातियुक्ताः स्युः षडङ्गानि यथाक्रमम् ॥ ५ ॥
खड्गाय क्षुरिकायै च धनुषे च शराय च ।
हुं फडाद्या नमोन्ताः स्युः शस्त्रमन्त्रा यथाक्रमम् ॥ ६ ॥
वामतोऽस्य प्रभा देवी दक्षिणे सत्यकः सुतः ।
स्कन्दो गजाननश्चाथ शाम्बोऽथ मधुकस्तथा ॥ ७ ॥
पीठबाह्ये समासीनास्तन्मन्त्राः स्वस्वनामभिः ।
गोप्ता च पिङ्गलाक्षश्च वीरसेनश्च शाम्भवः ॥ ८ ॥
त्रिनेत्रः शूलभृद् दक्षो भीमरूपस्तथाष्टमः ।
एतेऽष्टमूर्तयः शास्तुः पृथिव्यादिभिरन्विताः ॥ ९ ॥
तारादिका नमोन्ताः स्युस्तेषां मन्त्राः स्वनामभिः ।
आर्यः शास्ता गुहाग्रजः मेनानीर्भूतवल्लभः ॥ १० ॥

रुद्रजो रुद्रवान् कामी वरदो लोकपूजितः ।
नीलाश्वः श्वेतमातङ्गः श्यामः पीतानुलेपनः ॥ ११ ॥
रक्तमालाध(रश ? रः शू )रो मार्यि मातृगणप्रियः ।
कालवासा गणाध्यक्षः खड्गहस्तो धनुर्धरः ॥ १२ ॥
सहजायो जनावेशः साधुः संसाररक्षकः ।
मधुमान् शम्बरश्चैते ह्यष्टाविंशतिनामभिः ॥ १३ ॥
मन्त्राः स्युर्भूतनाथस्य तारपूर्वनमोन्तकैः ।
जपेऽर्चायां च नत्यन्ता होमे स्वाहान्तयोजिताः ॥ १४ ॥
महोत्सवबलावेभिरष्टाविंशतिनामभिः ।
भूतसेनाधिपतयो बाह्ये योज्या भवन्ति हि ॥ १५ ॥
भूतनाथश्चतुर्थ्यन्तो विद्महेपदयोजितः ।
भवपुत्रस्तथास्यान्ते धीमहि तन्न इत्यपि ॥ १६ ॥
शास्ता प्रचोदयादेषा गायत्री तारपूर्विका ।

मन्त्रोद्धाराधिकारः ।

---

कनिष्ठदशतालेन शास्तुर्बेरं तु कारयेत् ॥ १७ ॥
प्रोक्तमानादिसंयुक्तं सौम्यवक्त्रं चतुर्भुजम् ।
प्रभूतसिंहासनाब्जे स्वासीनं वामपादतः ॥ १८ ॥
दक्षिणेन तु पादेन लम्बेनाक्रान्तपङ्कजम् ।
शरं च क्षुरिकां चापं खड्गं बिभ्रच्चतुर्भुजम् ॥ १९ ॥
नवयौवनरम्याङ्गं नीलकुञ्चितमूर्धजम् ।
पद्मायतविशालाक्षं पूर्णेन्दुसदृशाननम् ॥ २० ॥
रत्नजालोल्लसन्मौलिं सुमृष्टमणिकुण्डलम् ।
हारिहाराभिरामाङ्गमाबद्धोदरबन्धनम् ॥ २१ ॥
रत्नाङ्गुलीयकटकचारुकेयूरराजितम् ।
कटिसूत्रोल्लसद्रक्तवसनं चारुनूपुरम् ॥ २२ ॥
निबिडाबद्धोनाकेशं श्यामलं कोमलाकृतिम् ।
रक्ताकल्पं सुलीनांसं दिव्यरूपं मनोरमम् ॥ २३ ॥

प्रभां च नवतालेन दिव्यरूपामलङ्कृताम् ।
उपविष्टां दक्षिणेन लम्बमानाङ्घ्रिपङ्कजाम् ॥ २४ ॥
नीलोत्पलकरां शास्तुर्वामभागावलम्बिनीम् ।
अष्टवर्षार्भकप्रख्यं सत्यकं चाष्टतालतः ॥ २५ ॥
शास्तुर्दक्षिणपार्श्वस्थं दिव्याकारमलङ्कृतम् ।
एवं बेराणि संपाद्य प्रतिष्ठामथ कारयेत् ॥ २६ ॥
प्राग्वत् षोडशपादाढ्ये त्वधिवासनमण्डपे ।
क्षुरिकेशश्च खड्गेशो धन्वेशश्च शरेश्वरः ॥ २७ ॥
प्रागादितोरणाः पूज्याः चत्वारोऽष्टौ ध्वजास्तथा ।
ऐन्द्रश्चैव तथाग्नेयो याम्यो नैर्ऋतवारुणौ ॥ २८ ॥
वायव्यश्चाथ कौबेरश्चैशानश्चाख्ययाभिहिताः ।
अर्घ्यादिभिस्तु नत्यन्तं सर्वान् स्वाख्याभिरर्चयेत् ॥ २९ ॥
वीरबाहुं महावीर्यं विद्युज्जिह्वं विलासिनम् ।
तीक्ष्णं च तीक्ष्णनेत्रं च काकाक्षं च भवोद्भवम् ॥ ३० ॥
द्वारेषु क्रमशो द्वौ द्वौ कुम्भस्थान् पूजयेदिमान् ।
अथ पुण्याहविकिरक्षेपात् कुम्भायुधे यजेत् ॥ ३१ ॥
अश्वारूढं भूतनाथं कुम्भेऽस्त्रं गजवाहनम् ।
स्त्रीरूपं क्षुरिकास्त्रं तद् रक्ताकल्पं त्रिलोचनम् ॥ ३२ ॥
बद्धचण्डातकं पिङ्गज्वलितोर्ध्वशिरोरुहम् ।
अभ्यर्च्य तद्भ्रमादूर्ध्वं नवकुण्डाहिताग्निषु ॥ ३३ ॥
शास्तुर्मूलाङ्गमूर्तीनामावाहनहुतादनु ।
प्राग्वदाकारशुद्धिं च नयनोन्मीलनं तथा ॥ ३४ ॥
जलाधिवासनं ग्रामभ्रमणं स्नपनं तथा ।
पूर्ववच्छयनं वेद्यां कुर्याच्छैवोक्तमार्गतः ॥ ३५ ॥
ततः कुम्भाग्निद्राष्टमूर्तिकुम्भादिपूजनम् ।
पूर्वोक्ता मूर्तयो ह्यष्टौ गोप्त्राद्याः शास्तृरूपिणः ॥ ३६ ॥
प्राग्वत् त्रितत्त्वतरेशमनून् न्यस्य पृथक् क्रमात् ।
पृथ्व्यादियुक्ता गोप्त्राद्यास्ततस्तु गुरुमूर्तिपाः ॥ ३७ ॥

---

१. नै¹ क. पाठः.

एभिरेव यथापूर्वं हुत्वा स्पृष्ट्वाभिपूज्य च ।
बेरे ज्ञानाह्वयां शक्तिं पीठे शक्तिं क्रियात्मिकाम् ॥ ३८ ॥
धारिकाद्याश्च विन्यस्य संपूज्य च यथाविधि ।
ततः प्रातः कृतस्नानो गुरुर्मूर्तिधरैः सह ॥ ३९ ॥
कृतनित्यक्रियो लग्ने गर्भागारं प्रविश्य तु ।
मानुषे तु पदे कूर्मशिलां विन्यस्य पूर्ववत् ॥ ४० ॥
रत्नादिपञ्चवर्गांस्तु न्यसेत् पीठं तथोपरि ।
प्रतिमां च प्रतिष्ठाप्य कुम्भान् मूलं च तद्धृदि ॥ ४१ ॥
नियोज्य मूर्तिं तन्मन्त्रैर्देहं च क्षालयेत् ततः ।
आधारादुद्गतं ज्योतिर्हृत्पद्मस्थं सुषुम्नया ॥ ४२ ॥
नीत्वोर्ध्वं बिन्दुतो व्योम तदब्जेन्दुसमन्वितम् ।
पुष्पाञ्जलौ तु संक्रान्तं नादबिन्दूपबृंहितम् ॥ ४३ ॥
प्लुतान्तमुच्चरन् मन्त्रं न्यस्येन्मूर्तिहृदम्बुजे ।
स्थापनादीनि कृत्वाङ्गैर्निद्रामूर्तिघटाम्बुभिः ॥ ४४ ॥
अभिषिच्य स्वमूलाङ्गैरध्वनः षड् विभावयेत् ।
मूलाङ्गैश्च स्वगायत्र्या मन्त्राध्वास्य प्रकीर्तितः ॥ ४५ ॥
एतेषां तु पदैरेव पदाध्वानं च कल्पयेत् ।
शेषाध्वनो यथापूर्वं परिभाव्यार्चयेत् ततः ॥ ४६ ॥

तद्यथा —

स्नात्वा तु सकलीकृत्य विघ्नं द्वारं च पूजयेत् ।
क्षुरिकाखड्गपाणी द्वौ द्वाःस्थावुभयतो यजेत् ॥ ४७ ॥
यक्षं विद्याधरं द्वारश्रियं चोपरि पूजयेत् ।
अस्त्रं क्षिप्त्वा प्रविश्यान्तर्देहल्यां विनिधाय तत ॥ ४८ ॥
वास्तुब्रह्मासनानीष्ट्वा मूलाङ्गैरर्घ्यमर्चयेत् ।
गन्धपुष्पकुशक्षीरतिलसिद्धार्थकाक्षतैः ॥ ४९ ॥
अर्घ्यं स्याद् भूतनाथस्य तिलपुष्पाक्षताम्बुभिः ।
चन्दनं च निशा पाद्यमथ पद्मं च चन्दनम् ॥ ५० ॥

लवङ्गं वारि चाचामं हृदा सर्वं समर्पयेत् ।
पञ्चशुद्धीर्विधायास्त्रप्राकारं चालयेद् बहिः ॥ ५१ ॥

तिलकी सशिखापुष्पः शक्तिपीठं धरात्मकम् ।
प्रभूतसिंहासनाय सर्वशक्तिमयाय च ॥ ५२ ॥

नम इत्यभिपूज्याङ्घ्रीन् धर्मादीन् सिंहविग्रहान् ।
तमःसत्त्वरजःपद्मं शक्तिं चाष्टौ दलाग्रगाः ॥ ५३ ॥

गोप्त्रीं च पिङ्गलाक्षीं च वीरसेनां च शाम्भवीम् ।
त्रिनेत्रां शूलिनीं दक्षां भीमरूपां च पूजयेत् ॥ ५४ ॥

नवमीं तु प्रभां वामे दक्षिणे सत्यकं तथा ।
ततो मूर्तिं मन्त्रदेहं संकल्प्यावाहयेद् विभुम् ॥ ५५ ॥

आधारा(द्धु ? दु)द्गतं प्राग्वज्ज्योतिर्मात्रं चिदात्मकम् ।
आवाह्य स्थापनाद्यैश्च निवेद्यान्तं तु पूजयेत् ॥ ५६ ॥

केसरेषु पुनः स्वाङ्गैर्दलाग्रेष्वष्टशक्तिभिः ।
विघ्नाद्यैः पीठबाह्येऽथ स्थापयेत् परिवारकान् ॥ ५७ ॥

क्षुरिकाखड्गपाणी द्वौ स्थितौ विन्यस्य बाह्यतः ।
स्वाशासु लोकपालानप्यर्घं तु मुखमण्डपे ॥ ५८ ॥

वीरं विघ्नं सप्तमातृः सोमं स्वाशासु विन्यसेत् ।
बलिपीठं च विन्यस्य जुहुयुर्लोकपाह्वयैः ॥ ५९ ॥

द्वितीयेऽह्न्यपि पूर्वोक्तसमिदाज्यादिभिः क्रमात् ।
मूलाङ्गैरपि गायत्र्या मूर्तिशक्त्यष्टकाह्वयैः ॥ ६० ॥

अष्टाविंशतिकृत्वस्तु जुहुयुः समिदादिभिः
तृतीयदिवसे हेतिमन्त्रैरष्टोत्तरं शतम् ॥ ६१ ॥

हुत्वा जयादिभिश्चाथ प्रायश्चित्तैर्जुहोति च ।
चतुर्थदिवसे वह्नीनायोज्यात्मनि देशिकः ॥ ६२ ॥

निर्माल्यधारिणं चैशे घोषवन्तं न्यसेद् यजेत् ।
एकाशीतिघटैरुक्तमार्गेण स्नपयेद् विभुम् ॥ ६३ ॥

दक्षिणाः पूर्ववद् दत्त्वा क्षिप्त्वा भूतबलिं निशि ।
नित्यपूजादिसिद्ध्यर्थं संकल्प्य विभवादिकम् ॥ ६४ ॥
कर्ता कामानवाप्नोति दृष्टादृष्टफलोदयात् ।

भूतनाथप्रतिष्ठाधिकारः ।

---

नित्योत्सवे द्वारपालौ क्षुरिकाखड्गधारिणौ ॥ ६५ ॥
लोकेशा वाहनं चाश्वस्तेभ्यस्तु विकिरेद् बलिम् ।
शास्तृपारिषदेन्तं तु परिषद्भ्योऽथ तस्य च ॥ ६६ ॥
लोकेशाद्यादिनत्यन्तं निक्षिप्य बलिमादरात् ।
ओं शास्तृवाहनाय नमः ओम् अश्वाय नमः इत्यश्वाय बलिं क्षिपेत्
वीरविघ्नेशमातृभ्यः सोमघोषवतोस्ततः ॥ ६७ ॥
तीक्ष्णाय तीक्ष्णनेत्राय गोपुरद्वारि निक्षिपेत् ।
बलिपीठात् पुरः स्थित्वा त्वनेनामन्त्रयेद् गणान् ॥ ६८ ॥

ओं

शाम्बादीनां गणा ये तु कोटिकोटिगुणोत्तराः ।
सर्वे सुप्रीतमनसः प्रतिगृह्णन्त्विमं बलिम् ॥ ६९ ॥
ततोऽष्टदिक्षु प्रागादिस्थिता गोप्त्रादिमूर्तयः ।
गोप्ता च पिङ्गलाक्षश्च वीरसेनश्च शाम्भवः ॥ ७० ॥
त्रिनेत्रः शूलभृद् दक्षो भीमरूपस्तथाष्टमः ।
तेभ्यः क्षेप्यो बलिश्चाथ बलिपीठाष्टदिक्स्थिताः ॥ ७१ ॥
वीरबाहुर्महावीर्यो विद्युज्जिह्वो विलासवान् ।
सुतीक्ष्णस्तीक्ष्णदंष्ट्रश्च ताराक्षश्च भवोद्भवः ॥ ७२ ॥
भूतेशाख्यः कुमुदके स्थितस्त्वेषां बलिं क्षिपेत् ।
स्याद् भूतनाथसेनस्तु पीठे पङ्कजमध्यतः ॥ ७३ ॥
तस्मै क्षेप्यो बलिर्नाम्ना तारपूर्वं नमोन्तकम् ।
एष नित्योत्सवविधिस्तुल्यश्चैव महोत्सवे ॥ ७४ ॥
विशेषः कथ्यते लेख्यो ध्वजेऽश्वः पूज्य एव च ।
शास्तृनामान्वितैर्मन्त्रैर्गणानावाहयेदपि ॥ ७५ ॥

लोकेशबलिदानान्ते

ओं शास्तुर्भगवतो ये भूताः पुरस्सद इत्यादिभिः,

सर्वेभ्योऽपि बलिं क्षिपेत् ।

तद्वत् तृतीयहारायामष्टाविंशतिमूर्तयः ॥ ७६ ॥

शास्तुरेव गणाध्यक्षाः स्थितास्तेभ्यो बलिं क्षिपेत् ।

आर्यः शास्ता गुहासन्नः सेनानीश्चैन्द्रदिक्स्थिताः ॥ ७७ ॥

भूतवल्लभनामा च रुद्रतेजाश्च रूपवान् ।

एते त्रयोऽग्निदिक्संस्थास्त्वथ कामी वरप्रदः ॥ ७८ ॥

लोकार्चितश्च नीलश्च चत्वारो दक्षिणे स्थिताः ।

श्वेतमातङ्गवान् श्यामी पीतालेपश्च नैर्ऋते ॥ ७९ ॥

रक्तमालाधरः शूरो मायी मातृगणप्रियः ।

पश्चिमे त्वथ वायव्ये कालवासा गणाग्रणीः ॥ ८० ॥

खड्गहस्तत्रयस्त्वेते तथोदीच्यां धनुर्धरः ।

सहजायो जनावेशः साधुश्चैते व्यवस्थिताः ॥ ८१ ॥

संसाररक्षकस्तद्वन्मधुमान् शम्बरस्तथा ।

ऐशभागे त्रयस्त्वेते भूतसेनाधिपाः स्थिताः ॥ ८२ ॥

विकीर्य बलिमेतेभ्यस्तद्वाह्येऽष्टदिशास्वपि ।

ओम्

ऐन्द्यां दिशि गणा ये तु वज्रहस्ता महाबलाः ॥ ८३ ॥

इत्यादिभिः क्रमात् प्राग्वत् पूर्वोक्तं लभते फलम् ।

इति ह कथितमेतद् भूतनाथस्य तन्त्रं
निगदितमपि बिम्बे यच्च देवोद्भवाख्ये ।
तदखिलमवलोक्य स्थापनाद्युत्सवान्तं
विमलमतिभिरूह्यं शैवकृत्यानुसारात् ॥ ८४[1] ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे
उपरिभागे क्रियापादे शास्तृतन्त्र-
पटलोऽष्टपञ्चाशः ॥

---

१. 'अ' क. पाठः.

## अथ एकोनषष्टितमः पटलः ।

अथ मातृप्रतिष्ठाद्यं लिख्यते शुद्धपक्षतः ।
स्वच्छन्दादिषु यत् प्रोक्तं मातृतन्त्रेषु चैव हि ॥ १ ॥
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही च तथेन्द्राणी चामुण्डी सप्तमी स्मृता ॥ २ ॥
तासां पूर्वापरासीनौ वीरभद्रश्च विघ्नराट् ।
याद्यक्षराणि हान्तानि शक्रीस्वरयोगतः ॥ ३ ॥
बिन्दुमन्त्यष्ट बाजानि खान्तं लम्बोदरस्य हि ।
तारं बीजं नमश्शब्दस्ततो भगवतीत्यपि ॥ ४ ॥
संबुद्ध्यन्तं स्वना(म्ना ? मा)पि मातृमन्त्रादितो भवेत् ।
तदूर्ध्वतः क्रमान्मन्त्रा लिख्यन्तेऽत्र पृथक् पृथक् ॥ ५ ॥

ऋग्यजुस्सामाथर्वकमण्डलुकूर्चधारिणि ! नमोनम इति ब्रह्माणीमन्त्रः । देवि ! परशुधारिणि ! श्वेतरूपिणि ! महेश्वरि ! नमोनमः इति माहेश्वर्याः । शक्तिधारिणि ! मयूरवाहिनि ! कुक्कुटध्वाजिनि ! कुङ्कुमवर्णिनि ! कौमारि ! नमोनमः कौमार्याः । शङ्खचक्रधारिणि ! गरुडवाहिनि ! वैष्णवि ! नमोनमः वैष्णव्याः । हलमुसलधारिणि ! दंष्ट्रिणि ! सूकरान(नि ? ने !) सिंहवाहिनि ! वाराहि ! नमोनमः वाराह्याः । वज्रधारिणि ! गजवाहिनि ! श्यामवर्णिनि ! नमोनमः इन्द्राण्याः । कपालधारिणि ! नीलाम्बुवर्णिनि ! प्रेतवाहिनि ! हुङ्कारिणि ! नमोनमः चामुण्ड्याः ।

वीरभद्रस्य तारं च स्वबीजं लकुलीश्वरः ।
पुरुषश्च चतुर्थ्यन्तः पक्षसूत्राभिधारिणे ॥ ६ ॥
ध्रुवाय पतये योगरूपायेति पदत्रयम् ।
व्यापिने सर्वपूर्वं तु वीरभद्रपदं ततः ॥ ७ ॥
चतुर्थ्यन्तं नमोयुक्तं वीरभद्रमनुः स्मृतः ।
तारं स्वबीजं चादौ स्याद् विघ्नेश्वरपदं तथा ॥ ८ ॥
गणाधिपतिशब्दश्च हस्तिवक्त्रपदं ततः ।
एते गणपतिः सर्वे चतुर्थ्यन्तो नमो मनुः ॥ ९ ॥
गणपतेर्मूलमन्त्रः ।

---

१. 'ण' क. पाठः. २. 'न्ता' ख. पाठः

बहुबेरप्रतिष्ठायामेते मन्त्राः क्रमोदिताः ।
एकबेरे तु तारं च नादः षष्ठस्वरान्वितः ॥ १० ॥
बिन्दुनादान्वितो बीजं नमो भगवतीत्यपि ।

त्रिनेत्रे ! कालि ! कालवर्णिनि ! अष्टभुजे ! शूलकपालधारिणि ! प्रेतवाहिनि ! सुरुधिरस्नेहसंपूर्णवक्त्रे ! चामुण्डि ! नमोनम इति ।

स्वस्वबीजानि दीर्घैस्तु स्वरैर्युक्तान्यनुक्रमात् ॥ ११ ॥
अस्त्रान्तानि षडङ्गानि सर्वमन्त्रेषु कल्पयेत् ।
हंसो वृषो मयूरश्च गरुडः सिंहवारणौ ॥ १२ ॥
प्रेतश्च सप्तमातॄणां वृषाखू वीरविघ्नयोः ।
वाहनानि ध्वजाश्च स्युर्ब्राह्म्यादीनां नव क्रमात् ॥ १३ ॥
कूर्चं शूलं शक्तिचक्रे हलं वज्रं कपालकम् ।
अक्षसूत्रं चाङ्कुशं च नवैतान्यायुधान्यपि ॥ १४ ॥
वाहनाद्यध्वजायै च विद्महेऽथायुधाभिधा ।
हस्तायै धीमहीत्युक्त्वा तन्नः स्वाख्या प्रचोदयात् ॥ १५ ॥
इति क्रमेण गायत्र्यो ब्राह्म्यादीनां भवन्ति हि ।
तारं बीजं च लकुली ईश्वरायाथ विद्महे ॥ १६ ॥
अक्षमालाधरायेति धीमहे तन्न इत्यपि ।
वीरभद्रः प्रकारश्च चोदयादिति योजिता ॥ १७ ॥

वीरभद्रगायत्री ।

तारं बीजं चैकदन्तश्चतुर्थ्यन्तोऽथ विद्महे ।
हस्तिवक्त्रः चतुर्थ्यन्तो धीमहे तन्न इत्यपि ॥ १८ ॥
ततो गणपतिः प्रान्ते चोदयादिति चोदिताः ।

विघ्नेश्वरगायत्री ।

### मन्त्रोद्धारः ।

---

स्वदेवसदृशाकारभुजास्यनयनायुधाः ॥ १९ ॥
स्त्रीरूपास्तत्समाकल्पाः षण्मात्रप्रतिमाः स्मृताः ।
बहुबेरे तु चामुण्डा कृष्णवर्णा चतुर्भुजा ॥ २० ॥

तुङ्गस्तननिबद्धाहिर्वृत्तपिङ्गत्रिलोचना ।
वामे कपालं पाशं च दक्षिणे शूलमप्यसिम् ॥ २१ ॥
बिभ्राणा वा डमरुकं ज्वलत्कपिलमूर्धजा ।
सर्पकुण्डलकेयूरकटकोदरबन्धना ॥ २२ ॥
नानाहिहारग्रैवेयकटिसूत्राङ्घ्रिभूषणा ।
दंष्ट्रोज्ज्वलमुखी रक्तमाल्यगन्धाम्बरादिका ॥ २३ ॥
रौद्रसाम्याकृतिः स्यादप्येकबेरे तु कथ्यते ।
करालकालमेघाभा वृत्तपिङ्गत्रिलोचना ॥ २४ ॥
ज्वलदग्निशिखाकारकपिशोर्ध्वशिरोरुहा ।
दंष्ट्रोत्कटमुखी तुङ्गपीनवृत्तपयोधरा ॥ २५ ॥
रक्तकञ्चुकिनी कृष्णभुजगस्तनबन्धना ।
नतमध्या सुपुष्टाङ्गी दिव्या नानाहिभूषणा ॥ २६ ॥
वामेऽहिकुण्डलान्यत्र परेतशिशुकर्णिका ।
नानाभटशिरोमाला किङ्किणीजालभीषणा ॥ २७ ॥
कपालखेटघण्टाहिपाशान् वामैस्तु दक्षिणैः ।
शूलखड्गौ च बेतालं ध्वनड्डमरुकं तथा ॥ २८ ॥
बिभ्राणाष्टभुजा भीमा प्रेतसिंहासनं पदा ।
दक्षिणेन समाक्रम्य निविष्टा कुञ्चितेन तु ॥ २९ ॥
आलम्बितेन वामेन पादेनाक्रान्तदारुका ।
भूतप्रेतपिशाचाद्यैः शाकिनीडाकिनीगणैः ॥ ३० ॥
परीता योगिनीभिश्च वीररौद्रोद्भटाकृतिः ।
चामुण्डायाः प्रतिमा त्वेवं भवेच्छैलादिनिर्मिता ॥ ३१ ॥
दक्षिणामूर्तिसदृशी वीरभद्रतनुर्भवेत् ।
गणेशस्यापि पूर्वोक्तलक्षणा प्रतिमा भवेत् ॥ ३२ ॥
प्राग्द्वारं वोत्तरद्वारं विमानं तिर्यगायतम् ।
मातृणां तु भवेत् तद्वदेकबेरेऽपि सम्मतम् ॥ ३३ ॥
कृत्वा विमानं बेरं च प्रतिष्ठामथ कारयेत् ।
कृत्वाधिवासमनायोक्तं मण्डपं षोडशाङ्घ्रिकम् ॥ ३४ ॥

अलङ्कृत्य वितानाद्यैर्विन्यसेद् द्वारतोरणान् ।
प्रमोदन्यभयाशान्तिशुभद्राख्याश्च तोरणाः ॥ ३५ ॥
तद्देवताः क्रमात् कुम्भी निकुम्भी वज्रभीषणा ।
मञ्जिणी चेत्यथैतेषां मूलयोर्द्वारकुम्भगाः ॥ ३६ ॥
दूतिका पालिना चाथ दण्डिनी भवहस्तका ।
पाशिनी वारुणी चैव शङ्खिनी पद्मिनी च ताः ॥ ३७ ॥
ध्वजाश्च हंसवृषभवर्हिताक्ष्यमृगाग्निपैः ।
गृध्रपैशाचवृषभैर्मूषिकेन च चिह्निताः ॥ ३८ ॥
बहुबेरे त्वेकबेरं पिशाचाङ्को भवेद् ध्वजः ।
पुण्याहविकिरक्षेपात् कुम्भास्त्रावभिपूजयेत् ॥ ३९ ॥
कुम्भे यजेत् तु चामुण्डां पिशाचारूढविग्रहाम् ।
वर्धन्यां सिंहगं त्वस्त्रं कृष्णं स्त्रीरूपभीषणम् ॥ ४० ॥
त्रिशूलाङ्कशिरस्कं तत् कपालासिकरं यजेत् ।
तत्परिभ्रमणादूर्ध्वं नवकुण्डेषु पूर्ववत् ॥ ४१ ॥
अग्निं विभज्य संस्थाप्य चामुण्डां मध्यकुण्डके ।
ब्रह्माण्याद्यास्तु पूर्वादिकुण्डेष्विष्ट्वा जुहोति च ॥ ४२ ॥
तत्तन्मन्त्रैस्तु समिधो घृतं चैवं चरूंस्तिलान् ।
सर्षपाञ्छालिसिद्धार्थान् सक्तूंश्च जुहुयात् क्रमात् ॥ ४३ ॥
ब्राह्म्यादीनां तु समिधः पलाशप्लक्षसम्भवाः ।
औदुम्बर्यस्तथा बैल्वाः करञ्जेन्द्रतरूद्भवाः ॥ ४४ ॥
रक्तश्वेतवटौ चाथ पैप्पलाश्च क्रमान्नव ।
अभावे समिधां यासां ब्राह्मास्तत्र पलाशजाः ॥ ४५ ॥
तत्तन्मन्त्रैः समिद्भिश्च घृतं हुत्वा शतं शतम् ।
कुर्यादाकारशुद्धिं च नेत्रोन्मीलनकर्म च ॥ ४६ ॥
जलाधिवासनं ग्रामभ्रमणं कारयेत् ततः ।
कृत्वा तु पूर्ववद् वेदिं शालिभिस्तण्डुलैरपि ॥ ४७ ॥
मध्यादीशानपर्यन्तं शय्याः कृत्वा पृथक् पृथक् ।
एकैकवर शय्या स्यात् पञ्चाङ्गी वेदिमध्यतः ॥ ४८ ॥

चामुण्डीं शाययेन्मध्ये ब्राह्मयाद्याः पूर्वतः क्रमात् ।
प्रत्येकं कुम्भमेकैकं बेरादीन् न्यस्य तूत्तरे ॥ ४९ ॥
तत्तद्वाहनशस्त्राणि तेषु हैमानि निक्षिपेत् ।
चामुण्डाद्यास्तु मध्यादिक्रमात् कुम्भेषु विन्यसेत् ॥ ५० ॥
वीरभद्रमुदक्कुम्भे त्वैशकुम्भे विनायकम् ।
पिधानकूर्चवस्त्राद्यैः प्राग्वदाभूष्य पूजयेत् ॥ ५१ ॥
गायत्रीभिः समालभ्य गन्धाद्यैरभिपूजयेत् ।
अथ वेद्या बहिर्दिक्षु परिवारघटाष्टकम् ॥ ५२ ॥
विन्यस्यावाह्य च यजेच्छक्तीरैन्द्यादिकाः क्रमात् ।
ऐन्द्र्याग्नेयी च याम्या च नैर्ऋती वारुणी तथा ॥ ५३ ॥
वायव्या चैव कौबेरी तथैशान्यष्टमी स्मृता ।
चतुर्भुजास्त्रिणेत्रास्ताः शूलपाशोर्ध्वपाणयः ॥ ५४ ॥
कृताञ्जलिद्वयकरा वर्णैर्दिक्पतिभिः समाः ।
बलिपीठे प्रतिष्ठार्थं पूतमन्यं घटं न्यसेत् ॥ ५५ ॥
उग्रसेनां घटे तस्मिन् श्यामां दंष्ट्रोत्कटाननाम् ।
खड्गं दक्षिणहस्तेन वामेन स्वकटिस्पृशम् ॥ ५६ ॥
भूषितां द्विभुजां भीमामावाह्याभ्यर्चयेत् ततः ।
आत्मादितत्त्वतत्त्वेशान् मूर्तिमूर्तीश्वरानपि ॥ ५७ ॥
वारिकाद्यास्त्रिभागेषु प्राग्वज्जान्वादिषु न्यसेत् ।
तत्त्वतत्त्वेशपृथ्व्याद्याः शर्वाद्याश्च यथापुरम् ॥ ५८ ॥
वीरविघ्नेशयोर्बेरे प्रत्यङ्गं क्रमशो न्यसेत् ।
प्राग्वद्धुत्वा तु तन्मन्त्रैर्गुरुर्मूर्तिधरास्तथा ॥ ५९ ॥
स्पृशेयुस्त्रिषु भागेषु सिञ्चेयुः कुम्भवारिभिः ।
बेरे ज्ञानीं क्रियाशक्तिं पीठे प्राग्वद् विभावयेत् ॥ ६० ॥
पूर्ववच्च निवेद्यान्तं जुहुयाद् वासवादिषु ।
+ + + + + यान्येन ब्रह्मजप्तानमन्त्रतः ॥ ६१ ॥

---

१. 'रौद्रिस्य', २. 'ठ' ख. पाठः. ३. 'याम्यनेन' क. पाठः.

त्रैयम्बकायंकुमारात्[1] तथा यच्चेयमादिना ।
इदंविष्ण्वादिना स्वास्तिनइन्द्राद्यात् तथेशतः ॥ ६२ ॥
गणानांत्वादिना चाज्यं चर्वाद्यैः स्वस्वमूलतः ।
बहुबेरे भवेदेवमेकबेरे तु पूर्ववत् ॥ ६३ ॥
चामुण्डायाः परितः कुम्भानष्टौ विन्यस्य तेष्वपि ।
भवानीं चैव शर्वाणीमुग्रां पाशुपतामपि ॥ ६४ ॥
शाङ्करीं शशिनीं भीमां रुद्राणीं च न्यसेद् यजेत् ।
मध्ये कुण्डे तु चामुण्डामावाह्य जुहुयुस्तथा ॥ ६५ ॥
तथैव पुरुषाघोरवामसद्यैर्दिशास्वपि ।
अङ्गैरपि च गायत्र्या कोणेषु जुहुयात् क्रमात् ॥ ६६ ॥
अजामांसप्रतिनिधिं माषापूपं जुहोति च ।
क्षुतनिष्ठीवनादौ च मौनभङ्गादिके तथा ॥ ६७ ॥
आचम्य जुहुयादाज्यं व्याहृतीभिरनुक्रमात् ।
पूर्णां हुत्वा स्विष्टकृतं भूतेभ्यो विकिरेद् बलिम् ॥ ६८ ॥
तिलान्नेन गुळाज्याभ्यां दध्ना रक्तौदनेन च ।
मांसस्य प्रतिरूपेण मिश्रितेन क्षिपेद् बलिम् ॥ ६९ ॥
प्राच्यां तु क्षेत्रपालश्च पिशाचपितृराक्षसाः ।
नागाश्चैवासुरा यक्षा गन्धर्वाश्च व्यवस्थिताः ॥ ७० ॥
ऊर्ध्वायां दिशि भूतानि चाधो भूम्यम्बुवासिनः ।
तेभ्यः स्वनामधेयैस्तु नमोन्तैर्विकिरेद् बलिम् ॥ ७१ ॥
ततः कन्यासप्तकं च ब्राह्मणं च तथापरम् ।
भोजयेद् पायसाज्याद्यैर्विप्रानन्यांश्च लिङ्गिनः ॥ ७२ ॥
स्त्रियश्च मातृभक्ता यास्ताश्च भक्तांश्च भोजयेत् ।
तथैव नृत्तगीताद्यैः कृत्वा जागरणं निशि ॥ ७३ ॥
प्रातः स्नात्वा मूर्तिधरैः सह सन्ध्यां समाप्य च ।
गुरुः संपूज्य बेराणि बेरं वा किञ्चिदर्चयेत् ॥ ७४ ॥
गर्भगेहे तु पैशाचे पदे पुण्याहवाचिते ।
पीठानि वैकं पीठं वा न्यसेत् कूर्मशिलोपरि ॥ ७५ ॥

---

१. 'कठुमार्या तथा' क. पाठः.

रत्नादिपञ्चवर्गांश्च वाहनान्यायुधानि च ।
हैमानि तत्तद्गर्तेषु बीजैस्तैस्तैर्विनिक्षिपेत् ॥ ७६ ॥

ततस्तु लग्ने संप्राप्ते मरण्यास्लाम्बुशुद्धया ।
मङ्गलाङ्कुरदीपादिवाद्यगीतसमन्वितम् ॥ ७७ ॥
वेदघोषैश्च बेराणि रथादावधिरोप्य तु ।
घृतदूर्वाक्षतदधिपुष्पमारोप्य मस्तके ॥ ७८ ॥
प्रदक्षिणं परिक्रम्य गर्भागारं प्रवेशयेत् ।
लग्ने स्वबीजमन्त्रैस्तु स्थापयेत् प्रतिमाः क्रमात् ॥ ७९ ॥

पूर्वादिपश्चिमान्तं तु ब्राह्म्याद्यैरेकसूत्रगाः ।
प्रतिष्ठाप्योत्तरास्यास्ता अन्योन्यं द्व्यङ्गुलान्तरम् ॥ ८० ॥

ब्रह्माण्याश्चैव चामुण्ड्याः पार्श्वसूत्रद्वयोत्तरे ।
प्राक्प्रतीच्योर्वीरभद्रः स्थाप्यो विघ्नाधिपस्तथा ॥ ८१ ॥
प्रत्यङ्मुखो वीरभद्रः प्राङ्मुखः स्याद् विनायकः ।
एकबेरे तु मध्ये स्यात् प्राङ्मुखी वाप्युदङ्मुखी ॥ ८२ ॥

ततः प्रक्षाल्य बेराणि तत्तद्धृदयपङ्कजे ।
तत्तद्बीजानि विन्यस्य स्नपयेत् स्वस्वकुम्भतः ॥ ८३ ॥

स्वस्वमन्त्रैः स्वगायत्र्या मन्त्राध्वानं तु विन्यसेत् ।
तत्तत्पदैः पदाध्वानं शेषान् पूर्ववदध्वनः ॥ ८४ ॥

ततो गुरुः स्वमूलाब्जकुण्डलिन्याः समुद्गताम् ।
परां शक्तिं सूक्ष्मरूपां विद्युल्लेखानुकारिणीम् ॥ ८५ ॥

नाडीमार्गेण नीत्वोर्ध्वं हृद्बिन्दुद्वादशान्तगाम् ।
तद्व्योमपद्ममध्येन्दुकलामृतरसाप्लुताम् ॥ ८६ ॥

चिन्मात्रया तु तच्छक्त्या नीत्वैक्यं बीजमुच्चरन् ।
हंससंपुटमध्यस्थां नादान्तस्वरभूषिताम् ॥ ८७ ॥

पुष्पाञ्जलौ सुसंक्रान्तां + + + + + + + + ।
गुणातीतामनौपम्यां वेदवेद्यां निरञ्जनाम् ॥ ८८ ॥

आनीय नाडीमार्गेण देव्यां हृत्पङ्कजे न्यसेत् ।
स्थापनं चाथ सान्निध्यं सन्निरोधावकुण्ठनम् ॥ ८९ ॥

प्रोचनामृतीकारौ तद्गायत्र्या समाचरेत् ।
आकयस्याथ परितः परिवाराष्टकं न्यसेत् ॥ ९० ॥
कुम्भैरैन्द्यादिसंयुक्तैरभिषिच्य नियोजयेत् ।
उग्रसेनीं घटस्थां तां बलिपीठेऽभिषेकतः ॥ ९१ ॥
मध्ये नियोज्य संस्थाप्य ततो विधिवदर्चयेत् ।

तद्यथा —

स्नात्वा सन्ध्यामुपास्याथ सकलीकृतविग्रहः ॥ ९२ ॥
विघ्नराजं च संपूज्य सामान्यार्घ्यकरस्ततः ।
द्वाराणि पावमानीभिः प्रोक्ष्यास्त्रेणार्घ्यवारिभिः ॥ ९३ ॥
कवाटोद्घाटनं कृत्वा द्वारपालांस्तु पूजयेत् ।
रक्षोहणं वलगहनं पूर्वद्वारे तु पूजयेत् ॥ ९४ ॥
सुमुखः कालदण्डश्चाप्यतिथिर्मुदितस्तथा ।
सकलः शुक्तिकर्णश्च याम्यादिद्वारपाः स्मृताः ॥ ९५ ॥
प्रागादिद्वारनामानि प्रमोदन्यभया तथा ।
शान्तिः शुभकरी चैताः पूजयेत् स्वस्वनामभिः ॥ ९६ ॥
करालीं कामुकां चैव सुभगां काहनीमपि ।
गगनां ह्लादनीं चाथ कौबे(रीं ? र्यां) विष्फुलिङ्गिनीम् ॥ ९७ ॥
विरूपाक्षीं च पूर्वादिद्वारेषु द्वन्द्वशो यजेत् ।
नाराचमन्त्रः क्षिप्त्वान्तः प्रविश्यास्त्रं निधाय तु ॥ ९८ ॥
वास्तुब्रह्मासनानीष्ट्वा सूपविष्टोऽर्घ्यमर्चयेत् ।
पञ्चशुद्धीर्विधायाथ तिलकी पुष्पशेखरः ॥ ९९ ॥
आधारशक्तिं च ततः पद्मासनपङ्कजे ।
सगुणत्रयसूर्यादिबिम्बाबिम्बाधिपान् यजेत् ॥ १०० ॥
सुन्दर्याद्यास्तु योगिन्यः प्रागाद्यब्जदलाग्रगाः ।
सुन्दरी शालिनी चाथ विषकण्ठी वसुन्धरा ॥ १०१ ॥
योगिन्यमृतपूर्वा च घातकी च ततः परम् ।
वेताली मातृसेना चेत्येताः पूज्याः स्वनामभिः ॥ १०२ ॥

अथ मूर्ति मन्त्रेदेहं विन्यस्यावाहयेत् ततः ।
प्राग्वद् देवीं परां शक्तिं मूलाद्यैः स्थापनादिभिः ॥ १०३ ॥
सकलीकृत्य चार्घ्याद्यैः पूजयेत् तु पृथक् पृथक् ।
बहुबेरे त्वेकबेरे चामुण्डामेवमर्चयेत् ॥ १०४ ॥
एतन्मन्त्रैश्च नवभिः पूर्वोक्तैरपि पूजयेत् ।
हारिद्रं शबलं रक्तं पीतं नीलं शुकच्छवि ॥ १०५ ॥
अतिरक्तं सितं रक्तं वासो ब्राह्मयादिसम्मतम् ।
श्रीकण्ठं कुङ्कुमं यक्षकर्दमं ग्रन्थिरेव च ॥ १०६ ॥
कृष्णागरुस्तमालं च मृगनाभिश्च चन्दनम् ।
रक्तं च चन्दनं ब्राह्मीप्रभृतीनां क्रमान्मतम् ॥ १०७ ॥

गन्धा इति यावत् ।

पलाशकार्ककुमुदतुलस्यश्च कदम्बकम् ।
मल्लिका च जपा नीलमुत्पलं करवीरकम् ॥ १०८ ॥
ब्राह्मयादीनामभीष्टानि पुष्पाणीमानि वै नव ।
सितासितागरुक्षौद्रमाज्यं सर्जरसः पुरः ॥ १०९ ॥
श्रीकण्ठमिन्दुश्चोशीरं धूपद्रव्याण्यपि क्रमात् ।
पायसं चाथ दध्यन्नं मुद्गान्नं च गुलौदनम् ॥ ११० ॥
माषान्नं कृसरं चान्नं रक्तं शुद्धान्नमेव च ।
फलान्नं च निवेद्यानि ब्राह्मयादीनां नव क्रमात् ॥ १११ ॥
एवमिष्ट्वा निवेद्यान्तमुपचारैर्यथोदितैः ।
निर्माल्येनैशकोणे तु चण्डसेनां प्रपूजयेत् ॥ ११२ ॥
अग्निष्वपि तथाग्नौ वा हुत्वोक्तान्यैर्यथाक्रमम् ।
स्वमूलाद्यैश्च गायत्र्या श्रौतैर्मन्त्रैश्च चोदितैः ॥ ११३ ॥
जयादिभिः क्रमाद्धुत्वा [1] [2]यश्चित्तैर्घृतेन तु ।
पूर्णां स्विष्टकृतं चापि हुत्वाग्निं स्वहृदम्बुजे ॥ ११४ ॥
नियोज्य तोरणादिस्था देवताश्च विसर्जयेत् ।
एकाशीतिघटैरुक्तैः प्रत्येकं नवकेन तु ॥ ११५ ॥

१. 'र्वा', २. 'प' ख.पाठः.

स्नपयेद् बहुबेरेऽथ सर्वैर्मन्त्रैरेकबेरके ।
बलिं च विकिरेद् रात्रौ दत्त्वाचार्यादिदक्षिणाः ॥ ११६ ॥
दत्त्वा देयानि विप्रेभ्यो लिङ्गिभ्योऽन्येभ्य एव च ।
विशेषान्मातृभक्ता ये तेभ्यस्ताभ्यः प्रदाय तु ॥ ११७ ॥
अवारितं तदन्ना(द्यैः ? द्यं) सर्वेभ्योऽपि प्रदापयेत् ।
नित्यपूजादिसिद्ध्यर्थं विभवं तूपपत्तितः ॥ ११८ ॥
सङ्कल्प्य कर्ता लभते दृष्टादृष्टेप्सितं फलम् ।

## मातृप्रतिष्ठाधिकारः ।

---

नित्योत्सवे तु मातॄणां मातुर्वामत्रके शुभे ॥ ११९ ॥
हैमाद्येकतले लिङ्गं प्रातः पुष्पमयं भवेत् ।
अन्नलिङ्गं तु मध्याह्ने सायं लिङ्गं तथाक्षतैः ॥ १२० ॥
बहुबेरे तु तत्पात्रे पद्मे कलशेऽत्र पत्रके ।
चामुण्डा कर्णिकायां स्याद् ब्राह्मयाद्याः प्राग्दलादिषु ॥ १२१ ॥
आवाह्याभ्यर्च्य तद्बीजैरारोप्य परिचारकैः ।
बलिबेरसमायुक्तं छत्रादिविभवान्वितम् ॥ १२२ ॥
शङ्खभेर्यादिनिर्घोषैः स्त्रीसंगीताद्यलङ्कृतम् ।
अन्तर्बलिं क्षिपेद् योगी योगिनीभ्योऽष्टदिक्ष्वपि ॥ १२३ ॥
सुन्दरीप्रमुखाभ्यस्तु कराल्याद्याभ्य एव च ।
ततो रक्षोहणादिभ्यो द्वाःस्थेभ्योऽपि क्षिपेद् बलिम् ॥ १२४ ॥
लोकाधिपानां स्थानेषु चेन्द्रादिभ्योऽष्टदिक्ष्वपि ।
पुरतो वाहनेभ्यश्च वाहनायाथवा क्षिपेत् ॥ १२५ ॥
क्षिप्त्वाथ चण्डसेनायै ततः संप्राप्य गोपुरम् ।
कुम्भिन्यै च निकुम्भिन्यै बलिं कृत्वा बहिर्गतः ॥ १२६ ॥
बलिपीठस्य पुरतो मन्त्रेणामन्त्रयेद् गणान् ।
याः समस्तं जगद् व्याप्य मातृपारिषदाः स्थिताः ॥ १२७ ॥
योगिन्योऽपि च शाकिन्यः प्रेताश्च कटपूतनाः ।
डाकिन्यश्च पिशाचाश्च वेतालाः प्रमथास्तथा ॥ १२८ ॥

---

१. 'द्यं' क. पाठः.

पाताले भुवि चाकाशे याश्च ये वा वसन्ति ताः ।
ते च सुप्रीतमनसः प्रतिगृह्णन्त्विमं बलिम् ॥ १२९ ॥

इति ।

ततोऽष्टदिक्षु प्रोक्तेभ्यो गणेभ्यो विकिरेद् बलिम् ।
योगिनीभ्यस्तु पूर्वस्यां शाकिनीभ्यस्तथानले ॥ १३० ॥

प्रेतेभ्यो दक्षिणे तद्वत् पूतनाभ्यश्च नैर्ऋते ।
डाकिनीभ्यस्तु वारुण्यां पिशाचेभ्यस्तु मारुते ॥ १३१ ॥
वेतालेभ्यश्च कौबेर्यां भूतेभ्यश्चेशगोचरे ।
विकीर्य तु बलिं पश्चाद् बलिपीठमुपेत्य तु ॥ १३२ ॥
उग्रसेनां तु सगणां ध्यात्वाभ्यर्च्य निजालयया ।
अन्नशेषेण सर्वेण तस्यै पीठे क्षिपेद् बलिम् ॥ १३३ ॥

परिभ्रम्य यथापूर्वं प्रविश्यान्तः समाहितः ।
अभ्यर्च्य देवीं लिङ्गस्थां मन्त्रान् वा मन्त्रमेव वा ॥ १३४ ॥
मातॄर्वा मातरं मूलबेरे स्वे स्वे नियोजयेत् ।

**नित्योत्सवाधिकारः ।**

---

अथोच्यते महाशान्तिर्देशराजहितावहा ॥ १३५ ॥
रोगोपसर्गमारीणामुत्पातानां च शान्तये ।
माघफाल्गुनचैत्रेषु वैशाखज्येष्ठयोरपि ॥ १३६ ॥
आषाढे श्रावणे प्रोष्ठपदे चाश्वयुजेऽपि च ।
कार्त्तिक्यां मार्गशीर्षे च पुष्ये चापि विधीयते ॥ १३७ ॥
कृष्णे पक्षेऽथ शुक्ले च राष्ट्रादेरनुकूलभे ।
अष्टम्यन्तं द्वितीयादि यत् सप्तदिवसं भवेत् ॥ १३८ ॥
तत्र भौमार्कवारान्तं महाशान्तिर्विधीयते ।
तेषां दिनानां नामानि ब्राह्म्यादीनां तु नामभिः ॥ १३९ ॥
त्रिद्व्येकसप्ततिदिनैः श्रेष्ठाद्या शान्तिरुच्यते ।
पुरे राष्ट्रे तथा ग्रामे वने वा पर्वतेऽपि वा ॥ १४० ॥

यत्र स्यान्मातृसान्निध्यं तत्र शान्तिं प्रकारयेत् ।
अष्टादिशान्ति निक्षिप्य प्राग्वत् कृत्वाङ्कुरार्पणम् ॥ १४१ ॥
ध्वजमारोपयेत् तस्मिन् पिशाचीं विलिखेत् पटे ।
ऊर्ध्वकेशीं प्रवृत्ताक्षीं निर्मांसास्थिशरीरिणीम् ॥ १४२ ॥
दीर्घघ्राणां प्रलम्बोष्ठीं द्विभुजां दीर्घकन्धराम् ।
कपालवेतालधरां तथैव विकृताननाम् ॥ १४३ ॥
अदीर्घकुक्षिहस्ताङ्घ्रिं गोशृङ्गसदृशस्तनीम् ।
निबद्धकिङ्किणीमाला नानासर्पविभूषणाम् ॥ १४४ ॥
एकबेरे भवेदेवं बहुबेरं यदा तदा ।
पिशाचीं परितोऽन्यानि वाहनान्यष्ट चालिखेत् ॥ १४५ ॥
प्रासादाग्रे सभाग्रे वा ग्राममध्ये च चत्वरे ।
दशहस्तप्रमाणं तु स्यान्मुद्रामण्डपं शुभम् ॥ १४६ ॥
तन्मध्ये चतुरश्रं तु पीठं स्याद् बलिपीठवत् ।
ततो ग्रामपुरादेस्तु दिक्षु सन्धिष्वपि क्रमात् ॥ १४७ ॥
मण्डलानि सुलिप्तानि बल्यर्थं परिकल्पयेत् ।
ततस्तूर्यादिनिर्घोषैर्गेयनृत्तादिमङ्गलैः ॥ १४८ ॥
शूलास्त्रयात्रासहितं बलिं दिक्षु च निक्षिपेत् ।
शाल्योदनं सदध्याज्यं मांसप्रतिनिधिप्लुतम् ॥ १४९ ॥
सरक्तगन्धकुसुमं तत्तन्मन्त्रैर्बलिं क्षिपेत् ।
मध्ये तु ब्रह्मणे दिक्षु लोकेशेभ्यो यथापुरम् ॥ १५० ॥
सर्वदेवालयाग्रेषु ग्रामद्वारसभासु च ।
चत्वरेषु च चैत्येषु राजमुख्यालयेषु च ॥ १५१ ॥
गोगजाश्वादिशालेषु मुख्यवृक्षनदीषु च ।
कूपारामतटाकेषु वने पितृवनेषु च ॥ १५२ ॥
निधिस्थानेषु चान्येषु सम्प्रोक्ष्य विकिरेद् बलिम् ।
त्रिसन्ध्यं विकिरेच्चैव बलिदानादनन्तरम् ॥ १५३ ॥
प्रविश्य मण्डपं पीठे न्यसेदस्त्रं च पूर्ववत् ।
सम्पूजयेच्च तत् तत्र यात्रां देव्याः प्रवर्तयेत् ॥ १५४ ॥

नरयानेन वाद्येन गीतनृत्तादिमङ्गलैः ।
शङ्खभेर्यादिनिर्घोषैर्वितानच्छत्रचामरैः ॥ १५५ ॥
भूषिताभिः सुरूपाभिर्गणिकाभिरलङ्कृतम् ।
सुजातैः सुभटैर्वीरैर्भूषितैः खड्गपाणिभिः ॥ १५६ ॥
अन्यैरपि जनैर्जुष्टं जनकोलाहलेन तु ।
प्रतिरात्रं पिष्टपशून् विशस्य विनिवेदयेत् ॥ १५७ ॥
प्रातः सायं पारशवो मुद्रानृत्तविशारदः ।
नृत्येत् सङ्गीतरम्यं तन्मण्डपेऽस्त्रस्य सन्निधौ ॥ १५८ ॥
ध्वजावरोपणे प्रोक्तं यथा शैवमहोत्सवे ।
अर्धरात्रे प्रतिनिशं तथा मौनबलिं क्षिपेत् ॥ १५९ ॥
अथ षष्ठदिने रात्रौ कौतुकं तु महापशोः ।
बध्नीयात् स च विप्रस्य हरिणो नृपतेर्गजः ॥ १६० ॥
वैश्यस्य महिषोऽन्यस्य च्छागोऽपि स्यान्महापशुः ।
अलाभे त्वथ सर्वेषां महिषो वा पशुर्भवेत् ॥ १६१ ॥
सप्तमेऽह्न्यपराह्णे तु विशस्योपपशुं त्वजम् ।
यूपबद्धमलङ्कृत्य ततश्छिन्द्यान्महापशुम् ॥ १६२ ॥
तद्रक्तमथ मातृभ्यो मात्रे वा विनिवेदयेत् ।
तद्रक्तपललोन्मिश्रैरन्नैर्दिक्षु बलिं क्षिपेत् ॥ १६३ ॥
अष्टमेऽह्नि ततः प्राग्वच्चूर्णोत्सवपुरस्सरम् ।
शैवोत्सवविधानेन तीर्थयात्रां समापयेत् ॥ १६४ ॥
प्राग्वद् गणान् विसृज्याथ ध्वजं चाप्यवरोपयेत् ।
एकाशीतिघटैः प्राग्वत् स्नपयेत् पूजयेदपि ॥ १६५ ॥
दक्षिणाश्च प्रदेयानि दत्त्वा कर्ताश्नुते फलम् ।
तथैवाङ्गारवारेषु सायं पूर्वोक्तमार्गतः ॥ १६६ ॥
बलियात्रां विधायेष्टान् सर्वान् कामानवाप्नुयात् ।
अष्टम्योश्च चतुर्दश्योरारार्कदिवसेषु च ॥ १६७ ॥
प्राप्तये सर्वकामानां बलिं पूजां च कारयेत् ।

एवं विशुद्धं खलु मातृतन्त्रं प्रोक्तं प्रतिष्ठादिकमत्र सम्यक् ।
पूजामहाशान्त्यवसानमेतन्निर्दिष्टशैवानुगुणं विधेयम् ॥ १६८ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे उपरिभागे
क्रियापादे मातृतन्त्रपटलो नामैकोनषष्टितमः ॥

---

अथ षष्टितमः पटलः ।

अथातः क्षेत्रपालस्य प्रतिष्ठार्थं निगद्यते ।
प्रोक्तशैवानुसारेण कर्मात्रापि समूहयेत् ॥ १ ॥

अन्त्यो मनुःस्वरोपेतो बिन्दुनादविभूषितः ।
तारादिरस्य बीजं स्यात् क्षेत्रपालपदं ततः ॥ २ ॥

चतुर्थ्यन्तं नमोन्तोऽयं मूलमन्त्रो नवाक्षरः ।
होमे स्यादग्निजायान्तो बीजं दीर्घैः स्वरैर्युतम् ॥ ३ ॥

जातियुक्तानि चाङ्गानि षडङ्गान्तान्यनुक्रमात् ।
मालामन्त्रोऽपि तस्यैव तारः शक्तिश्च वाष्टमः ॥ ४ ॥

साग्निषट्कस्वरो दण्डी रेमुकावतरेति च ।
एकादशस्वरेणान्त्यं पञ्चमादिहुताशयुक् ॥ ५ ॥

ततः पालमहाशब्दौ बलेति कपिलद्वयम् ।
जटाभारभासुरोऽन्ते ज्वालामुखपदं भवेत् ॥ ६ ॥

(गन्ध)पुष्पधूपदीपबलिपूजां गृहाण च ।
भैरवेति पदान्ते स्याद् रूपेणेति पदं ततः ॥ ७ ॥

तरुशब्दो मुरुपदं स्वः फट्कारपदानि च ।
अट्टहासपदस्यान्ते डामराधिप इत्यपि ॥ ८ ॥

पञ्चमादिश्च येकारः स्वाहान्तो मन्त्र ईरितः ।
पूजामनेन कुर्वीत जपादिः सिद्धिदो भवेत् ॥ ९ ॥

तारादिरथ तस्यैव बलिमन्त्रोऽपि कथ्यते ।
पश्चिशब्दो धुकारश्च द्रुरुवज्रहनास्त्रयः ॥ १० ॥

पिनाशब्दश्च वीप्सान्तं महारवपदं तथा ।
क्षेत्रपालपदं गृह्ण गृह्णेत्युक्त्वाग्निजायया ॥ ११ ॥

बलिमन्त्रः ।

तारं शक्तिश्च वटुकश्चतुर्थ्यन्तस्ततः परम् ।
आपदुद्धारणं प्राग्वत् कुरुयुग्मं ततोऽपिच ॥ १२ ॥
वटुकः स्याच्चतुर्थ्यन्तः शक्तिबीजं च तन्मनुः ।
द्वाविंशत्यक्षरो मन्त्रो जाप्यैरिष्टसिद्धिदः ॥ १३ ॥
कनिष्ठदशतालेन क्षेत्रपालं तु कारयेत् ।
अञ्जनाभं विवृत्ताक्षं ज्वलितोर्ध्वशिरोरुहम् ॥ १४ ॥
युवानं सुमहाकायं रक्ताकल्पं दिगम्बरम् ।
स्पष्टदंष्ट्रोत्कटमुखं स्फुरन्नानाविभूषणम् ॥ १५ ॥
सौवर्णकिङ्किणीघण्टामालाबद्धकटीतटम् ।
शिञ्जत्कनकमञ्जीरभूषिताङ्घ्रिसरोरुहम् ॥ १६ ॥
ऋज्वायतस्थिराकारं हेमपीठाम्बुजे स्थितम् ।
चतुर्भुजं वाष्टहस्तं द्विभुजं वापि कारयेत् ॥ १७ ॥
कपालं च त्रिशूलं च पाशं डमरुकं करैः ।
अधश्चोर्ध्वं च बिभ्राणं कुर्यादेवं चतुर्भुजम् ॥ १८ ॥
शूलं खड्गं च खट्वाङ्गं बिभ्रड्डमरुकं तथा ।
दक्षिणेऽथ कपालं च घण्टां च सशरं धनुः ॥ १९ ॥
पाशं चाष्टभुजः कार्यः प्रोक्तलक्षणलक्षितः ।
कपालं च गदां बिभ्रद् द्विभुजो वामदक्षिणे ॥ २० ॥
अष्टवर्षार्भकप्रख्यो नीलकुञ्चितमूर्धजः ।
अलकालङ्कृतःस्पष्टदंष्ट्राङ्कुरमुखाम्बुजः ॥ २१ ॥
रक्तवर्णोऽथ वटुकनाथः क्षेत्राधिपो ह्ययम् ।

अथवा उक्तश्चान्यैः—

व्यालम्बाभ्रजटाधरं त्रिणयनं नीलाञ्जनाद्रिप्रभं
दोर्द्वन्द्वात्तगदाकपालमरुणस्रग्गन्धभूषोज्ज्वलम् ।
घण्टामेखलघर्घराध्वनिमिलज्झाङ्कारभीमं विभुं
वन्दे चित्रभुजङ्गकुण्डलधरं तं क्षेत्रपालं सदा ॥ २२ ॥
प्राग्वत् षोडशपादः स्यादधिवासनमण्डपः ॥ २३ ॥

शमो विभूमिः सुबलश्चारोगस्तोरणाः क्रमात् ।
हेरुकस्त्रिपुरान्तश्चाप्यग्निर्वेताल एव च ॥ २४ ॥
अग्निजिह्वः करालश्चाप्येकदंष्ट्रस्तु सप्तमः ।
भीमरूपोऽष्टमस्त्वेतान् द्वारकुम्भेषु पूजयेत् ॥ २५ ॥
सारमेयध्वजाश्चाष्टावैन्द्राग्नेयादिनामभिः ।
पूज्याः स्युरथ पुण्याहविकिरक्षेपपूर्वकम् ॥ २६ ॥
कुम्भे क्षेत्रपतिं प्रोक्तमूर्तिं कृष्णाश्ववाहनम् ।
वर्धन्यां तच्च शूलास्त्रं स्त्रीरूपं सरमागतम् ॥ २७ ॥
इष्ट्वा तद्भ्रमणादूर्ध्वं मध्यकुण्डाहितानले ।
आवाह्य क्षेत्रपं प्राग्वद्धुत्वा च समिदादिभिः ॥ २८ ॥
कुर्यादाकारशुद्धिं च तथा नयनमोक्षणम् ।
तथाब्धिवसनं ग्रामभ्रमणं च प्रवेशनम् ॥ २९ ॥
मण्डपे शयनं वेद्यां मूलकुम्भाद्यपूजनम् ।
निद्राकुम्भं तथ न्यस्येद् दिक्षु मूर्तिघटानपि ॥ ३० ॥
अनलश्चाग्निकेशश्च कालो घण्टारवस्तथा ।
महाक्रोधः पिङ्गलाक्षः सप्तमः पिशिताशनः ॥ ३१ ॥
ऊर्ध्वकेशोऽष्टमस्त्वेतान् स्वाख्याभिः कुम्भगान् यजेत् ।
आत्मादितत्त्वतत्त्वेशान् मूर्तीः पृथ्व्यादिकास्तथा ॥ ३२ ॥
मूर्तीशानसिताङ्गादींस्त्रिषु भागेषु विन्यसेत् ।
असिताङ्गो रुरुश्चण्डः क्रोधश्चोन्मत्त एव च ॥ ३३ ॥
कपाली भीषणश्चैव संहारश्चाष्ट मूर्तिपाः ।
एते भैरवशब्दान्ताश्चतुर्थ्या नमसान्विताः ॥ ३४ ॥
जानुकण्ठशिरोन्तेषु न्यस्याः स्युः प्रतिखण्डकम् ।
तत्तन्मन्त्रैर्घृतं हुत्वा स्पृशेत् सिञ्चेच्च कुम्भकैः ॥ ३५ ॥
ज्ञानशक्तिं न्यसेद् वेरे क्रियां पीठेऽर्चयेदपि ।
नृत्तगीतादिभिः श्यामामतिवाह्योदिते रवौ ॥ ३६ ॥
स्नात्वा निर्वर्त्य सन्ध्याद्यं लग्ने कूर्मशिलां न्यसेत् ।
मानुषे तु पदे तस्यां वर्गान् रत्नादिकान् न्यसेत् ॥ ३७ ॥

पीठं च पीठे बेरं च मूलमन्त्रेण विन्यसेत् ।
दृढीकृत्य तु संक्षाल्य कुम्भाद् बीजं तु तद्धृदि ॥ ३८ ॥
विन्यस्य चाभिषिच्याथाप्यासनं मूर्तिमेव च ।
मन्त्रदेहं च विन्यस्य स्वहृदम्भोरुहोदरात् ॥ ३९ ॥
नाडीमार्गेण चैतन्यं नीत्वा बिन्दुं ततोऽपि च ।
द्वादशान्ताब्जसोमस्थचिच्छक्तिज्योतिषा सह ॥ ४० ॥
पुष्पाञ्जलौ समायोज्य प्राग्वदानीय तद्धृदि ।
पद्ममध्यस्थतन्मन्त्रेणैकत्वमुपपादयेत् ॥ ४१ ॥
मन्त्राध्वा स्यात् स्वमूलाङ्गैः पदाध्वा तत्पदैः स्मृतः ।
शेषाध्वानो यथापूर्वं तद्विभाव्य न्यसेत् क्रमात् ॥ ४२ ॥
निद्रामूर्तिघटैः पश्चादभिषिच्य यथाविधि ।
प्रागुक्तमार्गेणार्घ्याद्यैः स्वाङ्गमूलैस्तु पूजयेत् ॥ ४३ ॥

तद्यथा —

स्नात्वा सपूज्य विघ्नेशं सकलीकृतविग्रहः ।
सामान्यार्घ्येण तद्द्वारि शूलिनं च कपालिनम् ॥ ४४ ॥
इष्ट्वा द्वारश्रियं चोर्ध्वे क्षिप्तास्त्रोऽन्तः प्रविश्य तु ।
अस्त्रं विन्यस्य देहल्यां वास्तुब्रह्मासनार्चनात् ॥ ४५ ॥
कृतरक्षोऽस्त्रतः प्राग्वदुपविश्यार्घ्यमर्चयेत् ।
शुद्धीः पञ्च विधायाथ तिलकी पुष्पशेखरः ॥ ४६ ॥
शक्तिं च पृथिवीं पीठं सत्त्वादिगुणपङ्कजे ।
अष्टौ तु परितः शक्तीस्त्र्यक्षं तन्मूर्तिनामभिः ॥ ४७ ॥
अर्घ्यादितः समभ्यर्च्य देवमावाह्य पूर्ववत् ।
हृदादीन्यनलाद्येषु नेत्रं च पुरतो यजेत् ॥ ४८ ॥
अस्त्रं दिक्ष्वत्र मध्येषु विन्यस्याभ्यर्च्य पूर्ववत् ।
अर्घ्यादिभिर्निवेद्यान्तं मूलाङ्गैर्जुहुयादपि ॥ ४९ ॥
क्षेत्रस्थपतइत्याद्यष्टोत्तरशताहुतीः ।
हुत्वाथ परिवारांस्तु न्यसेद् द्वारि कपालिनम् ॥ ५० ॥
शूलिनं चाष्ट मूर्तांस्तु लोकेशस्थानगाः क्रमात् ।
लोकेशतुल्यरूपांस्ताननलाग्निचरादिकान् ॥ ५१ ॥

अग्रे तु वाहनं श्वानम्
ओं सारमेयाय नमः ।
वीरविघ्नेश्वरावपि ।
मातृश्च बलिपीठं च विन्यस्यात्र हुताशने ॥ ५२ ॥
क्षेत्रस्यपतइत्याद्याज्जुहुयात् समिदादिकम् ।
अथ द्वितीयदिवसे क्षेत्रचण्डं तु पूर्ववत् ॥ ५३ ॥
विन्यस्यैशे तु निर्माल्यैर्वटुकायं तमर्चयेत् ।
(तथैव) गोपुरद्वाःस्थौ सौम्यमुग्रं च विन्यसेत् ॥ ५४ ॥
बलिपीठं च विन्यस्य मूलाग्रैर्जुहुयाद् घृतम् ।
जयादिभिस्ततः प्राग्वत् प्रायश्चित्तैश्च पूर्णया ॥ ५५ ॥
हुत्वा स्विष्टकृता चाग्निं विभज्यात्मनि योजयेत् ।
ध्वजांश्च विसृजेत् प्राग्वद् दक्षिणाद्यं च दापयेत् ॥ ५६ ॥
विभवं कल्पयेत् कर्ता नित्यपूजादिसिद्धये ।
तिस्रो रात्रीरतीत्याथ कलशैरुपपत्तितः ॥ ५७ ॥
अष्टोत्तरशतान्तैस्तमभिषिञ्चेद् यथापुरम् ।
क्षेत्रेशमेवं संस्थाप्य दृष्टादृष्टफलोदयात् ॥ ५८ ॥
भोगांच्छ्रियं यथायोग्यं जयं पुत्रांश्च विन्दति ।

क्षेत्रपालप्रतिष्ठाधिकारः ।

---

नित्योत्सवे क्षेत्रपतेः प्रातरन्नमयं स्मृतम् ॥ ५९ ॥
पिष्टलिङ्गं तु मध्याह्ने पुष्पलिङ्गं निशामुखे ।
हैमाद्यन्यतमा प्राग्वदुत्सवप्रतिमा भवेत् ॥ ६० ॥
वादित्रगीतनृत्ताद्यैर्बलियात्रां प्रकल्पयेत् ।
छत्राद्यैर्विभवैश्चाथ द्वाःस्थौ शूलिकपालिनौ ॥ ६१ ॥
चत्वारोऽत्र चतुर्दिक्षु निषादाकारभीषणाः ।
कृष्णाकल्पाः कृष्णवर्णाः पूज्याश्चापेषुपाणयः ॥ ६२ ॥
अर्घ्याद्यद्रिचरो राजा कपाली च महात्मना ।
अनलाद्या वाहनं च वीरभद्रगणाधिपौ ॥ ६३ ॥

1. 'ल' ख. पाठः.

मातरः क्षेत्रचण्डश्च स्थितस्तेभ्यो बलिं क्षिपेत् ।
गोपुरद्वारि सौम्याय चोग्राय च बलिं क्षिपेत् ॥ ६४ ॥
बहिर्निर्गत्य पीठाग्रे स्थित्वा त्वामन्त्रयेद् गणान् ।
ये समस्तं जगद् व्याप्य तिष्ठन्ति बलिकाङ्क्षिणः ॥ ६५ ॥
क्षेत्रपालगणाः सर्वे गृह्णन्तु बलिमाहृतम् ।

इति ।

ततोऽष्टदिक्षु पूर्वोक्ता हेरुकाद्याः स्थिताः क्रमात् ॥ ६६ ॥
तेभ्यो निक्षिप्य तु बलिं पीठस्य परितः क्रमात् ।
स्थित्वा षोडशं भूतेशाः क्षेत्रसेनश्च मध्यतः ॥ ६७ ॥
अपरोऽथापवश्चेन्द्रमूर्तिरीशान एव च ।
उग्रश्चाप्यूर्ध्वबाहुः स्याद्वृषभस्त्वृभवस्तथा ॥ ६८ ॥
पीठस्य परितस्त्वेतेऽतश्चोर्ध्वे पद्मपत्रगाः ।
असंभवोथनूजन्मा एकदंष्ट्रस्ततः परः(?) ॥ ६९ ॥
ऐरावतो ह्योघवलश्चौषधेशो जनप्रभः ।
अस्संभवक्षेत्रे[1]पालसेनसंज्ञश्च मध्यमः ॥ ७० ॥
नित्योत्सवे विधिश्चैष तुल्यश्च स्यान्महोत्सवे ।
विशेषः सारमेयाङ्कं ध्वजमुच्छ्रित्य पूजयेत् ॥ ७१ ॥

ओं सारमेयाय नमः । ओं कुंक्कुराय नमः । ओं क्षेत्रपालवाहनाय नमः

इति ।

लोकेशस्थानमूर्तीनां बलिदानादनन्तरम् ।
ओं प्राचि क्षेत्रपालस्य येभूता वै पुरस्सदः ॥ ७२ ॥
इत्याद्यैः पूर्ववन्मन्त्रैस्तत्तद्दिक्षु बलिं क्षिपेत् ।
ततस्तृतीयहारायां हेरुकाद्या वृतेर्बहिः ॥ ७३ ॥
चत्वारस्तु प्रतिदिशं स्थितास्तेभ्यो बलिं क्षिपेत् ।
कम्बली च खरो गन्धप्रियो घण्टारवस्तथा ॥ ७४ ॥
ऊकारमूर्तिश्चण्डश्च छन्दचारी जटाधरः ।
झङ्कारमुखरो ओङ्कटङ्कारी ठमयस्तथा ॥ ७५ ॥

1. 'भे' क. पाठः.

डामरो ढक्कृतिश्चैव णमयस्तत्त्ववित्[1] तथा ।
अथ मूर्तिर्दन्तुरश्चैव धनपालश्च नन्दकः ॥ ७६ ॥
परान्तकश्च फट्कारी बर्बरो भवनन्दनः ।
महाबलश्च यक्षेशो राक्षसो लम्बनस्तथा ॥ ७७ ॥
वनरक्षश्च शुम्भश्च षड्भुजः सदसस्पतिः ।
एतेषां तु बलिं क्षिप्त्वाथोर्ध्वायां दिश्यधस्तथा ॥ ७८ ॥
हरसेनः स्थितः[2] पूज्यस्ततश्च क्षणदाचरः ।
सर्वेषामपि ताराद्यैश्चतुर्थ्यन्तैः स्वनामभिः ॥ ७९ ॥
नमोन्तमर्चनं तु स्याद् बलिदानं तथैव च ।
एते महाबलाः सर्वे क्षेत्रेशाः क्षेत्रपोपमाः ॥ ८० ॥
पूजिताः सर्वकामांश्च दद्युरेकैकशोऽपि च ।
एतेषां च बहिर्दिक्षु यथापूर्वमनुक्रमात् ॥ ८१ ॥
ऐन्द्र्यां दिशि गणा ये तु वज्रहस्ता महाबलाः ।
इत्यादिभिर्यथापूर्वं मन्त्रैस्तु विकिरेद् बलिम् ॥ ८२ ॥
अथोद्दिष्टदिनान्ते तु तीर्थयात्रां यथापुरम् ।
संकल्प्य तत् समाप्याथ स्नपयित्वोपपचितः ॥ ८३ ॥
विसृज्य तु गणान् सर्वान् सान्धिदेवांश्च पूर्ववत् ।
दक्षिणांश्च प्रदेयानि दत्त्वाज्याद्यं च पुष्कलम् ॥ ८४ ॥
दृष्टादृष्टफलं सर्वं विशिष्टं स्वेष्टमुच्यते ।
इति क्षेत्रपालस्य तन्त्रं यथावत् प्रतिष्ठादिकं यत् क्रमादुत्सवान्तम् ।
निरूप्यागमानत्र संक्षिप्य गीतं तदूह्यं समस्तं च शैवानुसारात् ॥ ८५ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे उपरिभागे
क्रियापादे क्षेत्रपालतन्त्रपटलः, षष्टितमः ॥

---

अथैकषष्टितमः पटलः ।

अथौषधीषु पक्वासु श्रावणेऽश्वयुजे तथा ।
पौषे वा फाल्गुने मासे नवनैवेद्यमिष्यते ॥ १ ॥

---

१. 'र्ति' क. पाठः २. 'विकारा' ख. पाठः.

तत्तद्दैवतनक्षत्रे ग्रामकर्ता महीभृताम् ।
अनुकूलर्क्षलग्नादावङ्कुरार्पणपूर्वकम् ॥ २ ॥
लवनार्थं सुलग्नादावग्रयात्रापुरस्सरम् ।
तूर्यगीतादिनिर्घोषैः स्नातैः कर्मकरैर्गुरुः ॥ ३ ॥
लवित्रपाणिभिः शुक्लवसनैः सह लग्नके ।
क्षेत्रं प्रदक्षिणीकृत्य दध्यन्नेन बलिं क्षिपेत् ॥ ४ ॥
सोमाय चौषधीभ्यश्च पृथिव्यै क्षेत्रपाय च ।
लवित्रमिष्ट्वा शस्त्रेण प्राङ्मुखो वाप्युदङ्मुखः ॥ ५ ॥
प्रथमं लवनं कृत्वा शाल्यादीनामनन्तरम् ।
मुद्गमाषादिकं चैव मुष्टिग्राह्यं समाहरेत् ॥ ६ ॥
ओषधीनां ततो भारान् फलानि व्यञ्जनान्यपि ।
इक्षुमूलानि चान्यानि वहेयुः कर्मचारिणः ॥ ७ ॥
कुर्याद् गीतादिनिर्घोषैर्ग्रामादेस्तु प्रदक्षिणम् ।
आलयस्य च नीत्वान्तः पठन्ति स्वस्ति सूक्तकम् ॥ ८ ॥
द्विजाः शकुनसूक्तं च किरेयुः कुसुमाक्षतान् ।
प्रागेव तु कृते पिष्टैर्मण्डपे स्वस्तिकाम्बुजे ॥ ९ ॥
हैमाद्यन्यतमं कुम्भं तन्मध्ये विनिधाय तु ।
समापूर्य जलैः पूज्यः सोमस्तत्रौषधीश्वरः ॥ १० ॥
मङ्गलाङ्कुरदीपाद्यैः परितः समलङ्कृते ।
तस्मिन् कणिशपुञ्जं तु निधायेष्ट्वा यथाविधि ॥ ११ ॥
सुप्रभाख्यां श्रियं देवीं यजेत् सर्वौषधीश्वरीम् ।
ततस्तु सुविलिप्ते तु कोष्ठागारे स्वलङ्कृते ॥ १२ ॥
धान्यसंग्रहणं कुर्याज्जामित्रे देवमन्त्रिणः ।
मन्दोदये तदंशे चाप्युद्वेले वरुणालये ॥ १३ ॥
ततस्तु शालिकणिशैः सबिल्वाश्वत्थपल्लवैः ।
सेन्द्रवल्लीलताबद्धैरलङ्कृत्यालयादिकम् ॥ १४ ॥
उलूखलं च मुसलं शूर्पप्रस्थादिकं तथा ।
स्वलङ्कृताभियोषिद्भिः संसाध्यमानान् सुतण्डुलान् ॥ १५ ॥

१. 'त्र' क. पाठः.

संक्षाळ्यास्त्रेण संस्कृत्य नैवेद्यं चरुपाकवत् ।
नवाक्षतांश्च प्रक्षाल्य धवलानङ्गमन्त्रतः ॥ १६ ॥
गुलक्षीरमधून्मिश्रान् मूलाङ्गैरभिमन्त्रितान् ।
सुमुहूर्ते तु सम्प्राप्ते तण्डुलांश्च नवं चरुं ॥ १७ ॥
सूर्यविघ्नेशयोः पूर्वं देवायाथ निवेदयेत् ।
परिवारसुरेभ्यश्चाप्यग्नौ साज्यं जुहोति च ॥ १८ ॥
मूलेनाष्टोत्तरशतं मूर्त्यङ्गानां दशांशतः ।
तण्डुलैश्च नवान्नेन चौषधीभ्यः स्वनामतः ॥ १९ ॥
सोमाय सुप्रभायै च हुत्वा पूर्णां जुहोति च ।
तच्छेषतण्डुलान् दद्यान्नृपादिभ्यो यथाक्रमम् ॥ २० ॥
आचार्याय च शिष्येभ्यो विप्रेभ्योऽर्थिभ्य एव च ।
लिङ्गिभ्यः परिवारेभ्यस्ततो भूतबलिं क्षिपेत् ॥ २१ ॥

नवनैवेद्याधिकारः ।

---

कार्त्तिक्यां पौर्णमास्यां तु कृत्तिकासु विशेषतः ।
कुर्याद् दीपोत्सवं शम्भोरन्येषां चासुरद्विषाम् ॥ २२ ॥
तद्वदाश्वयुजे कृष्णपक्षदश्यां तु फाल्गुने ।
प्रोक्तमुत्तरफल्गुन्यां विषुवे चायनद्वये ॥ २३ ॥
पौषे पुष्येऽथ चित्रायां चैत्रे चेन्द्राग्निदैवते ।
वैशाखे चापि कुर्वीत महोत्सवदिनेष्वपि ॥ २४ ॥
सप्ताहाद् वाथ पक्षाहात् पूर्वं कृत्वाङ्कुरार्पणम् ।
दीपवृक्षांस्तु परितः ससाराञ्छोभनानृजून् ॥ २५ ॥
प्रासादकण्ठतुल्योच्चान् द्वित्रहस्तान्तरस्थितान् ।
उच्छ्रित्य हारावाह्ये तु तेषामग्रान्विवेशितैः ॥ २६ ॥
वंशानुवंशबन्धाद्यैर्लुपोर्ध्वाच्छादनान्वितम् ।
कीलयेत् तेषु कीलांस्तु द्वादशाङ्गुलकान्तरान् ॥ २७ ॥
त्रिपञ्चका(दि ? द्रि)जगतीरुद्रनन्दर्षिसम्मितान् ।
मुख्यामुख्यादीनि चान्तर्दीपमालावलम्बनात् ॥ २८ ॥

तावन्ति दीपमालानां तलानि स्युर्यथाक्रमम् ।
ध्वजस्थाने प्रधानं तु दीपवृक्षं ध्वजोन्नतम् ॥ २९ ॥

उच्छ्रित्य तस्यामूलाग्रं दीपमालास्तु कारयेत् ।
तस्य वह्न्यादिकोणेषु सप्तसप्तकरान्तरम् ॥ ३० ॥

कृत्वा कूटचतुष्कं तु तोरणाद्यैरलङ्कृतम् ।
तेषु कुण्डानि कृत्वा तु पुण्याहं चैव कारयेत् ॥ ३१ ॥

पूर्वेद्युर्निशि देवाग्रे वालुकास्थण्डिलेऽनले ।
संस्कृते पञ्चसंस्कारैः पलाशसमिधो घृतम् ॥ ३२ ॥

क्षीरं चरुं च मूलाङ्गब्रह्मभिर्जुहुयात् क्रमात् ।
पूर्णां च हुत्वा गायत्र्या वह्नेः पूर्वोत्तरे ततः ॥ ३३ ॥

शालिस्थण्डिलपद्मे तु शरावाणि नव न्यसेत् ।
पृथक् प्रस्थाज्यपूर्णानि सदशानि प्रदीपयेत् ॥ ३४ ॥

हृदयेन तु तद्ब्रह्मौ वामादिनवशक्तिभिः ।
इष्ट्वा जयादिकं हुत्वा प्रायश्चित्तैर्जुहोति च ॥ ३५ ॥

कृत्वा स्विष्टकृतं पश्चाद् दीपवृक्षस्य कौतुकम् ।
बध्नीयाद् गीतनृत्यादितूर्यघोषपुरस्सरम् ॥ ३६ ॥

प्रातर्नित्यं समाप्याथ सविशेषं शिवं यजेत् ।
ततो महाशरावं तु त्रिश्लेकं शिवपूजितम् ॥ ३७ ॥

श्रेष्ठादिकं दीपवृक्षशिरस्यारोप्य पूरयेत् ।
घृतेन वाथ तैलेन तस्मिन् वर्ति च निक्षिपेत् ॥ ३८ ॥

दशाष्टषट्पलैर्वस्त्रैर्नवैः श्रेष्ठादिकैः कृताम् ।
कोणमण्डपकुण्डेषु स्थण्डिलाग्निं विभज्य तु ॥ ३९ ॥

निधाय चानलाद्येषु ब्रह्मादीनीश्वरान्तकम् ।
पालाशवटशम्यर्कसमिधश्च घृतं चरुम् ॥ ४० ॥

हुत्वा दीपतरोर्मूले पूजयेत् तु सदाशिवम् ।
अलङ्कृत्य तु वस्त्राद्यैर्दीपवृक्षस्य मूलतः ॥ ४१ ॥

तूर्यगीतादिनिर्घोषैर्दीपोज्ज्वलनकर्म तत् ।
निवेद्यं तु शिवायाथ लब्धानुज्ञस्ततो गुरुः ॥ ४२ ॥
प्रागुज्ज्वालिताञ्छक्तिदीपानेकीकृत्य क्रमेण तु ।
मनोन्मनीशरावस्थान् नीत्वा दीपतरोरधः ॥ ४३ ॥
स्नातः शुक्लाम्बरः शुद्धः सुवेषः परिचारकः ।
शक्तिदीपं गृहीत्वोर्ध्वमारोहेद् दीपपादपम् ॥ ४४ ॥
तदग्रस्थमहावर्त्यां शक्तिदीपं नियोजयेत् ।
ततः प्रारभ्य सर्वास्ता दीपमालाः समन्ततः ॥ ४५ ॥
प्रभूतस्निग्धवर्त्याढ्या ज्वालयेयुः क्षणादिव ।
प्रासादाग्रेषु सर्वेषु परिवारालयेषु च ॥ ४६ ॥
मण्डपेषु च सालेषु प्रभूतस्नेहपूरितान् ।
दीपान् प्रज्वाल्य संपूज्य गीतवाद्यादिमङ्गलैः ॥ ४७ ॥
उत्सवप्रतिमापूर्वयात्रां प्राग्वत् प्रवर्तयेत् ।
कृत्वा प्रदक्षिणं सर्वदीपानामालयाद् बहिः ॥ ४८ ॥
ज्वलत्स्वेव प्रदीपेषु पञ्चकृत्वस्त्रिरेव वा ।
अन्तः प्रवेश्य देवेशं ततो भूतबलिं क्षिपेत् ॥ ४९ ॥
इत्थं कृत्वैकरात्रं वा त्रिरात्रं पञ्चरात्रकम् ।
सप्तरात्रान्तकं नीचकनिष्ठाद्युत्तमोत्सवे ॥ ५० ॥
दिवा विशेषपूजां च कल्पयेत् प्रतिवासरम् ।
यात्रां चैव यथापूर्वं ग्रामादेस्तु प्रदक्षिणम् ॥ ५१ ॥
ततस्तु तीर्थयात्रान्ते स्नपनं चोपपत्तितः ।
कृत्वा तु दक्षिणां दद्यादन्नाद्यं चाप्यवारितम् ॥ ५२ ॥
एवं दीपोत्सवं भक्त्या ये वा पश्यन्ति मानवाः ।
तेऽपीह भोगान् संप्राप्य स्वर्गं यान्ति (विरेप ? निरेन)सः ॥५३॥
यदि वक्त्रसहस्राणां सहस्राणि[1] भवन्तिह ।
आयुश्च ब्रह्मणस्तुल्यं वक्तृत्वं च बृहस्पतेः ॥ ५४ ॥

1. 'णीतं चि' ख. पाठः.

तथाप्येकप्रदीपस्य फलं वक्तुं न शक्यते ।
दीपोत्सवादौ दीपानां फलं वक्तुं कुतः क्षमम् ॥ ५५ ॥

इति तन्त्रेषु तथैव चोदितो नवनैवेद्यविधिः प्रदर्शितः ।
प्रदीपकल्पोऽपि च कृत्तिकादिकः शिवस्य सर्वद्युसदां च सम्मतः ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे
उपरिभागे क्रियापादे नवनैवेद्यकृत्तिकादि-
दीपपटलः एकषष्टितमः ॥

---

अथ द्विषष्टितमः पटलः ।

साधकाचार्ययोश्चापि दीक्षितानां द्विजन्मनाम् ।
संस्थितानां तु सर्वेषामन्त्येष्टिः कथ्यतेऽधुना ॥ १ ॥

मरिष्यतो वा मृतस्य जपेत् कर्णेऽथ दक्षिणे ।
आयुषः प्राणमित्यादीन् मूलेन ग्रथितान् क्रमात् ॥ २ ॥

परेयिवांसमित्याज्यं हुत्वा तत्स्वीकृतानले ।
केशान् विमुच्य स्नपयेच्छिष्यः पत्न्यथवा सुतः ॥ ३ ॥

आस्ये हिरण्यं प्रक्षिप्य समाच्छाद्याहताम्बरैः ।
इदंत्वा वस्त्रेणेति यावत् ।
दर्भेणाङ्गुष्ठयोर्बद्ध्वा घृतदध्यक्षतांस्तिलान् ॥ ४ ॥

उदकुम्भं हिरण्यं च पूषात्वेत्यग्रतो नयेत् ।
वंशदार्वादिरचितां सुदृढां शिबिकां नवाम् ॥ ५ ॥

आच्छाद्य रक्तवासोभिर्ध्वजमालाद्यलङ्कृताम् ।
दर्भमालापरिक्षिप्तां स्वास्तीर्णामधिरोप्य तु ॥ ६ ॥

अत्र शिष्यादयः स्नाताः प्राचीनावीतिनस्तु ते ।
आर्द्रैकवसनाः सर्वे वहेयुः शवजापिनः ॥ ७ ॥

ज्वलन्तमग्निं पात्रेऽन्यो गृहीत्वा पुरतो व्रजेत् ।
ग्रामादेर्वायतो दूरे नद्यादेस्तु समीपतः ॥ ८ ॥

त्रिभाग(नेन? याने) मार्गस्य शिबिकामवतार्य तु ।
दर्भैराकीर्य परितो वातास्ते पान्तु मन्त्रतः ॥ ९ ॥

---

१. 'वामनी' ख. पाठः.

सव्येन चापि वामेन प(र्यं ? री)युस्तत्सुतादयः ।
अप नः शोशुचदयात्स्वसिद्धिर्वादयन्तु च ॥ १० ॥
नीयमानं पुनस्त्वायुर्विश्वाद्यादवलोक्य तु ।
गच्छेयुर्वाहकाः सौम्यास्तान् निवार्य पुनर्नयेत् ॥ ११ ॥
शुद्धायामवनौ शार्वीं शिबिकामवतार्य तु ।
चितां याम्योत्तरायामां खात्वा वस्त्ववटं भुवि ॥ १२ ॥
द्विचतुष्करविस्तारिदी(क्षां ? र्घा) दक्षिणतः प्लवाम् ।
उदक्चिताया वेदाश्रं कुण्डं कृत्वैकमेखलम् ॥ १३ ॥
तन्मूर्द्धो तस्य वायव्ये वेदाश्रं स्थण्डिलं तु तत् ।
हस्तमात्रं षडंशोच्चं सुलिप्तं तत्रयं भवेत् ॥ १४ ॥
तत्सुतो वाथ शिष्यो वा स्नातः संस्कर(णे ? णो)चितम् ।
प्रादक्षिण्यं ततो गत्वा सचिवे स्थण्डिलस्य तु ॥ १५ ॥
उदङ्मुखस्तूपविश्य संहारन्यस्तविग्रहः ।
सकलीकृत्य चात्मानं सा(ध ? द)यित्वास्त्रवर्धनी ॥ १६ ॥
तत्तोयैः प्रोक्ष्य तत्सर्वं चितेरैशे तु मण्डले ।
अस्त्रं पाशुपतं तत्र वर्धन्यां विकिरोपरि ॥ १७ ॥
कृत्वाभिकृतिकोष्ठानि चितायां पञ्चकोष्ठकैः ।
पृथ्व्यादीनां तु तन्मध्ये पार्थिवे पञ्चकोष्ठके ॥ १८ ॥
ब्रह्माणं पूजयेत् पश्चादप्तेजोनि(खिला ? लखा)नि तु ।
पृथक् कोष्ठचतुष्केषु मरुद्रक्षोभिशूलिनाम् ॥ १९ ॥
विष्ण्वाद्यांश्चतुरश्चेष्ट्वा स्वाशाकोष्ठेषु लोकपान् ।
तदस्त्राणि चतुर्दिक्षु व्युत्क्रमेणाभिपूज्य तु ॥ २० ॥
स्थण्डिले तु विलोमेन धर्मवामादिका यजेत् ।
तस्मिंस्तु सतिलं भस्म विकीर्य शिवमर्चयेत् ॥ २१ ॥
कुण्डे तदग्नौ सशिवे हुत्वा पूर्णां जुहोति च ।
काष्ठकीलानधोवक्रान् रक्तसूत्रनिवेष्टितान् ॥ २२ ॥
अप्रदक्षिणमस्त्रेण वह्निकोणादिषु न्यसेत् ।
पृथोभिर्गर्तमापूर्य कुशपुष्पतिलाक्षतैः ॥ २३ ॥

---

१. 'न्तो', २. 'ता', ३. 'स्त' ख. पाठः.

विकीर्यास्त्रेण सम्पूज्य विपरीताम्बरावृतम् ।
मृद्गोमयजलैः पूतं स्थापयेद् भस्मनापि च ॥ २४ ॥
आच्छाद्याहतवासोभिः कुण्डोपान्ते निविश्य तु ।
तद्देहे धारणाशुद्धे संहारिण्या तु मुद्रया ॥ २५ ॥
तच्चैतन्यं तु युञ्जीत तन्नामानं नमोन्तिकम् ।
विद्यादेहं निरूप्यास्य कास्यहृन्नाभिगुह्यकाः ॥ २६ ॥
अतीताद्याः कलाः पश्चाद् विद्यातत्त्वं च विन्यसेत् ।
शक्तिं शिवं च विन्यस्य चैतन्यस्थितये ततः ॥ २७ ॥
मूलेनाज्यं शतं हुत्वा निवृत्त्यादिकलाः क्रमात् ।
वह्नौ नियोज्य सम्पूज्य शिवाद्यावाहनादिकम् ॥ २८ ॥
ताडनं चैव विश्लेषं चैतन्याकर्षणादिकम् ।
जन्माधिकारभोगान्तां स्नातशुद्धिं च निष्कृतिम् ॥ २९ ॥
तिरोधानं पाशभेदं मर्दनं वर्तुलीकृतिम् ।
देहं कारणपादान(?)माधिकारार्पणं तथा ॥ ३० ॥
चैतन्यस्य शिवे योगं कृत्वा कर्म समाप्य तु ।
चितौ याम्यशिरस्कं तमारोप्याच्छाद्य चेन्धनैः ॥ ३१ ॥
सपत्नीकस्य तत्पत्नीमियं नारीति शाययेत् ।
द्वारेषु इमं प्रक्षिप्य मैनमग्न्यादिमन्त्रतः ॥ ३२ ॥
सन्दीपयेत् तु संसृष्टिकुण्डस्थेनैव वह्निना ।
ज्वलत्यग्नौ शिरस्यस्य पूर्णां चानेन पातयेत् ॥ ३३ ॥

ओं

त्वमग्ने दक्षिणकलः कालेनैवोपपातिताम् ।
गृहाण मन्त्रसम्पूतां शव्यामेनां महाहुतिम् ॥ ३४ ॥

इति ।

मैनमग्न्यादिना वी(क्ष्य?)क्षेद्धतयत्पूर्वकेण[2] च ।
सूर्यं ते चक्षुरित्याद्याः षडृचः प्रजपेदपि ॥ ३५ ॥
होता य एतस्य पथ आज्यैर्हुत्वा नवाहुतीः ।
स्रुक्स्रुवौ तावधोवक्त्रौ वह्नौ निक्षिप्य कर्करीम् ॥ ३६ ॥

१. 'षं', २. 'क्षे द', ३. 'खा' क. पाठः.

साक्षावामंसनिहितां भ्रामयन्नप्रदक्षिणम् ।
सिक्त्वा तत्सलिलैः स्नातः पूर्वस्थाने विनिक्षिपेत् ॥ ३७ ॥

शरीरे भस्मसाद्भूते पृष्ठतोऽनवलोकयन् ।
गत्वा धातापुनात्वा(द्याः ? द्यैः) स्नात्वा तीरे कुशास्तृते ॥ ३८ ॥

सव्यजानुं निधायार्घ्यमेतत् ते इति नामतः ।
उदकस्याञ्जलिं दद्यान्मन्त्रैरेभिस्त्रिभिः क्रमात् ॥ ३९ ॥

ओं हां शुद्धात्मन् ईशो भव स्वाहा । ओं हां शुद्धात्मन् सदाशिवो (भव) स्वाहा । ओं हां शुद्धात्मन् शान्तो भव स्वाहा ।

इत्युक्तमन्त्रनामान्तैः कुर्युस्तत्रोदकक्रियाम् ।
ततः स्नात्वोद्वयाद्येन समुपस्थाय भास्करम् ॥ ४० ॥

स्थले विलिप्ते दर्भेषु बलिं तु स्वाख्यया क्षिपेत् ।
संस्कर्तृपूर्वकाः शिष्यपुत्रपत्न्यादयोऽपि च ॥ ४१ ॥

उपवासं प्रकुर्युस्ते भूमौ च शयनं निशि ।
आदशाहं तदाशौचं सकृद्भुक्तं दिवैव तु ॥ ४२ ॥

अनभ्यङ्गं चाङ्गरागताम्बूलादिविवर्जनम् ।
अ(न ? नु)यानादिकं कृत्वा स्पर्शं वास्य गुरोर्यदि ॥ ४३ ॥

स्नानमात्राद् विशुद्धः स्याद् वाहकाद्यास्त्रिवासरात् ।
दिनैस्तु दशभिर्मातृ(पितृ)भ्रातृसुतादयः ॥ ४४ ॥

शिष्याश्चापि विशुध्येयुः स्नानमात्रात् परो जनः ।
चतुर्थे पञ्चमे वाह्नि नवमैकादशाहयोः ॥ ४५ ॥

दीयमानं तु यच्छ्राद्धं नवश्राद्धं प्रचक्षते ।
पूजादिकं तदर्थं तु कुर्युः सर्वेऽस्य बान्धवाः ॥ ४६ ॥

अस्थ्नां सञ्चयनार्थं तु तृतीयेऽह्न्यथ कर्करीम् ।
आपूर्य पयसा चाद्भिस्तास्मिन्नस्थीनि निक्षिपेत् ॥ ४७ ॥

तद् गङ्गादिषु तीर्थेषु निखनेद् वाथ निक्षिपेत् ।
नैवौर्ध्वदेहिकापेक्षा मुमुक्षोरिह विद्यते ॥ ४८ ॥

बुभुक्षुश्चेन्मृतस्तस्य संस्कारोर्ध्वक्रियोच्यते ।
आ दशाहात् प्रतिदिनमेकोत्तराविवृद्धितः ॥ ४९ ॥
तन्नामयुक्तमूलेन देयं स्यात् सतैलं जलम् ।
अन्तर्दशाहं श्राद्धानि दत्त्वाथैकादशे दिने ॥ ५० ॥
उपलिप्य मठान्यन्तः स्नात्वा संसाध्य चौदनम् ।
विशिष्टं ब्राह्मणं त्वेकं वरयित्वा शिवा(ज्ञ ? ज्ञ)यौ ॥ ५१ ॥
निमित्तायेति सङ्कल्प्य पादशौचादिपूर्वकम् ।
उत्तराभिमुखं दर्भेषूपवेश्याभिपूज्य च ॥ ५२ ॥
स्थण्डिले लौकिके वह्नौ विपरीतं परिस्तृते ।
अपूपव्यञ्जनामान्नाद्यं न्यसेत् परिधिबाह्यतः ॥ ५३ ॥
प्रणीतान्तं कर्म कृत्वा याम्येऽग्नेर्मण्डले कुशान् ।
निक्षिप्य दक्षिणाग्रांस्तु तेषु पात्रं तु सादयेत् ॥ ५४ ॥
तस्मिन्नापूर्य सलिलैः कूर्चमन्तर्निधाय तु ।
आम आगच्छतु प्रेत इत्याधात् स्यात् स्वधाग्रहः ॥ ५५ ॥
इमां स्वधां ते प्रेताय गृहाणीत्यन्तकं वदेत् ।
स्त्रियां निमित्तभूतायां स्त्रीशब्दान्तमुदीरयेत् ॥ ५६ ॥
सर्वत्र तु यथाप्रे(ता ? ते)प्रेतायै चैवमादिकम् ।
तिलोऽसि सोमदेवत्यात् तिलांश्च मधुवाततः ॥ ५७ ॥
मधु च प्रक्षिपेच्चाथ सोमस्यत्विषिरादितः ।
सर्वाङ्गुलीभिः संशोध्य यत्किञ्चिच्चैतदुद्धरेत् ॥ ५८ ॥
अवेष्टाद्न्दशूकाद्यैर्नराद्यान्तर्निधाय तु (?) ।
शन्नोदेवीरिति स्पृष्ट्वा संपूज्याच्छादयत् कुशैः ॥ ५९ ॥
आयाहि प्रेत इत्याद्याद् दक्षिणाभिमुखस्तु तम् ।
ददद् रयिं मयि पोषोक्त्यास्मिन्नावाहयेद् द्विजैः ॥ ६० ॥
ओमेकोद्दिष्टकश्राद्धे प्रेताय क्रियतां क्षणः ।
इत्थं सदर्भपाणिभ्यां तद्दक्षिणकरं स्पृशेत् ॥ ६१ ॥

---

१ 'स', २. 'यम्'. ३ 'वीरभीष्टय इति' ख. पाठः.

क्षणं कुर्यामिति ओं तामिति स च ब्रूयात् ततो वदेत् ।
प्राप्नोत्विदं भवांश्चेति प्राप्नवानीति सोऽपि च ॥ ६२ ॥
ततः सदर्भे हस्तेऽस्य दत्त्वाम्भोऽथ स्वधामपि ।
उद्धृत्य दद्यात् प्रेताय स्वधानमइति ब्रुवन् ॥ ६३ ॥
जलं चाथार्चयेच्चैनं ततः ससिकतांस्तिलान् ।
किरेदपहता आद्याद् रक्षायै सर्वतोऽपि च ॥ ६४ ॥
उदीर्तामवराद्येन प्रोक्ष्य भोजनभाजनम् ।
तत्रैकवचनान्तः स्यान्मन्त्रः स्त्र्यन्तो भवेत् स्त्रियाः ॥ ६५ ॥

तदनु उद्धृत्याग्नौ करिष्यामीत्युक्तः काममुद्ध्रियतां काममग्नौ च क्रियतामिति वदेत्, अथाभिमुख्या(त्? न्तं) कृत्वा पक्वादिकान्युद्धृत्या-ज्ञेणावोक्ष्य दर्भैरभिद्योत्याभिघार्य तेषु तिलान् विकीर्यावोक्ष्य ततोऽग्नावाज्ये व्याहृतिभिर्हुत्वा दर्व्यामुपस्तीर्य सर्वस्मात् सकृत् सकृदादायाभिघार्य (दीक्षि-तो? दक्षिणतो) भस्ममिश्रानङ्गारान् निरुह्य तेषु जुहोति प्रेतायामुष्मै नमाय च स्वाहा । अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमःशिवाय स्वाहेति स्वि-ष्टकृद्धोमः । तत्रैव व्याहृतिभिर्हुत्वा परिषिञ्चतु, धूपदीपा(दि?)भिर्गन्धपुष्प-नमस्कारान् विना (आपश्शु? अपूपशु)द्धान्नदधिक्षीरफलबहुलं निमित्तब्राह्मणं भोजयित्वा तद्भुक्तशेषेण अग्नेर्दक्षिणतो दक्षिणाग्रेषु दर्भेषु तिलमध्वा-ज्यप्लुतं पिण्डमनेन दद्यात् । ओम् अयमोदनः कामदुघोऽस्त्वनन्तोऽक्षीय-माणः सुरभिः सर्वकामी स त्वोपतिष्ठत्वजरो नित्यपूतः स्वधां दुहानस्त्वमृतान् नस्तर्पयतु अमुष्मै प्रेताय पिण्डमुपतिष्ठत्विति ।

ऊर्जं वहन्तीराद्येन सेचयेत् स्वधयाख्यया ।
कृतहस्तावसेकाय तस्मै दद्यात् तु दक्षिणाम् ॥ ६६ ॥
यद् यत् तदुपयोगि स्यात् गृहक्षेत्रधनादिकम् ।
भूषणाद्यं च तत् सर्वममुष्मै संप्रदाय तु ॥ ६७ ॥
क्षिप्त्वा पिण्डं तु नद्यां वा स्नात्वा पुण्याहमाचरेत् ।
अवारितं तदन्नाद्यं दत्त्वा चोपवसेत् स्वयम् ॥ ६८ ॥
संस्कृत्य चैकोद्दिष्टान्ते तथा संवत्सरेऽपि च ।
त्रिषु चोपवसेत् कर्ता भुञ्जीताथापरेऽहनि ॥ ६९ ॥

एकोद्दिष्टं विधायैवं सोदकुम्भं तु भोजनम्।
एकोद्दिष्टविधानेन दद्याच्च प्रतिवासरम् ॥ ७० ॥

मा(से ? स्ये)कं मासिकं तद्वत् त्रैपक्षं च त्रिपक्षके।
प्रतिमासं तथा श्राद्धं पिण्डानपि च निर्वपेत् ॥ ७१ ॥

न्यूनषाण्मासिकं चाथ न्यूनसंवत्सरं तथा।
मासिकान् द्वादश श्राद्धैः ++ पिण्डांश्च षोडश ॥ ७२ ॥

दद्यात् संवत्सरान्ते तु सपिण्डीकरणं स्मृतम्।
तत्र सङ्कल्प्य पूर्वेद्युर्विशिष्टान् वरयेद् द्विजान् ॥ ७३ ॥

स्नात्वाप्यस्मिन्दिने भक्तं सापूपव्यञ्जनादिकम्।
संसाध्य शुचिभिः स्नातैः ब्राह्मणैश्चरुपाकवत् ॥ ७४ ॥

दक्षिणोत्तरयोः कृत्वा स्थण्डिले गोमयाम्बुभिः।
स्वाग्निं दक्षिणतस्तद्वदुत्तरे लौकिकानलम् ॥ ७५ ॥

आदाय विश्वेदेवार्थे ब्राह्मणौ प्राक् निमन्त्र्य तु।
पादशौचादिकं कृत्वा प्राङ्मुखावुपवेशयेत् ॥ ७६ ॥

क्षणं कृत्वा सदर्भेषु क्षिप्त्वाम्भस्तत्करेष्वथ।
यवाम्बुनार्घ्यं संपाद्य शुधां स्मृत्वा तु निक्षिपेत् ॥ ७७ ॥

विश्वेभ्यो देवेभ्यः स्वधा नमः स्वाहेति। तदनु
निमित्तार्थं द्विजं योग्यं वरयित्वा तु पूर्ववत्।
पित्रे पितामहायाथ तत्पित्रे च द्विजास्त्रयः ॥ ७८ ॥

स्त्री चेन्मात्रे च तन्मात्रे तन्मात्रे च द्विजत्रयम्।
सर्वे वंशश्रुताचारसंपन्नाः शिवतत्पराः ॥ ७९ ॥

तान् संपूज्य तदन्नाद्यं द्विधा सर्वं विभज्य तु।
देवांशकल्पितं यत् तत् पात्रे क्षिप्त्वाभिघार्य तु ॥ ८० ॥

अनन्नाकुष्ठतस्ताभ्यां विश्वेदेवेभ्य इत्यपि।
स्वाहान्तं दर्शयेत्वाथ प्राचीनावीतमुद्वहन् ॥ ८१ ॥

तत्रै(व वि ? वास)हतायेन किरेत् ससिकतांस्तिलान्।
अधीरतामवरतः पितरश्चन्द्रसंयुतान् ॥ ८२ ॥

प्राग्वत् स्थानान्यवोक्ष्याथ लौकिकाग्नेस्तु दक्षिणे ।
दक्षिणाग्रेषु दर्भेषु पृथक् पात्राणि सादयेत् ॥ ८३ ॥
सर्वं पक्वमुदङ् न्यस्येत् पर्यग्निकरणं चरेत् ।
सादितेष्वथ पात्रेषु पित्रादिभ्यः स्वधां क्रमात् ॥ ८४ ॥
कृत्वा तिलोऽसीत्याद्येन तिलान् प्रक्षिप्य पूर्ववत् ।
मधुवातेति च मधु सोमस्य त्विषिरादितः ॥ ८५ ॥
पिष्टावेषो दन्दशूकान् त्यक्त्वा(?) पूर्वं यथोदितम् ।
आम आगच्छन्तु पूर्वेण पित्राद्याख्यापुरस्सरम् ॥ ८६ ॥
स्वधाकृत्वा चाभिम(न्त्र्येत् ? न्त्र्य)शन्नो देवीरिति स्पृशेत् ।
संपूज्य दर्भैराच्छाद्य धौतपादान् द्विजांस्तु तान् ॥ ८७ ॥
पित्राद्यर्थान् दक्षिणतः प्रेतार्थमपि चोत्तरे ।
दर्भासनेषूपवेश्य सर्वांस्तानुत्तरामुखान् ॥ ८८ ॥
प्राग्वदग्नौ करिष्यामीत्युक्तैरुक्तस्तथेति च ।
परिधानाग्नि याम्येऽमाविद्धेत्वाग्निमुखान्तरम् ॥ ८९ ॥
पञ्चावत्तं स्रुवेणाज्यं मन्त्रैरेभिर्जुहोति च ।

-याः प्राची संभवन्तीत्यादिः प्रथमः । अन्तर्दधे पर्वतैरित्यादिर्द्वितीयः । अन्तर्दधे ऋतुभिरित्यादिस्तृतीयः । यन्मे मातेत्यादिश्चतुर्थः । यद्रुस्तप्यादमित्यादिः पञ्चमः ।

अपूपमष्टधा कृत्वा सोमायेत्यादिनांशतः ॥ ९० ॥
अग्निरस्वन्तमूतये यदग्ने कव्यवाहन ।
त्रि(भि)र्हुत्वा त्रिखण्डानि स्रुचमादाय वै ततः ॥ ९१ ॥
चरुमन्नं यवागूं च हुतशेषाज्यमिश्रितम् ।
दर्व्योपघातं जुहुयात् पितृतर्पणपूर्वकैः ॥ ९२ ॥

अथाग्नये कव्यवाहनायेति दक्षिणार्धपूर्वार्धे । (प्रेम? प्रो)क्षणप्रहरणान्तं कर्म कृत्वा पृथिवी ते पात्रमित्यभिमृश्योत्तराग्निं परिषिच्य दर्व्यामुपस्तीर्य सर्वस्मात् सकृत् सकृदवदायाभिघार्य दक्षिणतोभस्ममिश्रानङ्गारान् निरुह्य तेषु ओं प्रेतायामुष्मै यमाय च स्वाहा । अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः स्वाहेति[1] जुहुयात् । तथैव परिषिच्य विश्वेदेवार्थं प्राग्वत् संस्कृतमन्नाद्यं

1. 'स्वेन वि' ख. पाठः.

पात्रयोः प्रक्षिप्य पृथिवी ते पात्रमित्यभिमृश्येदंविष्णवादिना अनखाङ्गुष्ठेनान्नाद्यं स्पर्शयित्वा पित्रादीनां कृतक्षणानां सपवित्रेषु हस्तेषु प्राग्वच्छुद्धजलं स्वधानाममिश्रं प्रक्षिप्य तत्पात्रेष्वन्नाद्यं च स्पर्शयित्वा तेषां हस्तेष्वपामशनं च दत्त्वैवं निमित्तस्य च तत्र प्राणे निविष्टोऽमृतं जुहोमीत्याद्यान् प्राणाहुतिमन्त्रान् क्रमेण स्वयं जपति । ते च स्वस्वमुखेषु जुहुयुः । स्वयं चाभिश्रावणान् श्रावयति कृणुष्वपाजादिं राक्षोघ्नप्रकारेण प्रत्यृचं दशाशसाद्यन्तम् ऋचां प्रा(ची)तिसूक्तं त्रिणाचिकेतं त्रिसुपर्णमीशानं च जपति ।

अथ भुक्तवत्सु मेकणनान्नं (?) दर्शयन् तृप्ताःस्थेति ब्रूयात् । ते च तृप्ताःस्म इति ब्रूयुः । तदन्नं सजलं प्रादक्षिण्येन भूमावनेन किरति ।

ये अग्निदग्धान्युतऽोवात्वदग्धाः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिमिति ।

अथ दक्षिणाभिराच्छादनैश्च परितोष्य पित्रादीन् क्रमेणोत्थाप्य तदनु निमित्तं च शेषान्नाद्यमनुज्ञाप्य उत्तराग्नौ व्याहृतिभिर्हुत्वा शेषं कृत्वा तमग्निं विसृज्य प्रेतपात्रस्थजलं पित्रादिस्वधापात्रेषु क्रमान्मधुवाता ऋतायते इति तिसृभिः सङ्गच्छध्वमिति द्वाभ्यां नियोज्य दक्षिणस्माद् दक्षिणतोऽग्नेर्दर्भान् संस्तीर्य पितृतर्पणमन्त्रैः पिण्डान् दत्त्वाभ्यर्च्य दर्भैराच्छाद्य प्रेतपिण्डं पितृपिण्डेषु त्रिधा नियोजयति । समानो मन्त्रः समितिरित्यादिना समानी व आकूतिरिति द्वाभ्यां पित्रादिपिण्डानेकीकृत्याथ ये समाना ये सजाता इति द्वाभ्यामेनानुपतिष्ठेत । तेन स्वधापात्रजलान्येकीकृत्य पिण्डं परिषिञ्चति । ततो यज्ञोपवीती जयादिप्रायश्चित्तान्तं हुत्वा आधेनुवरप्रदानान्तं कर्म कृत्वा पित्रादीन् देवांश्चोद्वास्याद्वारादनुज्ञातो द्विजेभ्यो लिङ्गिभ्योऽर्थिभ्यः स्वजनेभ्यश्चानिवारितमन्नाद्यं दाक्षिणाश्च शिवार्पणबुद्ध्या दत्त्वा तदुद्देशेन शिवपूजां विदधीत । शक्तश्चेल्लिङ्गं च तदर्थं प्रतिष्ठाप्य यथाविभवं पूजादिकं कल्पयेत् । निमित्तं चाभिमतस्वर्गादिभोगैः संयोज्य स्वयमप्यैहिकामुष्मिकान् कामानाप्नोति ।

सपिण्डीकरणाधिकारः ।

---

मातापित्रोस्तथा भ्रातुर्मातुलाचार्ययोरपि ।
अन्येषामपि बन्धूनां वर्षे वर्षे तु तद्दिने ॥ ९३ ॥
कुर्यात् संवत्सरश्राद्धं तांस्तान् बोद्दिश्य शक्तितः ।
अथाष्टकाश्राद्धविधिः कथ्यतेऽत्र समाहितः ॥ ९४ ॥

उक्तं च पुराणादिषु —

"नभस्यमासस्य तु कृष्णपक्षे त्रयोदशी पञ्चदशी च माघे ।
उपप्लवे चन्द्रमसश्च* भानोस्तिस्रोऽष्टकायामयनद्वये च ॥
पानीयमप्यत्र तिलैर्विमिश्रं दद्यात् पितृभ्यः प्रयतो मनुष्यः ।
(तत्तज्ज ? दत्तं ज)लान्नं प्रददाति तृप्तिं वर्षायुतं तत्कुलजैर्मनुष्यैः ॥"

इति । अपिच ।

"अमावास्यासु सर्वासु त्रयोदश्यष्टमीषु च ।
कृष्णपक्षे विशेषेण व्यतीपाते क्षयेषु च ॥
विषुवे चैव पञ्चम्यां नवधान्यादिसंभवे ।
क्षेत्रतीर्था(दि)गमने श्रोत्रिये च गृहागते ॥
स्वप्ने वा स्वपितॄन् दृष्ट्वा श्राद्धं कुर्वीत भक्तितः ।
कुलशीलश्रुताचारसम्पन्नांस्तु द्विजोत्तमान् ॥
शिवभक्तान् विशेषेण पूर्वेद्युर्वरयेन्निशि ।
चरुपाकोक्तमार्गेण चुल्लीषु शुचयो द्विजाः ॥
स्नाताः शुक्लाम्बरधराः साधयेयुश्च तद्धविः ।
श्राद्धे शस्तानि धान्यानि ग्राम्यारण्यानि सर्वशः ॥
वर्जयित्वा कुलत्थानि चणकांश्चैव कोद्रवान् ।
पुलाकांश्चैव कङ्गूंश्च निष्पावांश्च विशेषतः ॥
फलेष्वपि च विल्वानि ककुभाक्षमलाम्बुकम् (?) ।
बिम्बं च त्रापुषं चाथ मूलेषु लशुनं तथा ॥
पलाण्डुमूलकं चापि शाकाद्यपि च वर्जयेत् ।
वर्ज्यं हि लवणं श्राद्धे हिङ्गुश्च मरिचानि च ॥
कुस्तुम्बुरूणि पिण्याकं (चै ? तै)लं चाभ्यञ्जनं विना ।
शस्तं क्षीरं च दध्याज्यं गव्यं श्रेष्ठं च माहिषम् ॥
मध्यं चाजाविकं नीचं वर्ज्यं मथितकाञ्जिके ।
(विश्वेदेवा द्विजाः प्रीताः ? )

---

* 'यतो रवेश्च त्रिष्वष्टकास्वप्ययनद्वये च' इति विष्णुपुराणे पाठो दृश्यते ।

सुमुखान् सुव्रतान् स्नातानन्चानान् विशेषतः ।
भोजयेदागतान् सम्यक् पादशौचादिपूर्वकम् ॥"

अत्र स्मृतिः —

त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः ।
त्रीणि चात्र प्रशंसन्ति शौचमक्रोधमत्वरम् ॥

दिवसस्याष्टमे भागे मन्दीभवति भास्करे ।
स कालः कुतपस्तस्मिन् पितॄणां दत्तमक्षयम् ॥

पयसा मासिकी तृप्तिः पायसेन तु वार्षिकी ।
मध्वाज्यपायसैस्तृप्तिर्भवेद् द्वादशवार्षिकी ॥

पितॄणामिति ।

वर्ज्यः कालेषु पूर्वा(ह्ले ? ह्णः) सन्ध्ये नन्दा चतुर्दशी ।
शुक्रज्ञजीववारा(श्च) पू(र्णाः ? र्वाः) कर्तुश्च जन्मभम् ॥"

अथ प्राङ्गणे गोमयेन चतुरश्रं हस्तविस्तीर्णं मण्डलमुपलिप्य प्रागग्रान् दर्भान् सयवानक्षतानास्तीर्य तस्मिन् युग्मान् विश्वेदेवबुद्ध्या ब्राह्मणान् पादयोः सयवमर्घ्यं दत्त्वा मृज्जलैः प्रक्षालिताङ्घ्रीन् स्वाचान्तानन्तः प्रवेश्य सदर्भासनेषु प्राङ्मुखानुपवेश्य तदनु पश्चिमतः सयाम्याग्रदर्भे कृतमण्डले पितृपितामहप्रपितामहानयुजो द्विजान् सतिलजलार्घ्यपूर्वं क्षालितचरणान् स्वाचान्तानन्तः प्रवेश्योदङ्मुखान् सदर्भविष्टरेषूपवेश्य पुनश्च पितृमण्डलाद् दक्षिणतः सदक्षिणाग्रदर्भे मण्डले मातृपितामहीप्रपितामहीभ्यः प्राग्वद् ब्राह्मणान् कृतपादशौचाननन्तरं तत्र प्रवेश्य, तदनन्तरं मातामहमातुःपितामहमातुःप्रपितामहेभ्यः सपत्नीकेभ्यो ब्राह्मणान् प्राग्वन्निवेश्य आयन्तु पितर इत्यादिना क्षणं कृत्वा पित्रादिभ्यो मात्रादिभ्यो मातामहादिभ्यश्च पात्रत्रये प्राग्वन्मन्त्रैः स्वधां कृत्वा अपहता असुरादिनाक्षेण च ससिकतांस्तिलान् विकीर्य तेषां सदर्भहस्तेषु शुद्धजलं स्वधाजलं च प्राग्वन्मन्त्रतः पृथक् क्रमेण दत्त्वा(त्वादिकैः?) पितॄन् विलोमतोऽभिपूज्य प्राग्वत् संस्कृतं (चा ? च)र्वादिकं सपिण्डीकर(णं ? णवद्) जुहुयात् । विशेषस्त्वपूपहोमानन्तरम् इयमेव सायात्प्रथमा व्यौच्छदिति पञ्चदशकं जुहुये इत्येकां संवत्सरस्य प्रतिमासिकाम् ओं अग्नये कव्यवाहनाय स्वधा नमः शिवाय स्वाहा इत्यादि सोमाय पितृमते यमाय अर्यम्णे अङ्गिरसे अग्निष्वात्तेभ्यो बर्हिषद्भ्यः सोमपेभ्य ऊष्मपेभ्यश्च जुहुयात् । आज्यं (प्राकाम?)-

स्त्वेकैकशस्तच्छेषान्नं पित्रादीनां पात्रेषु प्रक्षिप्याज्यं तिलैरुपस्तृणाति। अथ शुद्धोदनपायसघृतगुलापूपफलभूयिष्ठमन्ना(ज्यं ? द्यं) त्रिधा विभज्य (पा? भा)गेन पूर्वं देवेभ्यः प्रक्षिप्याथ पुरुषेण प्रोक्ष्याभिमन्त्र्य पित्रादिभोज्येषु तिलान् विकीर्याघोरेण परिषिच्य वामदेवेन स्वोत्तानकरेण तस्यानुत्तानकरं हविषः प्रदक्षिणं नीत्वा तत्तदङ्गुष्ठाग्रेण इदं विष्ण्वादिना विष्णो हव्यं रक्षस्वेति भोज्यानि स्पर्शयित्वा स्वकरे जलं गृहीत्वा अमुष्मिञ्छ्राद्धे विश्वेभ्यो देवेभ्य इदमन्नं दत्तं दास्यमानं चातृप्तेस्तत् सर्वं न ममामृतायेत्यशनं पुरुषेणामृतोपस्तरणमसीति दद्यात्। पित्रादिभ्यश्चैवमेव। विशेषस्तु विष्णो कव्यं रक्षस्वेति स्पर्शयेत्, अमुष्मिञ्छ्राद्धे पितृभ्य इत्यादिना च। पित्रादिभ्योऽप्यपामशनं पूर्ववद् दद्यात्। ते च ता अपो यथापूर्वं पिबेयुः। तत्प्राणाहुतिमन्त्रान् प्राणे निविष्टो अमृतं जुहोमीत्यादीन् यजमान एव पठति। तेच ता आहुतीः स्वयमेव जुहुयुः। तदनु जानुमध्यस्थवामकरेण पात्रस्पर्शस्तथैव दक्षिणेन यथाजोषं मौनिनः प्रभुञ्जीरन्। यजमानोऽप्युत्तराभिमुखम् ईशानसंपुटं रक्षोघ्नान् कृणुष्वपाजादीनृचां प्राचीत्यादींश्च त्रिनाचिकेतं त्रिसुपर्णान् जपंस्तिष्ठेत् (ज्येष्ठसामानिव?) तस्मिन् काले यद्यागच्छेदतिथिः तमपीश्वरबुद्ध्या मृष्टं शिष्टान्ना(न्न ? नि) भोजयेत्। अथ तृप्तेषु दर्व्यान्नमादाय सर्वेभ्यस्तृप्ताः स्थेति दर्शयेत्। ते च तृप्ताःस्म इति ब्रूयुः। तच्च भूमौ विकिरेत्, ये अग्निदग्धा जाता जीवा येत्वदग्धाः कुले मम भुमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिमित्यादिना प्राग्वद् विकीर्यामृतापिधानमसीति चुलुकं च दद्यात्, ते तत् पीत्वा कृतहस्तावसेचनास्तथैवासीरन्। तत्रैव मण्डले सव्येन दर्भान् वामेन तिलान् विकीर्य मुक्तशेषादादाय पिण्डान् सतिलाज्यदधिमधूनीशपुरुषाघोरैः एतत् ते पितरित्यादिभिर्मूलान्तैः पित्रादिभ्यो निर्वपेत्। तद्यथा — एतत् ते पितासौ ये ते मातामहा ये त आचार्या ये ते गुरवो ये ते सखायो ये ते ज्ञातयो ये तेऽमात्या ये तेऽन्तेवासिनस्तेभ्यश्च पत्नयस्तेभ्यस्ताभ्यश्च स्वधा नम इति। एतत्ते पितामहा इत्यादिना च। एवं एतत्ते प्रपितामहा इत्यादिना च। तथा च तद्वन्मात्रादिभ्यो(यु ? मा) तामहादिभ्यश्च पिण्डांस्त्रीन् प्रदायाथ भूमौ दर्भेष्वन्नशेषं विकीर्यात्रास्यमेभिर्निमार्ष्टि। येन पातिता गर्भा असृग्भाज उपासते तेभ्यः स्वजाः स्वधा नमस्तृप्नुवन्तु मदन्तु च। ये आमा ये च पक्वा ये च दुष्टाः पतन्ति नः।

१ 'विरजामध्य' ग. पाठः. २. 'त्रा' क. पाठः.

तेभ्यः स्वजाः स्वधा नमस्तृप्नुवन्तु मदन्तु च । ये कुमारा ये स्त्रियोऽविज्ञाताः पतन्ति नः ।

तेभ्यः स्वजाः स्वधा नमस्तृप्नुवन्तु मदन्तु च । अथैनान् संक्षालनेन ये समाना ये सजाता इति द्वाभ्यां त्रि(रवसलं? रपसव्यं) वामेनाप्यूर्जं वहन्तीरित्यादिना च मूलान्तं परिषिच्य वसनाभरणहिरण्यादिकां दक्षिणां दत्त्वा स्वधापात्रमुत्तानयेत् । अथ पुरुषादिना वाजेवाजेत्यादिना करे गृहीत्वा द्विजानुत्थाप्य तान् प्रदक्षिणीकृत्य यजमानः प्रणमति । ते च ब्राह्मणाः संपितर इत्यादिनाशिषः प्रयुञ्जीरन् । अन्नशेषैः किं क्रियतामिति यजमानेन पृष्टैरिष्टैः सहोपभुज्यतामित्यभिधाय गन्तव्यम् । स च तानाद्वारादनुव्रजेत् । ततः पितृतर्पणमन्त्रैश्चतुर्विंशतिपिण्डान् स्वाहाविवर्जितैः प्रक्षिप्य प्रागवदूर्जंवहन्तीरिति परिषिच्य जयादिप्रायश्चित्तान्तमाधेनुवरप्रदानान् कर्म कृत्वा प्रणीतोत्सेचनान्तमग्निं विसृजेत् । तदनु पुत्रकामा या पत्नी मध्यमं पिण्डमाधत्त पितर इत्यादिना प्राश्नाति । अथ ब्राह्मणानन्यांश्च भोजयित्वा पुत्रमित्रभृत्यादिभिः सहितः पितृशेषमश्नन्नैहिकामुष्मिकानपि सर्वान् कामान् प्राप्नोति ।

इतीदमन्त्येष्टिविधानमीरितं पृथक् नवश्राद्धविधिं च षोडशैः ।
ततः सपिण्डीकरणं तथाष्टका निरूप्य तन्त्रेषु यथोदितं विधिम् ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे उपरिभागे
क्रियापादे अन्त्येष्टिपटलो द्विषष्टितमः ॥

---

### अथ त्रिषष्टितमः पटलः ।

च्युतस्खलितदोषाणामद्भुतानां च शान्तये ।
नित्यनैमित्तिकानां तु प्रायश्चित्तं निगद्यते ॥ १ ॥
त्रिलोकसंख्यायजने हीने निर्माल्यशोधने ।
क्रमात् कनिष्ठस्नपनैः स्नपयेत् पूजयेदपि ॥ २ ॥
सन्ध्यासु यदि निर्माल्यं लिङ्गमूर्धनि तिष्ठति ।
सान्निध्यं हन्ति देवस्य राज्ञः शक्तिं च हापयेत् ॥ ३ ॥
गन्धहानौ तु दारिद्र्यं पुष्पहानौ श्रियश्च्युतिः ।
धूपदीपविहीनं यदर्चनं रोगदुःखदम् ॥ ४ ॥

१. 'त्रिमिर' क. पाठः.

नैवेद्यहीनं दुर्भिक्षमग्निकार्ये च्युते सति ।
अनावृष्टिभयं राष्ट्रे बलिच्छेदे प्रजाक्षयः ॥ ५ ॥
नित्योत्सवस्य हानौ स्यात् परचक्रभयं सदा ।
महोत्सवस्य विच्छेदे राज्ञः कर्तुश्च नाशनम् ॥ ६ ॥
तस्मान्न हापयेत् कश्चिदुपचारं विचक्षणः ।
यथाक्तोचा(र ? रात्)सम्पद् विवर्धते ।
प्रमादाद् वाथवा विघ्नात् पूजादेरिह विच्युतौ ॥ ७ ॥
तत्तद्द्विगुणितां पूजां कृत्वाघोरशतं जपेत् ।
वृषयागविहीने तु गवां नाशो भवेद् यतः ॥ ८ ॥
तच्छान्त्यै वृषभस्यैव पूजा द्विगुणिता भवेत् ।
ध्वजहीनोत्सवे राज्ञः शत्रुपीडा भवेद् यतः ॥ ९ ॥
तद्भङ्गे वा पताकाया मारी राष्ट्रे प्रवर्धते ।
तच्छान्त्यै तु ध्वजस्यैशे कुण्डेऽग्नौ वृषमन्त्रतः ॥ १० ॥
समिदाद्यष्टभिर्हुत्वा वृषं चैव शिवं यजेत् ।
पुनरपि ध्वजमुच्छ्रित्योत्सवं प्रवर्तयेदिति यावत् ।
मङ्गलाङ्कुरहीने स्याद् राजादीनाममङ्गलम् ॥ ११ ॥
त्रियम्बकाग्निना हुत्वा सविशेषं शिवं यजेत् ।
हीने कौतुकबन्धे तु राष्ट्रे रक्षा विनश्यति ॥ १२ ॥
तत्र त्रैयम्बकेनाज्यं हुत्वेष्ट्वा कलयेच्च तम् ।
चूर्णोत्सवं विना रोगो राष्ट्रे भवति शान्तये ॥ १३ ॥
मृत्युञ्जयेन हुत्वात्र सविशेषं शिवं यजेत् ।
तीर्थयात्रां विना राष्ट्रं जलाभावेन पीड्यते ॥ १४ ॥
हुत्वाज्यं संहितामन्त्रैस्तीर्थयात्रां प्रवर्तयेत् ।
ध्वजावरोहणे हीने पीडयेच्चण्डमारुतः ॥ १५ ॥
कृत्वा तु पूर्ववच्छान्तिं शिवमिष्ट्वावरोपयेत् ।
उत्सवावाहितानां तु गणानामविसर्जने ॥ १६ ॥
राष्ट्रक्षोभो भवेच्छान्त्यै शिवमिष्ट्वा जयाबलिम् ।
विकीर्य तु गणान् सर्वानभिपूज्य विसर्जयेत् ॥ १७ ॥

नित्योत्सवे(न ? तु) लिङ्गं वा बेरं वापि महोत्सवे ।
पतितं यदि यानादे राजराष्ट्रादिनाशकृत् ॥ १८ ॥
प्रायश्चित्तं तु तत्रैव देवं विन्यस्य सर्वतः ।
तिरस्करिण्या संवेष्ट्य समालिप्य च तत् स्थलम् ॥ १९ ॥
स्नात्वा कृत्वा तु पुण्याहमन्त्रलिङ्गमथापरम् ।
विधाय तच्च बेरं च तत्रैव विधिनार्चयेत् ॥ २० ॥
नवकेनाभिषिच्याथ शाल्यन्नं घृतपायसम् ।
निवेद्यात्राग्निमाधाय प्राच्यां नामान्तसंस्कृते ॥ २१ ॥
घृतं चरुं च समिधो मधुक्षीरं च लाजकान् ।
ईशादिभिस्तु सद्यान्तैर्गायत्र्या श्वेतसर्षपैः ॥ २२ ॥
तिलैरस्त्रेण मूलेन शालिभिश्च शतं शतम् ।
हुत्वाथाधारशक्त्यादिमन्त्रैश्चापि दिगीश्वरैः ॥ २३ ॥
दिशि यस्यां तु तल्लिङ्गं च्युतं तत्पालमन्त्रतः ।
तिलाज्याभ्यां शतं हुत्वा जयादिं निष्कृतिं तथा ॥ २४ ॥
कृत्वा स्विष्टकृतं दद्याद् दिक्पालोक्तां तु दक्षिणाम् ।
हैमो गजो हिरण्यं च माहिष्या माहिषान्विताः ॥ २५ ॥
हैमच्छागस्तथा हारः पित्तलं हैमसंयुतम् ।
पयस्विन्यश्च रूप्यं च दक्षिणाः कथिताः क्रमात् ॥ २६ ॥
पुनः प्रवर्तयेद् यात्रां शिष्टं च विकिरेद् बलिम् ।
बेरं चेत् पतितं भिन्नं तत्रोक्तात् तु चतुर्गुणम् ॥ २७ ॥
प्रायश्चित्तं दक्षिणा च स्यादन्नं चाप्यवारितम् ।
बेरमन्यं प्रतिष्ठाप्य यात्राशेषं प्रवर्तयेत् ॥ २८ ॥
महास्नपनपूजां च मूललिङ्गे प्रवर्तयेत् ।
पूजाविच्छेदकालस्य गौरवानुगुणेन तु ॥ २९ ॥
प्रायश्चित्तं प्रकुर्वीत तत्कालद्विगुणार्चनम् ।
होमं च दक्षिणां चापि दत्त्वा पूजां प्रवर्तयेत् ॥ ३० ॥
आ द्वादशाहात् पूजाया विच्छेदे निष्कृतिः स्मृता ।
लिङ्गे तु मानुषे पश्चात् प्रतिष्ठामेव कारयेत् ॥ ३१ ॥

1. शाल पूं ख. पाठः.

आर्षस्वयंभुलिङ्गानां कृत्वा संप्रोक्षणं पुनः ।
जीर्णस्थापनमात्रेण स्नपयित्वा तु पूजयेत् ॥ ३२ ॥

शिवकुम्भास्त्रयोर्भङ्गे कर्तुर्मरणमादिशेत् ।
आज्याद्यैः संहितामन्त्रैस्तत्र हुत्वा शतं शतम् ॥ ३३ ॥

तिलाज्यमस्त्रतश्चान्ये कुम्भास्त्रं तत्र पूजयेत् ।
पूजिते स्नपनार्थं तु कलशे कलशेषु वा ॥ ३४ ॥

भिन्ने(खि? भि)न्नेषु वान्यांस्तु समापूर्यार्चयेत् तथा ।
अस्त्रेणाज्यशतं हुत्वा तेषु संपातयेद् घृतम् ॥ ३५ ॥

तद्वत् तावज्जपित्वा तु स्वर्णं दद्याच्च शान्तये ।
प्रासादे प्राङ्गणे वापि मृते वा रुधिरक्षते ॥ ३६ ॥

मूत्रविष्ठादिसिक्ते वा श्वोदक्यासूतिकादिभिः ।
चण्डालैर्वा सृगालैर्वा गृध्रोलूकैश्च गर्दभैः ॥ ३७ ॥

प्रविष्टे च प्रसूते च प्रायश्चित्तं निगद्यते ।
तत्र तां तां भुवं खात्वा द्विहस्तं परितोऽप्यथ ॥ ३८ ॥

उद्धृत्य तां मृदं त्यक्त्वा गोकरीषाग्निना[1] दहेत् ।
तद् भस्म च परित्यज्य गोमूत्रेणाभिपूर्य तु ॥ ३९ ॥

विप्रपादाम्बुतीर्थाद्भिः पञ्चगव्येन च क्रमात् ।
गोभिराक्रामयेच्चाष्टमृद्भिरापूरयेदपि ॥ ४० ॥

प्रपां[2] वा मण्डपं कृत्वा ब्राह्मणांस्तत्र भोजयेत् ।
दक्षिणेऽर्धेन्दुकुण्डेऽग्नौ संस्कृते चाहिते शिवे ॥ ४१ ॥

औदुम्बरीं[3] चापामार्गसमिधं च घृतं चरुम् ।
सिद्धार्थांश्च क्रमादष्टसहस्रं तु पृथक् पृथक् ॥ ४२ ॥

ईशान्यैर्ब्रह्मभिर्हुत्वा पुनः शालीस्तिलान् यवान् ।
मुद्गान् समधुरा दूर्वाः पायसं च(रवः? चरुं) क्रमात् ॥ ४३ ॥

ब्रह्मभिश्चैव मूलेन गायत्र्या जुहुयात् पुनः ।
अङ्गानां तद्दशांशेन सर्वद्रव्यैर्जुहोति च ॥ ४४ ॥

---

१. 'दि' क. पाठः. २. 'पान् क', ३. 'प' ख.पाठः.

अनिवारितमन्नाद्यं दत्त्वा क्षेप्यो बलिर्निशि ।
प्रतिष्ठादिस्नपनेनापि स्नपयित्वोपपत्तितः[1] ॥ ४५ ॥
दक्षिणाश्च प्रदेयानि दत्त्वा पूजां प्रवर्तयेत् ।
लिङ्गे पाषण्डचण्डालश्वादिस्पृष्टेऽभिचारकैः ॥ ४६ ॥
मन्त्रैर्युक्ते च पूर्वोक्तं गोसञ्चारादि कर्म यत् ।
सर्वं कृत्वाथ कोशं तु कृत्वा यज्ञतरूद्भवम् ॥ ४७ ॥
(घृ ? कृ)तवार्यन्तसंस्थानं सुवृत्तं गोलकोपमम् ।
लिङ्गोपरि च तालोच्चं कृत्वा नीरन्ध्रमाहितम् ॥ ४८ ॥
व्यस्तैर्गव्यैः[2] समस्तैश्च त्रिदिनं त्रिदिनं क्रमात् ।
कषायैरष्टमृद्भिश्च गन्धतीर्थोदकैरपि ॥ ४९ ॥
व्योमव्यापिद्वयेशास्त्राद् ब्रह्मप्रासादतारकैः ।
मृत्युञ्जयेन मूलाङ्गै रुद्रैश्च पवमानकैः ॥ ५० ॥
आपूर्याथ जपेयुश्च एकविंशतिवासरान् ।
चतुर्दशा(हा)ह्ना सप्त दोषगौरवयुक्तितः ॥ ५१ ॥
अष्ट + + + + + + + + वा पतिते मृते ।
पञ्चगव्येन संप्रोक्ष्य कृत्वा पुण्याहवाचनम् ॥ ५२ ॥
प्रोक्तमन्त्रादिभिः प्राग्वज्जुहोत्यप्सुमतेऽग्नये ।
गौरवानुगुणमाहुतिबाहुल्यं दक्षिणागौरवं चाप्यूह्यम् ।
तथा रजस्वलास्पर्शे जुहोत्यशुचयेऽग्नये ॥ ५३ ॥
स्नपने वा प्रतिष्ठादावसमाप्ते तु कर्मणि ।
यजमानो मूर्तिधरो गुरुर्वा संस्थितो यदि ॥ ५४ ॥
तत्रापि गव्यपुण्याहकुम्भाग्नियजनादनु ।
त्वं नो अग्न्यादितिसृभिः संहिताभिश्च पूर्ववत् ॥ ५५ ॥
हुत्वाथ गोहिरण्याद्यं दत्त्वा कर्म प्रवर्तयेत् ।
अन्नाद्यं ब्राह्मणादिभ्यः प्रदेयं स्यादवारितम् ॥ ५६ ॥
चतुर्थी(?) स्नपनादर्वाम् (भवने ? भग्ने) वा तोरणध्वजे ।
उक्तहोमादिविच्छेदे तत्राप्युक्तप्रकारतः ॥ ५७ ॥

---

1. 'स्नापयित्वोपवर्तितः' २. 'र्ग', ३ 'ना' क. पाठः.

पञ्चगव्यादिहोमान्ते तत् तद् विन्यस्य पूजयेत् ।

अल्पप्रायश्चित्तम् ।

---

अथ प्रासादद्वाराद्यु वल्मीकं वाथवा मधु ॥ ५८ ॥
जायेत रक्तकन्या वा गृध्रोलूककपिञ्जलाः ।
गर्भागारं विशेयुर्वा विमाने वाशनिः पतेत् ॥ ५९ ॥
तत्रापि पूर्वकथितदोषशान्तिं तु कारयेत् ।
अथोत्पातेषु जातेषु धूमकेतूद्गमादिषु ॥ ६० ॥
भूमिकम्पे दिशां दाहे चण्डवातेऽग्निविप्लवे ।
अवातवृक्षपाते वा शक्रचापोद्गमे निशि ॥ ६१ ॥
अद्भुतेष्वथ चान्येषु तद्दोषप्रशमाय तु ।
अस्त्रयागं पुरा कृत्वा सविशेषं शिवं यजेत् ॥ ६२ ॥

तद्यथा —

प्राच्यामैशेऽथवोदीच्यां प्राग्वत् कृत्वा तु मण्डपम् ।
अलङ्कृत्य तु पुण्याहं विकिरक्षेपपूर्वकम् ॥ ६३ ॥
कुम्भास्त्रयजनाद् भ्रान्त्वा वध्यां कृत्वा तु भद्रकम् ।
षडङ्गमूलेनाङ्गैश्च तद्वर्णविहितैः क्रमात् ॥ ६४ ॥
जातियुक्तै(स्तु ? र्पि) तथा सकलीकृतविग्रहः ।
विघ्नमिष्टार्घ्यमापूर्य तिलकी पुष्पशेखरः ॥ ६५ ॥
शक्त्यनन्तासनादूर्ध्वं धर्मादिगुणपङ्कजैः ।
कल्पान्तार्कशतद्युतिर्दशभुजो दंष्ट्रोग्रपञ्चाननः
पिङ्गश्मश्रुजटोद्भटास्त्रिणयनो मुण्डस्रजा मण्डितः
टङ्कं चर्म कपालचापभुजगानङ्कुशासिवह्नीन् शरं
बिभ्रद्भोगिविभूषणो डमरुकं व्याघ्राजिनात्ताम्बरः ॥ ६६ ॥
एवं ध्यात्वा तु मूलाङ्गैः सकलीकृत्य पूजयेत् ॥ ६७ ॥
अर्घ्याद्यैरथ भोगानामासनच्छन्दनादिषु ।
विधेयाङ्गांश्च तद्दिक्षु तद्बाह्ये दशलोकपान् ॥ ६८ ॥

---

१. 'द' क. पाठः.

तच्छस्त्राण्यभितस्तेषां यथावदभिपूजयेत् ।

तद्वत् त्रिकोणकुण्डेऽग्नौ स्वादिगणां समिद्भिश्च संक्षाल्य क्षीरित्वक्पिष्ट-भस्मभिः(?) ।

लक्ष्मीदेवीसहादूर्वाक्रान्त्येकादशपङ्कजैः ॥ ६९ ॥
शङ्कवल्लीसदाभद्रामुसलीमधुपाह्वयैः ।
रोचनागरुकर्पूरमांसीकुङ्कुमचन्दनैः ॥ ७० ॥
उशीरमुरुकुष्ठानां पिष्टैरपि च लेपयेत् ।
प्रक्षाल्य तीर्थसलिलैर्बिल्वपत्रैश्च घर्षयेत् ॥ ७१ ॥
अमन्त्रं पूजयेत् प्राग्वदधिवासनमण्डपे ।
शय्यायां हेमकुम्भेऽद्भिर्हेमरत्नादिपूरितैः ॥ ७२ ॥
प्राग्वत् त्रिभागतत्त्वादिमूर्त्याद्यैरधिवास्य तु ।
मूलाङ्गैः शिवमावाह्य तस्मिन् सम्पूज्य लग्नके ॥ ७३ ॥
कुम्भस्थं तु शिवं लिङ्गे योजयन्नभिषेचयेत् ।
सम्पूज्य तु यथापूर्वं मुद्राद्भिस्नपनेन तु ॥ ७४ ॥
उपपत्त्याभिषिच्येशं प्राग्वत् पूजां प्रवर्तयेत् ।

महादोषप्रायश्चित्तम् ।

-----

अथ स्विन्ने गतिर्भावे लिङ्गे धूमोष्मपीडिते ॥ ७५ ॥
अदीक्षितैश्च विप्राद्यैः स्पृष्टे वाप्यन्यलिङ्गिभिः ।
प्राग्वद् दारुमये कोशे पञ्चगव्यैः पृथक् क्रमात् ॥ ७६ ॥
समस्तैश्चावगाहं तु कारयित्वा षडाह्निकम् ।
मृद्भिश्च चन्दनाद्यैरप्यवघृष्याभिषिच्य तु ॥ ७७ ॥
त्रिभागतत्त्वमूर्त्यादिषडध्वपरिभावनाः ।
विधायार्घ्यादिभिः सम्यगभ्यर्च्य तु सदाशिवम् ॥ ७८ ॥
अष्टोत्तरशतादीनां पञ्चविंशतिकान्ततः ।
स्नपनानामेकतमेनोपपत्त्याभिषेचयेत् ॥ ७९ ॥
महापूजां चाग्निकार्यं यथापूर्वं विधाय तु ।
बलिं विकीर्य भूतेभ्यो दत्त्वाचार्ये च दक्षिणाः ॥ ८० ॥

प्रवर्तयेद् यथापूर्वं पू(ज ? जा)यागुत्सवादिकम् ।
आवाहितशिवस्याग्नेर्निर्वाणे पूर्ववत् क्रमात् ॥ ८१ ॥
(आधोयिज्य ?) जुहोत्याज्यं त्वघो अग्न्यादिना पुनः ।
समित्तिलचरूंश्चाज्यात् कृष्णादष्टसहस्रकम् ॥ ८२ ॥
जयादिनिष्कृत्यन्तं तद् यथापूर्वं प्रकल्पयेत् ।

अनावाहितशिवे वोद्वासितशिवे वाग्नौ निर्वाणे पूर्वोदितमन्त्रद्रव्यैः प्रत्येकमष्टोत्तरशतं हुत्वा गुरुमूर्तिधरादिभ्यो हिरण्यं दक्षिणां दद्यात् ।

शिवेऽग्नि + + नं स्पृष्ट्वा यदि स्युः शिववह्नयः ॥ ८३ ॥
जुहोति पूर्वमन्त्राद्यैः क्रमाद् विविचयेऽग्नये ।
लौकिकाग्नेर्देवाग्नेर्वा संसर्गे शुचयेऽग्नये ॥ ८४ ॥

पूर्वद्रव्यमन्त्रैर्जुहोतीति यावत् ।

शावसूतकिशूद्राद्यैः स्पृष्टेऽग्नौ च प्रमादतः ।
अशुद्धद्रव्यसम्पर्के + + जन्तौ सहस्रकम् ॥ ८५ ॥
समिधां जुहुयात् साज्यं पायसं च तिलांस्ततः ।
सिद्धार्थांश्च यवान् दूर्वाः प्रत्येकं तु शतं शतम् ॥ ८६ ॥
मूलेनाङ्गैर्दशांशेन विघ्नेशेभ्यः सकृत् सकृत् ।
भूतेभ्यश्च तथा हुत्वा रक्तान्नेन बलिं निशि ॥ ८७ ॥
विकिरेदुक्तमार्गेण नृत्तगीतादिमङ्गलैः ।
एवं कृत्वाग्नियागं तु सविशेषं शिवं यजेत् ॥ ८८ ॥
सर्वशान्तिर्भवेत् तत्र तद्वत् सर्वत्र मङ्गलम् ।

अग्नियागाधिकारः ।

---

इत्थं हि सर्वदेवानां प्रायश्चित्तं पृथक् पृथक् ॥ ८९ ॥
शुद्धिं च दोषशान्तिं च स्वस्वतन्त्रैः समूहयेत् ।
स्वस्वतन्त्रोदितैश्चापि समिदाहुतिभिस्तथा ॥ ९० ॥
जुहुयाद् दोषशान्त्यर्थं स्वस्वमन्त्रैश्च पूजयेत् ।
स्नपनं च यथापूर्वं कृत्वा संपद् विवर्धते ॥ ९१ ॥

साम्निध्यं चाप्यवच्छेदात् तत्तद्देवस्य जायते ।
शान्त्यर्थं चापि दोषाणां कामानां चाप्यवाप्तये ॥ ९१ ॥
जयाबलिं च विकिरेत् तत्प्रकारोऽपि कथ्यते ।
उत्तरायणसंस्थेऽर्केऽप्यथवा दोषसंभवे ॥ ९२ ॥
अष्टम्योश्च चतुर्दश्योः पक्षयोः शुक्लकृष्णयोः ।
आर्द्रायां चैव महतीं शम्भोः पूजां प्रवर्तयेत ॥ ९३ ॥
स्नपयित्वा पञ्चगव्यैस्तथा पञ्चामृतैरपि ।
त्रिकालं वा चतुष्कालं नित्यादष्टगुणाधिकम् ॥ ९४ ॥
साग्निकार्यं सवादित्रगीतनृत्तोपशोभितम् ।
निशासु प्रकृतिप्रस्थतण्डुलैः साधितेन तु ॥ ९५ ॥
भूतक्रूरेण तूक्तेन भूतेभ्यो विकिरेद् बलिम् ।
महोत्सवोदितैः सर्वैर्बलिमन्त्रैर्यथाक्रमम् ॥ ९६ ॥
शुद्धोदनेन देवेभ्यो भूतेभ्यो भूतकूरतः ।
महोत्सवोदितेभ्यस्तु गणेभ्यो बलिमादरात ॥ ९७ ॥
विकिरेद् भोजयेच्चापि ब्राह्मणान् लिङ्गिनस्तथा ।
अन्येभ्योऽपि च मृष्टान्नं प्रदद्यादनिवारितम् ॥ ९८ ॥
तदन्ते स्नपनेनेशमुपपन्नाभिषेचयेत् ।
सर्वशान्तिकरो ह्येष सुताराष्ट्रजयप्रदः ॥ ९९ ॥
उपसर्गग्रहप्रेतभूनपीडादिनाशकृत् ।
आयुश्श्रीवर्धनश्चास्मात् कर्तव्यो भूतये नृभिः ॥ १०० ॥

प्रायश्चित्तविधिश्च नित्यविध्यो नैमित्तिकानां तथा
दोषाणामपि शान्तये निगदितो यः शैवतन्त्रोदितः ।
उत्पातप्रशमश्च विश्वदुरितक्लेशान् विहन्त्री नृणां -
पूजाप्यस्य जयाबलिश्च विजयश्रीवर्धनः कीर्तितः ॥ १०१ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे उपरिभागे
क्रियापादे प्रायश्चित्तादिपटलस्त्रिपञ्चाशत्तमः ॥

अथ चतुष्षष्टितमः पटलः ।

जीर्णोद्धारविधिं वक्ष्ये लिङ्गप्रासादयोः क्रमात् ।
खण्डिते स्फुटिते भिन्ने चलिते पतिते हृते ॥ १ ॥
दग्धे जीर्णेऽङ्गहीने च सगर्भे वा क्षते च्युते ।
अज्ञानादधिके वोनमाने लिङ्गे तु मानुषे ॥ २ ॥
प्रतिष्ठिते वा क्षुद्रार्थं लिङ्गे नद्यब्धिपीडिते ।
त्यजन्ति मन्त्रास्तल्लिङ्गं देवश्चापि यतः स्फुटम् ॥ ३ ॥
त्यक्तं मन्त्रैश्च देवेन त्याज्यं पाषाणवद् भवेत् ।
तल्लिङ्गमाश्रयन्तीह पिशाचा ब्रह्मराक्षसाः ॥ ४ ॥
उक्तैर्दोषैः प्रदुष्टं चेत् त्याज्यं पीठमपि स्फुटम् ।
सकलेऽपि च तुल्याः स्युरेते दोषास्तथैव हि ॥ ५ ॥
ब्रह्मविष्ण्वादिकानामप्यन्यासां प्रतिमासु च ।
देवतानामिमे दोषास्तुल्यास्त्याज्यास्ततस्तु ताः ॥ ६ ॥
तत्र मूलालयाद् बाह्ये याम्ये पूर्वोत्तरेऽथवा ।
कुर्याद् बालालयं मूले पञ्चांशे तु त्रिभागतः ॥ ७ ॥
नवांशे पञ्चभिस्त्र्यंशे द्वाभ्यां बालालयः स्मृतः ।
मूले तु पश्चिमद्वारे स्यान्नैर्ऋत्यां तु वानिले ॥ ८ ॥
तदग्रे मण्डपं चापि समलङ्कृत्य पूर्ववत् ।
तन्मध्यवेद्यां शयनं सङ्कल्प्योक्तविधानतः ॥ ९ ॥
मूललिङ्गेषु नन्देषुत्र्यंशपञ्चत्रिदस्नकैः ।
कृत्वा तु दारवं लिङ्गं सपीठं सुमनोरमम् ॥ १० ॥
पुण्याहविकिरक्षेपकुम्भाग्निभ्रमणादनु ।
तोरणद्वारलोकेशकलशार्चनपूर्वकम् ॥ ११ ॥
विद्येशकुम्भान् परितः संस्थाप्य शयनस्य तु ।
हैमाद्यन्यतमं कुम्भं शय्यायां विनिधाय तु ॥ १२ ॥
तीर्थाम्भःपूरिते तस्मिन् हेमरत्नादिसंयुते ।
मूलाङ्गब्रह्ममन्त्रांश्च व्योमव्यापिद्वयं तथा ॥ १३ ॥
गायत्रीं चैव सावित्रीमस्त्रमन्त्रौ च विन्यसेत् ।
पूजयेच्च यथापूर्वं संस्पृश्य प्रजपेच्च तान् ॥ १४ ॥

शङ्खभेर्यादिनिर्घोषैः कुम्भं गर्भगृहं नयेत् ।
यात्राहोमं तु मूलाङ्गैः कुर्याद् गर्भस्य पूर्वतः ॥ १५ ॥

कुम्भाद्भिः प्रोक्ष्य लिङ्गाद्यं शिवाज्ञां श्रावयेत् ततः ।
भो भोः सत्त्वेन येनेदं दुष्टलिङ्गं समाश्रितम् ॥ १६ ॥

स शीघ्रमेतदुत्सृज्य गच्छतु स्थानमीप्सितम् ।
अत्र देवो यथापूर्वं विद्याविद्येश्वरैर्युतः ॥ १७ ॥

देव्या सह गणैः शश्वत् सन्निधत्तां सदाशिवः ।
इत्युक्त्वार्घ्यं च दत्त्वास्मात् पिशाचादीन् विसर्जयेत् ॥ १८ ॥

व्यापकेश्वरशब्दश्च चतुर्थ्यन्तो नमोन्वितः ।
तारादियुक्तः स्वेनैव षडङ्गानि स्वजातिभिः ॥ १९ ॥

अनेन सकलीकृत्य स्वयं तद्व्यापिनं शिवम् ।
लिङ्गालयादौ संस्मृत्य प्रार्थयेन्मनुनामुना ॥ २० ॥

ओं

भगवल्लिँङ्गमेतत् तु दुष्टं दोषावहं यतः ।
अस्योद्धाराच्छान्तिरस्तु सर्वेभ्यो व्यापकेश्वर! ॥ २१ ॥

तदुद्धारे प्रवृत्तं मामधितिष्ठेह शङ्कर! ।
तथेति देवेनादिष्टः शान्तिहोमं समाचरेत् ॥ २२ ॥

क्षीराज्यमधुदूर्वाग्रैर्मन्त्रसंहितया शतम् ।
लिङ्गसञ्चलनार्थं तु सहस्रं जुहुयाद् घृतम् ॥ २३ ॥

मूलाद् दशांशतोऽङ्गैश्च पुनःस्थापनमुद्दिशन् ।
शतं जुहोति क्षैरेय्या ततः पाशुपतास्त्रतः ॥ २४ ॥

ब्रह्मादिकानां भागानां सहस्रं तु पृथक् पृथक् ।
संप्रोक्ष्य शान्तिकुम्भाद्भिस्तत्तद्भागे तु संस्पृशेत् ॥ २५ ॥

जपित्वाहुतिसंख्यं तु विलोमार्घ्यं प्रदाय तु ।
पुनः प्रतिष्ठा कालेन यावता तस्य शक्यते ॥ २६ ॥

तन्निश्चित्यावधिं तस्मै शनैर्विज्ञापयेद् गुरुः ।
प्रणवाद्यं तु संरुद्धैर्मूलाङ्गैर्ब्रह्मभिस्तथा ॥ २७ ॥

विलोमतस्तु लिङ्गादौ व्याप्तं तं व्यापकेश्वरम् ।
सूक्ष्मस्थं व्योमवद् व्याप्तं ध्यात्वा कुम्भे नियोजयेत् ॥ २८ ॥

ब्रह्मादिभागगान् मन्त्रान् मूलं चापि षडध्वभिः ।
कुम्भे तस्मिन् समावाह्य संपूज्यार्घ्यादिभिः क्रमात् ॥ २९ ॥
वाससास्त्रेण संवेष्ट्य दत्त्वार्घ्यं कुम्भमुद्धरेत् ।
शिरसैव वहन् गच्छेत् प्रादक्षिण्यं स्वयं गुरुः ॥ ३० ॥
प्रवेश्य मण्डपे प्राग्वच्छय्यायां विनिवेशयेत् ।
पूर्ववद् ब्रह्मभिर्दिक्षु कोणेष्वङ्गैर्जुहोति च ॥ ३१ ॥
त्रिखण्डभावना कार्या दारुलिङ्गे यथापुरम् ।
प्रातर्बालालये लग्ने दारुलिङ्गं सपिण्डिकम् ॥ ३२ ॥
संस्थाप्य कुम्भगान् मन्त्रांस्तस्मिन् देवं च योजयेत् ।
अभिषिच्य तु तत्रस्थमेवं विज्ञापयेच्छिवम् ॥ ३३ ॥
ओं
यावन्मूलालये लिङ्गं निष्पन्नं स्यात् प्रतिष्ठितम् ।
तावद् दारुमये लिङ्गे सान्निध्यं कुरु शङ्कर ! ॥ ३४ ॥
ततस्तत्रैव गन्तव्यमस्माल्लिङ्गात् प्रसीद मे ।
सृष्टिक्रमेण मन्त्रांश्च ध्यात्वा तस्मिन् षडध्वनः ॥ ३५ ॥
अर्घ्याद्यैः प्राग्वदभ्यर्च्य हुत्वा प्राग्वत् त्रिवासरम् ।
चतुर्थदिवसे स्नानं नवकेन विधाय तु ॥ ३६ ॥
नित्यपूजोत्सवाद्यं यत् कर्म तत्र प्रवर्तयेत् ।
सति चण्डेश्वरे चण्डं विसृज्याप्सु विनिक्षिपेत् ॥ ३७ ॥
ततो हेमखनित्रेण खात्वास्त्रेण तु देशिकः ।
अदोषदुष्टं पीठं चेदुद्धृत्यान्यत्र विन्यसेत् ॥ ३८ ॥
रक्षेद् यजेत् स एवेशो यतो बालालयेऽर्च्यते ।
दुष्टं लिङ्गं हेमरज्ज्वा बद्ध्वा वृषभयोजिते ॥ ३९ ॥
शकटे तु समारोप्य क्षिपेद् गाधेतरेऽम्भसि ।
शैललिङ्गे विधिस्त्वेवं दारुजं चेच्छिवाग्निना ॥ ४० ॥
दहेदस्त्रेण रत्नं वा मृन्मयं वाग्निदाहतः ।
अविवर्णमदुष्टं चेत् तदेव स्थापयेत् पुनः ॥ ४१ ॥

१. 'स' ख. पाठः.

लौहं तदेव तु पुनः प्राग्वत् कृत्वा सलक्षणम् ।
प्रतिष्ठाप्यार्चयेत् कुर्यादालये नूतनं पुनः ॥ ४२ ॥
मृत्सुधाप्रतिमादीनि वर्णाद्याधानतः पुनः ।
नूतनान्युक्तमार्गेण प्रतिष्ठाप्य तु पूजयेत् ॥ ४३ ॥
पिण्डिकैव यदा दुष्टा त्यक्त्वा तामपरां पुनः ।
अधिवास्य यथापूर्वं मूललिङ्गं नियोजयेत् ॥ ४४ ॥
मूललिङ्गे तु निष्पन्ने प्राग्वद् देवाग्रमण्डपे ।
कृत्वाधिवासनाद्यं तु स्थापयेद् गर्भमन्दिरे ॥ ४५ ॥
बाललिङ्गस्थितं देवं प्राग्वत् कुम्भेऽधिरोप्य तु ।
स्थापिते (बा? मू)ललिङ्गे तु पूर्ववत् सन्नियोजयेत् ॥ ४६ ॥
प्रासाद एव जीर्णश्चेत् तस्योद्धारोऽथ कथ्यते ।
प्रासादमन्त्रान् सर्वांस्तु समाहृत्य यथाक्रमम् ॥ ४७ ॥
पूर्वोक्तेन क्रमेणैव खड्गे संयोज्य पूजयेत् ।
प्रासादे तु सुनिष्पन्ने तन्मन्त्रान् पूर्ववत् क्रमात् ॥ ४८ ॥
खड्गादादाय संयोज्य संप्रोक्ष्य स्नपयेच्छिवम् ।
प्रतिष्ठातो दशगुणां जीर्णोद्धारे तु दक्षिणाम् ॥ ४९ ॥
दद्यान्मूर्तिधरेभ्यश्चाप्याचार्याय ततोऽधिकम् ।
विप्रेभ्यश्चैव लिङ्गिभ्यस्तक्षभ्योऽर्थिभ्य एव च ॥ ५० ॥
तद्वत् कर्मकरादिभ्यो दद्याद् देयांस्तु पुष्कलान् ।
लिङ्गे प्रतिष्ठिते यद् वा प्रासादकरणे फलम् ॥ ५१ ॥
जीर्णोद्धारे कृते तस्माद् द्विगुणं लभते फलम् ।

इत्थं धर्माद् विशिष्टाज्जगति तनुभृतां भोगमोक्षोपलब्ध्यै
विद्यादेहस्य शम्भोर्वदनसरसिजव्यक्तविश्वागमार्थैः ।
नित्याद्यं कर्मचक्रं सविधिकमखिलं यत्र दृश्यं यथाव-
ज्जीर्णोद्धारावसानं सुरगुरुविबुधस्तं क्रियापादमूचे ॥ ५२ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे
उपरिभागे क्रियापादे जीर्णोद्धारपटलः
चतुष्षष्टितमः ॥

समाप्तः क्रियापादः ॥

॥ श्रीः ॥

# ईशानशिवगुरुदेवपद्धतिः ।

## श्रीमदीशानशिवगुरुदेवमिश्रविरचिता ।

### ( तुरीयो योगपादः )

---

#### अथ प्रथमः पटलः ।

अथ मोक्षस्तु संसिध्येत् सम्यग् ज्ञानेन देहिनः ।
ज्ञानं जायेत वैराग्याद् वैराग्यं च स्वभावतः ॥ १ ॥
स्वभावो नाम संसारस्वरूपस्य निरूपणम् ।
संसारस्त्वात्मबुद्धिः स्याद् देहे स्वत्वेन वस्तुषु ॥ २ ॥
देहोऽपि द्विविधो ज्ञेयः स्थूलसूक्ष्मप्रभेदतः ।
पृथिव्यादीनि भूतानि श्रोत्राद्याधारकाण्यपि ॥ ३ ॥
वागादिकर्मेन्द्रियाणि वातपित्तकफास्तथा ।
त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्रैश्च नाडिभिः ॥ ४ ॥
मूलाधारे कुण्डलिन्यां नाभिहृत्कण्ठमूर्धसु ।
चतुष्षड्ष्टजगतीविकाराक्षिच्छदाम्बुजैः ॥ ५ ॥
युक्तं स्थूलशरीरं स्यात् सूक्ष्मं पुर्यष्टकात्मकम् ।
तत्तच्छब्दादयः पञ्च मनो बुद्धिरहङ्कृतिः ॥ ६ ॥
देहद्वयं तु साध्यात्मं साधिभूताधिदैवतम् ।

तद्यथा —

श्रोत्रादयश्च वागाद्यास्तथाध्यात्मानि वै पृथक् ॥ ७ ॥
शब्दादिवक्तव्यादीनामधिभूतत्वमिष्यते ।
खवायुतेजांसि जलं पृथिवी च तथानलः ॥ ८ ॥
इन्द्रो विष्णुश्च मित्रश्च प्र (दे ? जे) शश्चाधिदैवतम् ।
अध्यात्मानि मनो बुद्धिरहंकारश्च तत्त्रयम् ॥ ९ ॥

मन्तव्यं चैव बोद्धव्यं मानश्चैवाधिभूतकम् ।
चन्द्रो जीवो विरिञ्चश्चाप्यधिदैवान्यनुक्रमात् ॥ १० ॥
गुणत्रयमयी या सा प्रकृतिः पुरुषस्तथा ।
रागो विद्यादितत्त्वानि मायान्तान्यखिलानि तु ॥ ११ ॥
मलं कर्म च माया च सर्वमस्य प्रवर्तकम् ।
जाग्रत् स्वप्नः सुषुप्तिश्चेत्यवस्थात्रितयं तथा ॥ १२ ॥
कामः क्रोधश्च लोभश्च मोहश्च मदमत्सरौ ।
षडूर्मय इमे व्याप्ये मोहाब्धौ व्यापकाः स्मृताः ॥ १३ ॥
एवम्भूतं शरीरं यदाममृत्कुम्भसन्निभम् ।
जन्मादिभिः षड्विकारैरध्यस्तमतिनश्वरम् ॥ १४ ॥
अस्वतन्त्रं कर्मवशात् प्रविशन् निर्विशन्नपि ।
प्रवसन्नपि संसारे भ्रमत्यात्मा ह्यलक्षितः ॥ १५ ॥
शरीराणि तथैतानि पञ्चधा मानसानि च ।
जरायुजान्यण्डजानि स्वेदजान्युद्भिदान्यपि ॥ १६ ॥
तत्र देवादिदेहाः स्युर्मानसाश्चाजरायुजाः ।
जरायुजा मनुष्याणां पशूनां च भवन्ति हि ॥ १७ ॥
सरीसृपाहिविहगशरीराण्यण्डजानि तु ।
जरायुजाश्चाण्डजाश्च देहाः स्युर्जलचारिणम् ॥ १८ ॥
स्वेदजाः क्रिमयः प्रोक्ताः स्थावराश्चोद्भिदा मताः ।
सर्वे स्वकर्मवशगा भवन्ति न भवन्ति च ॥ १९ ॥
मृतिजन्मजले घोरे सुखदुःखझषाकुले ।
शोकमोहादिकलिले त्वगाधे भवसागरे ॥ २० ॥
उन्मज्जन्तो निमज्जन्तः पुण्यपापैकबन्धनैः ।
निबद्धा देहिनः सर्वे स्वर्गभूनरकादिषु ॥ २१ ॥
मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थिपञ्जरे ।
त्वचावृते शरीरेऽस्मिन् सौन्दर्यं स्मर्यते कुतः ॥ २२ ॥
अस्थिपञ्जरसारेऽस्मिन् मूत्रश्लेष्ममलाशये ।
मांसकेशनखस्नायुरुधिरत्वक्समावृते ॥ २३ ॥

देहे चेत् प्रीयते कश्चित् प्रीयते नरकेऽपि सः ।
यद्गाप्यज्ञानिभिर्देहे सुखबुद्ध्यात्र मण्यते ॥ २४ ॥
शब्दादीन्द्रियसौख्यान्यप्यन्वयव्यतिरेकतः ।
असाराणि यथा गीतं मत्तोन्मत्तप्रलापवत् ॥ २५ ॥
वादयन्तश्च दृश्यन्ते यथोन्मत्ता विकुर्वते ।
स्पर्शसौख्यं तथा पायेरुपाध्यन्तरसङ्क्रमात् ॥ २६ ॥
व्रणादेस्तु यथा पूयमूत्रादेर्निर्गमात् सुखम् ।
पामकण्डूतिसौख्यं वा तत्तुल्यं सुरते सुखम् ॥ २७ ॥
चक्षुरिन्द्रियसौख्यं यन्नृत्तकान्तादिदर्शने ।
उन्मत्तचेष्टितान्नृत्तं न किञ्चिदपि हीयते ॥ २८ ॥
स्वक्षी सुनासा सुमुखी सुदतीत्यादिदर्शने ।
सौख्यं त्वगस्थिमांसादौ कतरत् स्यान्मनोहरम् ॥ २९ ॥
आस्वाद्येषु पदार्थेषु रसनेन्द्रियचापलात् ।
क्षुत्तृण्णिवृत्त्या सौहित्यं दुःखापायो न तत् सुखम् ॥ ३० ॥
निद्रादुःखं यदि स्यात् सौख्यं स्वापे सुखं यथा ।
तदात्मसुखबुद्धिष्ट करणानां तु संहृतौ ॥ ३१ ॥
घ्रेयेष्वपि सुगन्धेषु यत्नात् प्राप्येषु दृश्यते ।
अयत्नेन वनादौ च प्राप्तुं तच्छक्यते सुखम् ॥ ३२ ॥
गर्भवासे च जनने बाल्ये वास्य कुतः सुखम् ।
अस्वतन्त्रस्येव परैर्यन्त्रितस्येव पक्षिणः ॥ ३३ ॥
यौवनेऽनिष्टसंयोगादिष्टलाभे वियोगतः ।
रागाद्याक्रान्तचित्तस्य कुतः सौख्यं शरीरिणः ॥ ३४ ॥
वार्धक्येऽप्यसमर्थस्य विषयांस्तु बुभुत्सतः ।
प्रक्षीणेन्द्रियवृत्तेस्तु रोगरागाद्युपद्रवैः ॥ ३५ ॥
पीड्यमानस्य तत्सौख्यं कुतो वास्य मरिष्यतः ।
म्रियमाणस्य यद् दुःखं नरकेऽपि न तद् भवेत् ॥ ३६ ॥
ततः पापकृतां दुःखं यमलोकाय गच्छताम् ।
तद्दर्शनेन पतनां पतितानां पतिष्यताम् ॥ ३७ ॥

नरकेषु प्रसिद्धं हि दुःखं तस्मान्न भण्यते ।
यदि पुण्यकृदेव स्यात् स्वर्गे देवादिदेहवान् ॥ ३८ ॥

विमानादिषु दिव्येषु भोगेषूपनतेष्वपि ।
दृष्ट्वा (पापा ! स्वल्पां) श्रियं दीप्तामन्येषामात्मनोऽधिकाम् ॥ ३९ ॥

सन्ताप एव विषयान् भुङ्क्ते दुःखं धिया वहन् ।
ततोऽपि क्षीणपुण्यानां पतनाद्यवलोक्य तु ॥ ४० ॥

यादृशं हृदये दुःखं न तद् वर्णयितुं क्षमम् ।
अथ राज्यादिषु सुखं स्याच्चेत् सन्ध्यादिदुःखिनः ॥ ४१ ॥

पुत्रेभ्योऽपि भयं यस्य तस्य सौख्यं कुतो भवेत् ।

अत्र पराशरः —

"यावतः कुरुते जन्तुः संबन्धान् मनसः प्रियान् ।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥

यद् यद् गृहे तन्मनसि यत्रतत्रावतिष्ठतः ।
*नाशव्ययादिभीत्या क्व परिग्रहवतां सुखम् ॥"

इति ।

तथा चाहुः —

"यतो यतो निवर्तेत ततस्ततः सुखी भवेत् ।
निवर्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपि" ॥

इति ।

तथापि तृष्णया जन्तुः पीड्यमानो दिवानिशम् ।
अर्थार्जनवैतृष्ण्यं न कदाचिन्निगच्छति ॥

तथाचोक्तं —

"जीर्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
चक्षुःश्रोत्रे च जीर्येते तृष्णैका निरुपद्रवा ॥

यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
नालमेकस्य तु मतस्तां तृष्णां दूरतस्त्यजेत् ॥"

---

* 'नाशव्ययापहरणं तद् तस्यास्तैव तिष्ठति' इति विष्णुपुराणे पठ्यते ।

अतो न कर्मणा कार्यं प्रजया वा धनेन वा ।
त्यागेनैवामृतत्वं हि प्राप्तुं शक्यं मनीषिभिः ॥ ४२ ॥

तस्माद् धर्मार्थकामेभ्यो मोक्ष एव विशिष्यते ।
अस्थिरत्वात् त्रिवर्गाणां दुस्संपादतयापि च ॥ ४३ ॥

अलमलमतिविस्तरेण । प्रस्तुतमेवानुसन्धीयते ।

इत्थं विज्ञाय संसारमसारं तद्विरागतः ।
मोक्षमार्गः परो योगः साङ्गः साध्यो विपश्चिता ॥ ४४ ॥

स च सन्न्यसनात् सम्यग् योगः प्राप्यो न चान्यथा ।
सन्न्यासो मुण्डनान्न स्याद् दण्डादेर्ग्रहणादपि ॥ ४५ ॥

काषायावरणाद्यं च मुण्डनं दण्डधारणम् ।
यदन्यदप्येवमाद्यं देहस्योक्तं न देहिनः ॥ ४६ ॥

जडस्येह शरीरस्य घटकुड्यादिधर्मणः ।
वेषलक्षणमात्रेण देही मोक्षं कथं व्रजेत् ॥ ४७ ॥

अत एव शरीरस्य कर्तृत्वं नापि भोक्तृता ।
शरीरकर्मणां कर्ता संस्कार्यस्तत्फलार्थिभिः ॥ ४८ ॥

अत एव हि सन्न्यासस्त्यागः स्यात् काम्यकर्मणाम् ।
काम्यानां कर्मणां न्यासं सन्न्यासं कवयो विदुः ॥ ४९ ॥

लोकार्थपुत्रैषणाभ्यो निवृत्तो यः सदैव हि ।
स्ववर्णाश्रमयुक्तानां तथा स्वसमयस्य तु ॥ ५० ॥

विहितानां तु धर्माणां तत्फलेष्वनपेक्षया ।
ईश्वरार्पणबुद्ध्या तु करणं न्यास इष्यते ॥ ५१ ॥

तद्वान् यतिश्च सन्न्यासी न स्यात् केवलमुण्डितः ।
ज्ञेयः स नित्यसन्न्यासी यो न द्वेष्टि न काङ्क्षति ॥ ५२ ॥

ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथवा यतिः ।
चीरवासा जटी वापि त्रिदण्डो वाथ मुण्डितः ॥ ५३ ॥

विवासाः शुक्लवस्त्रो वा काषायवसनोऽथवा ।
कर्मसन्न्यासनं कृत्वा साङ्ख्ययोगं समाश्रितः ॥ ५४ ॥

---

१. 'स' ख. पाठः.

शिवानुग्रहमासाद्य योगी मोक्षमवाप्नुयात् ।
विज्ञाय संसारमसारमेवं वैराग्यतोऽनुग्रहतश्च शम्भोः ।
संप्राप्य योगं तु गुरूपदेशाद् योगी विमुक्तिं न चिरादुपैति ॥ ५५ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे
उपरिभागे योगपादे योगलक्षणं नाम
प्रथमः पटलः ॥

---

## अथ द्वितीयः पटलः ।

अथ योगस्तु विज्ञेयो गुणैश्वर्यविमुक्तिदः ।
चित्तवृत्तिनिरोधं तु योगमाह पतञ्जलिः ॥ १ ॥
युजेर्धातोः समाधौ तु क्षेत्रज्ञपरमात्मनोः ।
युक्तिर्योगः समुद्दिष्टस्तथाचाह महामुनिः ॥ २ ॥
"मनो हि सर्वभूतानां कारणं बन्धमोक्षयोः ।
वृत्तिहीनं मनः कृत्वा स्वात्मानं परमात्मनि ॥
परमात्मा समायोज्य योगं कु + + + + ।
+ + + + विमुक्तैः स्यान्मुख्योऽयं योग इष्यते ॥"

इति ।

सम्यक् शिवगतं चित्तं यदा न चलति स्थिरम् ।
शिवत्वव्यक्तभावस्य कैवल्यं योग इष्यते ॥ ३ ॥
तच्च रागादिदोषाणां वर्जनेन प्रकाशते ।
ते च नश्यन्ति रागाद्या योगाङ्गानां निषेवणात् ॥ ४ ॥
योगाङ्गानि च तान्यष्टौ प्रवदन्ति हि तद्विदः ।

तद्यथा —

यमाश्च नियमास्तद्वदासनं प्राणसंयमाः ॥ ५ ॥
प्रत्याहारा धारणाश्च ध्यानानि च समाधयः ।
यमाः पञ्चप्रकाराः स्युर्नियमाश्चैव पञ्चधा ॥ ६ ॥
आसनानि च पञ्च स्युः प्राणायामास्तु नैकधा ।
प्रत्याहाराः पञ्चविधा धारणा बहुधा स्मृताः ॥ ७ ॥

---

१. 'मः' ।, २. 'रात्मना स', ३, 'क्तिः' क. पाठः.

ध्यानानि नैकधा त्वेकः समाधिरथवा त्रिधा ।
अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ॥ ८ ॥
यमाः पञ्चविधास्तेषां पृथग्भेदा भवन्ति हि ।
मनोवाक्कर्मभिर्हिंसास्त्रिविधाः प्राणिनामिह ॥ ९ ॥
ताभ्यो निवृत्तिं सर्वत्र अहिंसां परिचक्षते ।
सत्यं यथार्थकथनं सर्वभूतहितं च यत् ॥ १० ॥
परपीडाकरं सत्यमेवं सत्यं विदुर्बुधाः ।
असत्यमपि भूतानां हितं चेत् सत्यमेव तत् ॥ ११ ॥
परपीडाकरं सत्यं यदा मौनं तदा भजेत् ।
अन्यैः परिगृहीतानां त्यक्तानां वाश्रमादिषु ॥ १२ ॥
निक्षिप्तानां तृणानां वा कर्मणा मनसा गिरा ।
परार्थानामनादानमस्तेयं परमं स्मृतम् ॥ १३ ॥
ब्रह्मचर्यमिति प्राहुरिन्द्रियाणां तु संयमम् ।
तत्राप्युपस्थविषयनिवृत्तिं तु विशेषतः ॥ १४ ॥

किन्तु,

दर्शनस्पर्शनापेक्षासङ्कल्पाभाषणादिभिः ।
योषित्संभोगवैमुख्यं ब्रह्मचर्यं परं विदुः ॥ १५ ॥
तत्रापि च गृहस्थानां स्वदाराव्यतिक्रमात् ।
ऋतुस्नाताभिगमनं ब्रह्मचर्यं परं स्मृतम् ॥ १६ ॥
अर्जनक्षयसंरक्षाहिंसादोषादिदर्शनात् ।
अस्वीकरणमर्थानां मुख्यः स्यादपरिग्रहः ॥ १७ ॥
भिक्षूणामयमुद्दिष्ट अन्येषामन्यथा स्मृतः ।
ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथवा मुनिः ॥ १८ ॥
सकुटुम्बस्तु यस्तस्य गुर्वादीनां तु पुष्टये ।
असत्प्रतिग्रहेभ्यस्तु निवृत्तिरपरिग्रहः ॥ १९ ॥

॥ एवं यमाः ॥

नियमाः शौचसन्तोषौ स्वाध्यायस्तप एव च ।
तद्वदीश्वरपूजेति पञ्च भिन्नास्तु ते पुनः ॥ २० ॥

---

१. 'सत् परपीडाकरं सत्यं यदा', २. 'आ' क. पाठः.

शौचं तु शुद्धिर्विज्ञेया मनोवाक्कायकर्मणाम् ।
अचिन्तनमकृत्यानां यत् तच्छौचं तु मानसम् ॥ २१ ॥

अक्षी(नं? बं) वाचिकं स्यात् तु कायिकं तु मृदा जलैः ।
मलानां क्षालनञ्चान्तःकरणस्य विशोधनम् ॥ २२ ॥

पापानामननुष्ठानं कर्मणां शौचमिष्यते ।
वर्णाश्रमादिधर्माणामविरोधागतेन तु ॥ २३ ॥

धनधान्यादिना वृत्त्या तृप्तिः सन्तोष उच्यते ।
(ग)तेष्वननुशोकः स्याद् भविष्यार्थेष्वलोलता ॥

वर्तमानेष्वसक्तिश्च सन्तोषः परिपठ्यते ।
हर्षागमेष्वनुत्सेकः शोकस्थानेष्वशोकता ॥ २५ ॥

समता चापि सर्वेषु सोऽपि सन्तोष उच्यते ।
प्रणवस्य तथाभ्यासस्तथोपनिषदामपि ॥ २६ ॥

तत्फलानभिसन्धानात् स्वस्वमन्त्रजपोऽपि च ।
स्वाध्याय इति निर्दिष्टस्त्रिविधोऽपि च योगिनाम् ॥ २७ ॥

तथाचाहुः —

"स्वाध्यायाद् योगमासीत योगात् स्वाध्यायमात्मनि ।
स्वाध्याययोगसम्पत्त्या परमात्मा प्रकाशते ॥

शब्दब्रह्म च तद् ब्रह्म वेदितव्ये उभे अपि ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥"

इति ।

एकभुक्तोपवासाद्यैः कृच्छ्रचान्द्रायणादिभिः ।
कर्शनं तु शरीरस्य यत्तत्तप उदाहृतम् ॥ २८ ॥

तत्राप्यनशनं नेष्टं नेष्टमत्यशनं तथा ।
व्रतचोदितकालाशी तपस्वी योगभाग् भवेत् ॥ २९ ॥

तथाचाह भगवान् —

"नात्यश्नतस्तु योगोऽस्ति नचैकान्तमनश्नतः ।
नचातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन! ॥

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥"

इति ।

आभ्यन्तरैस्तथा बाह्यैर्द्रव्यैर्गन्धादिभिः क्रमात् ।
चोदिताराधनं शम्भोर्येन नन्दीश्वरपूजनम् ॥ ३० ॥
तत्राप्यनभिसन्धाय फलं भक्त्योपपत्तितः ।
देवस्येष्टस्य यजनं कर्मणा मनसापि च ॥ ३१ ॥
योगिनां योगसिद्ध्यर्थं शस्तमीश्वरपूजनम् ।
याज्ञवल्क्यो वसिष्ठश्च योगाचार्यौ महामुनी ॥ ३२ ॥
पृथग्यमांश्च नियमान् दशभेदानिहोचतुः ।
"अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम् ॥ ३३ ॥
क्षमा धृतिर्मिताहारः शौचं चेति यमादयः ।
तपः सन्तोष आस्तिक्यं दानमीश्वरपूजनम् ॥ ३४ ॥
सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च जपो हुतम् ।
एते तु नियमाः" । इति

॥ नियमाः ॥

आसनान्यपि चोक्तानि बहुधा पूर्वपद्धतौ ॥ ३५ ॥
तेषां पञ्चैव शस्तानि योगासिद्धिकराणि वै ।
स्वस्तिकं पद्मसंज्ञं च भद्रं योगासनं तथा ॥ ३६ ॥
गोमुखं चेति तेषां तु लक्षणं पृथगुच्यते ।

उपविश्य तु विष्टरेऽथ जान्वोर्विवरेऽङ्गुष्ठनिपीडनं विधाय ।
ऋजुमध्यगलक्षणाग्रकायो भवति स्वस्तिकमासनं निविष्टम् ॥ ३७ ॥
चरणाग्रयुगं तथोपरिष्टादधिरोप्योरुयुगस्य मूलदेशे ।
उपविश्य पुरेव पद्मसंज्ञं कथितं तद्विपरीततस्तु भद्रम् ॥ ३८ ॥
अधिरोप्य तु दक्षिणाङ्घ्रिमूरावथ सव्यं चरणं तु दक्षिणोरौ ।
अधिरोप्य पुरेव सूपविष्टो यदि योगासनमिष्टदं तदाहुः ॥ ३९ ॥
वृषणे तु निगृह्य वामजङ्घापदगुल्फे स्वधिरूढसस्फिगूरूः ।
उपरिस्थितदक्षिणोरुजानुः खलु योगी स तु गोमुखासनस्थः ॥ ४० ॥

॥ आसनानि ॥

प्राणस्य धारणं देहे प्राणायाम इतीरितः ॥ ४१ ॥

स च नैकविधः प्रोक्तो योगशास्त्रविशारदैः ।
पूरकः कुम्भकश्चैव रेचकश्चेति ते त्रयः ॥ ४२ ॥

प्राणसंयमनानां तु ख्यात्यान्यन्यान्यनुक्रमात् । (?)
त्रिभिरङ्गैर्युतस्त्वंग स्याकुत्पूरकं विना (?) ॥ ४३ ॥

नासापुटेन वामेन पूरयेदुदरेऽनिलम् ।
निर्दिष्टोद्धातमात्राभिर्विज्ञेयः स तु पूरकः ॥ ४४ ॥

पूरितस्याथवा वायोः केवलस्य निरोधतः ।
संपूर्णकुम्भवत् तिष्ठेद् यदासौ कुम्भकः स्मृतः ॥ ४५ ॥

वामेतरेण घ्राणेन (मा?म)रुतः पूरितस्य तु ।
शनैः क्रमेण यो मोक्षो रेचकः परिपठ्यते ॥ ४६ ॥

तत्र षोडशमात्रस्तु सामान्यः पूरको मतः ।
कुम्भकः षष्टिमात्रः स्यात् पञ्चोद्धातस्तु संस्मृतः ॥ ४७ ॥

युग्मोद्धातो रेचकः स्याच्चतुर्विंशतिमात्रकः ।
प्राणायामो ह्ययं मन्दो मध्योऽस्माद् द्विगुणो भवेत् ॥ ४८ ॥

त्रिगुणस्तूत्तमो ज्ञेयः क्रमेणाभ्यासयोगतः ।
अगर्भाश्च सगर्भाश्च प्राणायामास्तु ते स्मृताः ॥ ४९ ॥

अन्तर्मन्त्रजपोपेताः प्राणायामाः सगर्भकाः ।
अन्तर्जपविहीना ये ते त्वगर्भा इति स्मृताः ॥ ५० ॥

प्राणयामादगर्भात् तु सगर्भः श्रेष्ठ उच्यते ।

तथथा —

कुम्भीकृत्योदरे वायुं स्वस्वमन्त्रं धिया जपेत् ॥ ५१ ॥

प्राणायामं सगर्भं तु कुर्यात् तद्गतमानसः ।
एकाक्षरः स्वमन्त्रश्चेत् तस्य स्याद् द्विशतं जपः ॥ ५२ ॥

प्रत्यक्षरविवृद्धयात्वा त्रिंशद्वर्णाननुक्रमात् ।
भावयित्वायतमाणः प्राणायामं समाचरेत् ॥ ५३ ॥

1. 'ह्यपवि' ख. पाठः

अष्टार्णादिप्रकृत्यन्तं तत्राप्येकैकलोपतः ।
प्राणायामा विधातव्यास्तत्तद्ध्यानोपबृंहिताः ॥ ५४ ॥
तत्र विज्ञाय देहं च नाडीर्वायुं च तत्स्थितम् ।
तच्छुद्धिं च विधायाथ प्राणायामं समाचरेत् ॥ ५५ ॥

तद्यथा —

षण्णवत्यङ्गुलो देहो देहो लब्धाङ्गुलैः स्वकैः ।
ऊर्ध्वं शरीरादधिकं प्राणः स्याद् द्वादशाङ्गुलम् ॥ ५६ ॥
मेढ्रादूर्ध्वं द्व्यङ्गुलं तु देहमध्यमुदीरितम् ।
मूलाधारः स च त्र्यश्रो देवादीनां नृणामपि ॥ ५७ ॥
पश्वादीनां तु वेदाश्रस्त्वण्डजानां तु वर्तुलम् ।
चतुष्पदानां हृन्मध्ये क्रोडमध्येऽण्डजन्मनाम् ॥ ५८ ॥
मूलादूर्ध्वं मनुष्याणां नाभिकन्दो नवाङ्गुलात् ।
नाभिचक्रं तदूर्ध्वं तु द्वादशारमसुस्थितिः ॥ ५९ ॥
नाभेरधस्तात् कन्दाख्ये कुण्डलिन्यष्टवर्तुला ।
प्रसुप्तभुजगाकारा चतुरङ्गुलविस्तृता ॥ ६० ॥
द्वासप्ततिसहस्राणि नाड्यस्तन्मध्यनिर्गताः ।
अष्टाविंशतिसंख्याः स्युस्तासां मुख्यास्तु नाडयः ॥ ६१ ॥
तासां च दश वै श्रेष्ठा इडाद्यास्तास्वपि त्रयम् ।
इडा पिङ्गा सुषुम्ना च गान्धारी हस्तिजिह्विका ॥ ६२ ॥
सुयशालम्बुषा पूषा कुहूश्चैव च शङ्खिनी ।
एतास्विडा पिङ्गला च सुषुम्ना चोत्तमाः स्मृताः ॥ ६३ ॥
तासामथ सुषुम्नाख्या ब्रह्मनाडी परा स्मृता ।

इति नाडीदशकम् ॥

---

विमला घोषणी पृथ्वी ततस्त्वाप्यायनी मता ॥ ६४ ॥
तेजोवती वायवी च गगना चैव रोधनी ।
रसावाहा च मृद्वङ्गी स्रंसनी चापि मर्शनी ॥ ६५ ॥
शब्दस्पर्शवहे दूर्णा सुरूपा रसधारणी ।
सर्वगा चेति निर्दिष्टा नाड्योऽष्टादश क्रमात् ॥ ६६ ॥

अथ प्राणादयः पञ्च नागाद्याश्चापि पञ्च हि ।
प्राणस्तु हृत्पद्मगत आसनाद्धृदयस्थितिः ॥ ६७ ॥
निःश्वासोच्छ्वासकासादीन् कुर्वन् वक्षः समाश्रितः ।
प्रयाणं कुरुते नित्यं य (स्या ? स्मात्) प्राणः प्रकीर्तितः ॥ ६८ ॥
अवाङ्मूत्रमलादीनांमपानो(?) हस्तादिसन्धिगः ।
हानोपादानकर्मा च तस्माद् व्यान इति स्मृतः ॥ ६९ ॥
ऊर्ध्वं नयत्युदानस्तु नाभेरांशिरसि स्थितः ।
गात्रनेत्रविकाराद्यं कर्मोदानस्य तु स्मृतम् ॥ ७० ॥
समानः सर्वकायं तु व्याप्य सन्धिषु च स्थितः ।
त्वगसृङ्मांसमेदोस्थिसंस्था नागादिवायवः ॥ ७१ ॥
ललाटिकोरश्शङ्खांसनाभिस्थास्ते त्वनुक्रमात्(?) ।

अथ वर्णाः—

नीलेन्द्रगोपगोक्षीरविद्युदर्केन्दुसप्रभाः ॥ ७२ ॥
कुन्दभिन्नाञ्जनार्काश्मकुसुम्भकुसुमोपमाः ।
आहारपचनाद्यन्तं प्राणकृत्यमितीरितम् ॥ ७३ ॥
पोषणाद्यं समानस्य कर्मेति परिपठ्यते ।
उद्गाराद्यं तु नागस्य कूर्मस्योन्मीलनादिकम् ॥ ७४ ॥
कृकरस्य क्षुतं कर्म जृम्भाद्यं देवदत्तजम् ।
धनञ्जयस्य शो (भा? षाद्यं) मृतं च न विमुञ्चति ॥ ७५ ॥
मध्येन तु शरीरस्य सुषुम्ना सूत्रवत् स्थिता ।
बिन्दोर्मूर्धानमासाद्य ब्रह्मरन्ध्रेण निर्गता ॥ ७६ ॥
इडा च पिङ्गला चैव वामतोऽस्याश्च दक्षिणे ।
सुषुम्नायां स्थिते वामदक्षिणप्राणयोः स्रुते ॥ ७७ ॥
इडापृष्ठात्तु गान्धारी सव्यनेत्रविनिर्गता ।
हस्तिजिह्वा च वामाङ्घ्रेरङ्गुष्ठाग्राद् विनिर्गता ॥ ७८ ॥
सुयशा दक्षिणस्याङ्घ्रेर्ज्येष्ठिकाग्रान्तनिर्गमा ।
अलम्बुषा त्वधो नाभेः पायुमूलान्तनिर्गमा ॥ ७९ ॥

---

१. 'नां व्यानो ह' क. पाठः. २. 'स्रृ' ख. पाठः.

पूषा तु पिङ्गलापृष्ठाद् दक्षिणश्रोत्रनिर्गता ।
नाड्यो विमलाद्यास्तु दश हस्ताग्रनिर्गताः ॥ ८० ॥

कुहूस्तु पिङ्गलापृष्ठाद् दक्षिणाक्षिविनिर्गता ।
विश्वोदरोदरं याता सरस्वत्यपि मेढ्रगा ॥ ८१ ॥

अन्तस्सुषिरसंयुक्ताः सर्वा अपि च नाडयः ।
पूर्णरक्ताश्च ताः सर्वाः पद्मतन्तुवि + + + ॥ ८२ ॥

तासां शाखोपशाखानां भेदस्तु बहुधा स्मृतः ।
देहाद् बहिर्निर्गताग्रा रोमसंज्ञाः शरीरगाः ॥ ८३ ॥

श्मश्रूणि मुखजातानि केशाः शिरसि निर्गताः ।
तिस्रः कोट्योऽर्धकोटिश्च केशरोमाणि देहगाः ॥ ८४ ॥

जरायुजानां देहेषु पशूनां त्रिगुणाः स्मृताः ।
पक्षिणां तु ततोऽर्धार्धं सिरारोमाणि संख्यया ॥ ८५ ॥

सिरारोमादिनियमो नहि कीटादिजातिषु ।
स्थावराणामपि तथा सर्वे ते प्राणिनः स्मृताः ॥ ८६ ॥

एवं नाडीर्विदित्वा तु प्राणायामं समाचरेत् ।

एवं यमाश्च नियमा(नि ? श्च) तथासनानि
प्राणादयश्च पवना अपि नाडिचक्रम् ।
योगस्य यानि बहिरङ्गतयोदितानि
सेव्यानि तानि विदितानि यथोपदेशम् ॥ ८७ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे उपरिभागे
योगपादे योगलक्षणादिपटलो द्वितीयः ॥

---

अथ तृतीयः पटलः ।

अथ योगं विविदिषुः प्राप्य योगविदं गुरुम् ।
शुश्रूषार्घ्यप्रदानाद्यैराराध्य परितोष्य च ॥ १ ॥

तस्माद् विज्ञाय योगं तु दत्त्वा तु गुरुदक्षिणाम् ।
अनुज्ञातस्तु गुरुणा गत्वा देशं मनोरमम् ॥ २ ॥

---

१. 'कुण्डल' ख. पाठः. २. 'णो' क. पाठः. ३. 'र्धा', ४. 'ह्रा' ख. पाठः.

पुण्यक्षेत्रनदीतीर्थवनसानुमदादिकम् ।
तत्राश्रमे मठे वाथ प्राज्यमूलफलोदके ॥ ३ ॥
ग्रामे देवालये वाऽपि स्वगृहे वा मनोरमे ।
परिशुद्धा(त्म)वान् योगी निस्संगो विजितेन्द्रियः ॥ ४ ॥
स्ववर्णाश्रमकर्माणि चोदितानि समाचरन् ।
युक्ताहारविहारस्तु युक्तस्वप्नावबोधनः ॥ ५ ॥
शान्तस्त्रिषवणस्नायी सर्वत्र समदर्शनः ।
पिचुतूलादिसंपूर्ण आसने सोत्तरच्छदे ॥ ६ ॥
विशुद्धे सम्यगासीनो विजितासनमास्थितः ।
विनायकं गुरुं चाथ नमस्कृत्य ततः शिवौ ॥ ७ ॥
ऋजुकायशिरोग्रीवः कृत्वान्तर्यजनं हृदि ।
योगं युञ्जीत मतिमान् न द्रुतं न विलम्बितम् ॥ ८ ॥
अथ ये ग्रन्थयः पञ्च भूतशुद्धौ प्रदर्शिताः ।
हृत्कण्ठतालुभ्रूमध्यब्रह्मरन्ध्रस्थिताः क्रमात् ॥ ९ ॥
तानूर्ध्ववायुना भित्त्वा मुक्त्वा दक्षिणनासया ।
वामनासापुटेनाथ पूरयेन्मरुतोदरम् ॥ १० ॥
पूरकस्तु स विज्ञेयो मात्राषोडश(का? को) विधिः ।
निरुन्ध्यान्निर्गमं तस्य कुम्भकाख्यः स तु स्मृतः ॥ ११ ॥
स चापि षष्टिमात्रः स्याद् रेचकस्तस्य रेचनात् ।
पिधाय वामघ्राणं तु दक्षिणेनैव रेचयेत् ॥ १२ ॥
स तु रेचक उद्दिष्टो मानं तेषां निगद्यते ।
पूरके ह्यष्टमात्राभिर्नाभिपद्मे चतुर्मुखम् ॥ १३ ॥
अकारमूर्तिमगुणं समाधिस्थं चतुर्भुजम् ।
कुम्भके च चतुष्षष्टिमात्रामात्रं तु धारयेत् ॥ १४ ॥
उकारमूर्तिं शङ्खाभं वासुदेवं हृदम्बुजे ।
शङ्खचक्रधरं सौम्यं समाधिस्थं चतुर्भुजम् ॥ १५ ॥
किरीटिनं स्मरेच्छक्त्या यावत् तावत् तु कुम्भयेत् ।
रुद्रं मकारमूर्तिं तु भ्रूमध्यकमले स्मरन् ॥ १६ ॥

---

१. 'ध्य' क. पाठः.

शुक्लवर्णं समाधिस्थं चतुर्बाहुं त्रिलोचनम् ।
एणटङ्कधरं सौम्यमिन्दुमौलिं कपर्दिनम् ॥ १७ ॥
मात्राद्वादशमात्रं तु दक्षिणेनैव रेचयेत् ।
अथ प्रणवतो वायुं समापूर्य भ्रुवोऽन्तरात् ॥ १८ ॥
बिन्दुमत्यक्षरे तस्मिन् नियम्यात्मानमात्मनि ।
मनसा तपदोङ्कारं जपेन्मात्रत्रयाधिकम् ॥ १९ ॥
एष प्राणजयोपायो दृष्टादृष्टफलप्रदः ।
भूतशुद्ध्युक्तमार्गेण प्राणायामास्तु पञ्च ते ॥ २० ॥
शोषणाद्यास्त्रयश्च स्युः सहैतान् पृथगाचरेत् ।
सन्ध्ययोर्वायुमाकृष्य पिबन् वाग्मी च जायते ॥ २१ ॥
व्याधयो ह्यस्य नश्यन्ति मासान् मासैस्तु वा क्रमात् ।
बधिरो मूर्ध्न्यथात्मानमाधायापूर्य मारुतम् ॥ २२ ॥
पिधाय सर्वद्वाराणि व्योमेन्दोरमृताप्लुतम् ।
कर्णाभ्यां विसृजेद् वायुं बाधिर्यादेष मुच्यते ॥ २३ ॥
पार्श्वयोर्वाथ नाभौ वा धारयेद् गुल्मशूलनुत् ।
यत्र यत्र रुजा देहे तत्र तत्र तु मारुतम् ॥ २४ ॥
आरोप्य प्राणनियमात् तं तं रोगं व्यपोहति ।
अथापानं समुत्कृष्य वह्निस्थाने नियोजयेत् ॥ २५ ॥
निरुध्याथ षडक्षाणि ततो नादः प्रवर्तते ।
नाभेरामूर्धतो वीणाध्वनिर्नादः प्रवर्तते ॥ २६ ॥
सुषुम्नयोर्ध्वगमया तच्छ्रुत्वासौ विमुच्यते ।
ब्रह्मरन्ध्रेण तस्याथ प्राणोऽप्युच्चरतीच्छया ॥ २७ ॥
हृदयाम्भोरुहान्तःस्थः प्राणो हंस इतीरयन् ।
उच्छ्वासं जनयेच्छ्वसदहोरात्रे तु संख्यया ॥ २८ ॥
षडुच्छ्वासः स्मृतः प्राणः षट् प्राणा घटिका स्मृता ।
घटिकानां स्मृतः षष्ट्या त्वहोरात्रस्तु मानुषः ॥ २९ ॥
श्वासनिःश्वासविच्छेदः प्राणायामात् प्रवर्तते ।
अथोदरे नाभिपद्मे ध्यात्वा तु चतुराननम् ॥ ३० ॥

अकारमूर्तिमिडया पूरयेन्मरुतोदरम् ।
कुम्भीकृत्य यथापूर्वं धियैव प्रणवं जपन् ॥ ३१ ॥
स्थिरीकृत्य तु संहृत्य रेचयेद् दक्षिणेन तु ।
अथवा हृदयाब्जस्थं वासुदेवं चतुर्भुजम् ॥ ३२ ॥
शङ्खचक्रधरं सौम्यं शुक्लवर्णं किरीटिनम् ।
चतुर्बाहुमुदारस्थमुकारमयविग्रहम् ॥ ३३ ॥
स्मरञ्जपन् धिया तारं पूर्ववत् पूरकुम्भकौ ।
रेचकं च विधाय स्यात् प्राणायामस्तु वैष्णवः ॥ ३४ ॥
भ्रुवोरन्तरतोऽम्भोजे मकारमयविग्रहम् ।
भस्माङ्गरागधवलं रुद्रं ध्यायंस्त्रिलोचनम् ॥ ३५ ॥
सूपविष्टं चतुर्बाहुं पूर्ववत् प्रणवं जपेत् ।
पूरकाद्यैर्यथापूर्वं रौद्रोऽयं प्राणसंयमः ॥ ३६ ॥
बिन्दुस्थानेऽम्बुजासीनमष्टबाहुं चतुर्मुखम् ।
ईश्वरं प्रोक्तरूपादिं ध्यायंस्तारं जपन् धिया ॥ ३७ ॥
पूरकाद्यैर्यथापूर्वं प्राणायामोऽयमैश्वरः ।
तथैव मूर्ध्नि कमले ध्यायन् देवं सदाशिवम् ॥ ३८ ॥
तारं जपन् धिया प्राग्वत् प्राणानायम्य पूर्ववत् ।
सर्वदोषहरोऽयं स्यात् सादेशः प्राणसंयमः ॥ ३९ ॥
कारणाधीशसंयुक्ताः पञ्चैते प्राणसंयमाः ।
सर्वकल्मषदोषघ्नाः सर्वे सर्वार्थसाधकाः ॥ ४० ॥
योगसिद्धिकराः पञ्च प्राणायामा भवन्ति हि ।
अथ हृत्पद्ममध्ये वा वि(न्दु ? न्दौ) वा व्योमपङ्कजे ॥ ४१ ॥
सूर्यादिमण्डलाधीशतत्त्वतत्त्वेशमूर्तिभिः ।
पुर्यष्टकाष्टच्छदने स्वस्वाङ्गावरणान्विते ॥ ४२ ॥
यो यो यस्या देवताया भक्तस्तां तत्र संस्मरन् ।
तत्तन्मन्त्रं जपन् बुद्ध्या पूरकादिक्रमेण तु ॥ ४३ ॥
प्राणसंयमनं कुर्वन् योगसिद्धिमवाप्नुयात् ।
अथवा हृदयाब्जादौ पश्यन् ज्योतिर्निरञ्जनम् ॥ ४४ ॥

ब्रह्मादिकारणोपाधिनिर्मुक्तं चिद्घनं शिवम् ।
ध्यायंस्त्रिमात्रं चिन्मात्रप्रणवं वा धिया जपन् ॥ ४५ ॥
प्राणायामं प्रकुर्वीत न चिरात् सिद्धिमश्नुते ।
मूलाब्जात् कुण्डलिन्यास्तु ध्यायञ्च्छक्तिं विनिर्गताम् ॥ ४६ ॥
विद्युल्लेखोपमामूर्ध्वङ्गमामा व्योमपङ्कजा(न् ? त्) ।
परमामृतनिःष्यन्दैः प्लाव्यमानां ततोऽपि हि ॥ ४७ ॥
निवृत्तां पुनरायान्तीं मूलाम्भोजं पुनः पुनः ।
सुषुम्नयोर्ध्वं गच्छन्तीममृतासारवर्षिणीम् ॥ ४८ ॥
ध्यायञ्च्छक्तिं परां सूक्ष्मां चिन्मात्र(प्रणवं) तु वा ।
जपन् धिया यथापूर्वं प्राणानायम्य योगवित् ॥ ४९ ॥
योगसिद्धिमवाप्नोति नचिरान्नात्र संशयः ।
अथवा प्रणवाद्यां तु सप्तव्याहृतिपूर्विकाम् ॥ ५० ॥
गायत्रीं शिरसोपेतां त्रिः पठन् मनसा हृदि ।
व्योम्नि वा परमात्मानं सावित्रीं सूर्यमेव वा ॥ ५१ ॥
ध्यायन् प्रागुक्तमार्गेण पूरकादिक्रमेण तु ।
प्राणसंयमनं कुर्वन् योगी सिद्धिमवाप्नुयात् ॥ ५२ ॥
षड्भिर्द्वादशभिश्चाथ तथा षोडशभिः क्रमात् ।
मनोवाक्कर्मजानीह पातकानि विनाशयेत् ॥ ५३ ॥
प्राणायामस्ततश्चापि द्विगुणैस्त्रिगुणैरपि ।
अष्टोत्तरशतस्यापि(?)भ्रूणहत्यां च नाशयेत् ॥ ५४ ॥

अत्र याज्ञवल्क्यवसिष्ठौ—

"अपि भ्रूणहनं मासात् पुनात्यहरहः कृतः ।
ऋतुत्रयात् पुनात्येनं जन्मान्तरकृतादघात् ॥
वत्सरादिह सर्वज्ञो ब्रह्मविच्चापि जायते ।
प्रस्वेदकम्पोत्थानानां जननाः कुंभकाः (पुनः) ॥
कनिष्ठमध्यश्रेष्ठाः स्युः फलं तेषां च तादृशम् ।
प्राणायामैः क्रमाभ्यस्तैर्विजिताः स्युश्च वायवः ॥

निःश्वासोच्छ्वसनाद्यं च विना ज्ञानं च शक्यते ।
विनैव पूरकं तद्वद् रेचकं च विनैव तु ॥
कुम्भकेनैव सुचिरमपि तिष्ठेज्जितानिलः ।
मनोजव(इ?ग)तिश्च स्याद् दूराद्थाँश्च पश्यति ॥
खेचरो द्वादशाब्देन जरापलितवर्जितः ।
चिरजीवी च भवति ततः द्विगुणवत्सरैः ॥
ऋषिगन्धर्वदेवादीन् पश्यत्याभापतेऽपि च ।
ततोऽपि द्विगुणैर्वर्षैर्लभते चाणिमादिकान् ॥"

प्राणायामाधिकारः ।

---

इन्द्रियाणां यथास्वं स्वं विषय परिधावताम् ।
बलादाहरणं तेषां प्रत्याहारं प्रचक्षते ॥ ५५ ॥
कर्मणां वि(जि ? हि)तानां तु नित्यादीनां विधि विना ।
मनसा ह्यनुष्ठानं प्रत्याहारं विदुर्बुधाः ॥ ५६ ॥
अथवाष्टादशस्थानेष्वाकृष्याधाय मारुतम् ।
स्ववशे स्थापनं केचित् प्रत्याहारं वदन्ति हि ॥ ५७ ॥

तानि तानि स्थानानि —

पादाङ्गुष्ठद्वयं गुल्फे जङ्घे जानूरुपायवः ।
मेढ्रं कटिस्ततः कन्दो नाभी हृदयवक्षसी ॥ ५८ ॥
कण्ठकूपं तथा तालु घ्राणं नेत्रे भ्रुमध्यकम् ।
मूर्धा चाष्टादशैतेषु स्थानात् स्थानं क्रमेण तु ॥ ५९ ॥
आहृत्य धारणं वायोः प्रत्याहारः स्मृतो बुधैः ।
अनेन रोगशान्तिः स्यादायुषो वर्धनं तथा ॥ ६० ॥

प्रत्याहाराधिकारः ।

---

यमाद्यैः पञ्चभिः (क ? )रैर्विशुद्धस्य तु योगिनः ।
आत्मन्यवस्थितिं बुद्धेर्धारणं सम्प्रचक्षते ॥ ६१ ॥
सर्वेष्ववस्थितं देहे बुद्धेस्तु मरुता सह ।
+ + + + + + + + + + + + + + + + + ॥ ६२ ॥

+ + + + + + + + + + + + + + + + + + + ।
+ + + + + + भूतेषु ब्रह्मादीन् कारणेश्वरान् ॥ ६३ ॥
ज्ञात्वादिभूतशुद्ध्युक्तमार्गेण स्वस्वबीजतः ।
स्मृत्वा बुद्धिं तु तत्रैव प्रतीत्यन्तरवर्जिताम् ॥ ६४ ॥
संस्थाप्य प्राणसहितां धारणाभिश्च पञ्चभिः ।
त्रिभिस्त्रिभिर्भवे + + + + + + + + + + ॥ ६५ ॥
ब्रह्मादीन् कारणेशांस्तु स्वैःस्वैः संयोज्य कारणैः ।
प्रणवाक्षरसम्भेदात् क्षित्याद्यैर्मण्डलाक्षरैः ॥ ६६ ॥
निष्कले द्वादशान्तस्थे शिवे संयोज्य चिद्घने ।
तन्मयं च स्वमात्मानं [illegible]गं सर्ववेदिना ॥ ६७ ॥
+ + + + + + + + + + + + + + + + + + + + ।
+ + + + + + + + + + + + + + + + + + + भाक् ॥ ६८ ॥

धारणाधिकारः ।

---

अथ ध्यानं द्विधा प्रोक्तं सकलं निष्कलं तथा ।
साकारं सकलं ध्यानं निराकारं तु निष्कलम् ॥ ६९ ॥
चतुर्भुजादि शुक्लादिद्वित्र्यक्षैकाननादिभिः ।
भेदैरिष्ट[illegible]कारस्मरणं हृदयादिषु ॥ ७० ॥
साकारध्या[illegible]मुद्दिष्टं निराकारमथोच्यते ।
हृत्पद्मे वा भ्रुवोर्मध्ये बिन्दौ वा[illegible]द्वादशान्तगे ॥ ७१ ॥
लैङ्गिकं परमं ज्योतिर्ध्यायेदङ्गु[illegible]मात्रकम् ।
कदम्बगोलकाकारं भाभासितदिगन्तरम् ॥ ७२ ॥
तस्मान्नीवारशूकाभं ज्योतिरूर्ध्वं सुषुम्नया ।
निर्गतं द्वादशान्तस्थशिवेनाप्येकतां गतम् ॥ ७३ ॥
स्वदेहरोमकूपेभ्यो निर्यज्ज्योतिश्शिखोज्ज्वलम् ।
विश्वमावृत्य तु व्याप्तं ध्यायेन्निश्चलमानसः ॥ ७४ ॥
ध्यानानामुत्तमं त्वेतद् योगश्चायं परो मतः ।
एवं सन्ततयुक्तात्मा योगी निर्धूतबन्धनः ॥ ७५ ॥

---

१. 'त' ख. पाठः.

अणिमादिगुणैश्वर्यौव्याविगम्याप्यावंस्मितः ।
षडूर्मिभिरसंस्पृष्टो मैत्रादिगुणवर्जितः ॥ ७६ ॥
क्षमादमशमोपेतः सर्वभूतानुकम्पकः ।
छित्त्वा गुणमयान् पाशान् परं निर्वाणमृच्छति ॥ ७७ ॥
धारणानां द्वादशकैरायतं ध्यानमिष्यते ।
ध्यानाद् द्वादशकायामः समाधिर्भवति स्फुटम् ॥ ७८ ॥

ध्यानाधिकारः ।

---

समाधिः समभावः स्याज्जीवात्मपरमात्मनोः ।
तद्विच्छिवाह्वयं ब्रह्म परंज्योतिः सुनिर्मलम् ॥ ७९ ॥
एकं ज्ञानघनं शान्तं सर्वकारणकारणम् ।
अवस्थात्रयनिर्मुक्तं षड्भावविकृतेः परम् ॥ ८० ॥
सर्वानुग्राहकं विश्वव्यापि नित्यं निरञ्जनम् ।
आकाशादिमहाभूतैः शब्दाद्यैर्विषयैरपि ॥ ८१ ॥
दशेन्द्रियमनोबुद्धिसाहङ्कारगुणैरपि ।
प्राणादिभिः प्रकृत्या च पुरोगाभ्यामविद्यया ॥ ८२ ॥
नियत्या कलया कालमायाभ्यां च विवर्जितम् ।
सादेशेश्वरविद्याभिः शक्त्या चाखिलकारणम् ॥ ८३ ॥
नादान्तभासकं शश्वत् पञ्चकृत्यैकहेतुमत् ।
अनाद्यन्तं परं सूक्ष्मं तद् योऽहं सोऽहमित्यपि ॥ ८४ ॥
चित्ताधानं शिवे सम्यक् स समाधिरिति स्मृतः ।
यदा समरसं चित्तं सर्वत्र समदर्शनात् ॥ ८५ ॥
रागाद्वेषरहितं हेयोपादेयनिःस्पृहम् ।
आहितं स्याच्छिवे शश्वत् समाधिः परमः स्मृतः ॥ ८६ ॥
अनात्मबुद्धिर्देहेऽस्मिन्नस्वबुद्धिश्च वस्तुषु ।
एषणात्रयमुक्तस्य कर्मपुत्रार्थवर्जनात् ॥ ८७ ॥
सर्वारम्भपरित्यागात् सर्वसङ्गविवर्जनात् ।
सर्वव्यापिनि चिन्मात्रे शिवेनैक्येन भावना ॥ ८८ ॥

अविच्छेदेन सततं समाधिः पा(शमोचनः) ।
+ + + + + + + + + + + + त एव वा ॥ ८९ ॥

जिघ्रतो मौनिनो वाचं ब्रुवतः शयितस्य वा ।
आसीनस्यापि मिषतो मीलिताक्षस्य तिष्ठतः ॥ ९० ॥

जाग्रतः स्वपतो वापि स्वप्नान् वा परिपश्यतः ।
गच्छतोऽपि यदा चेतः समाधिस्थस्य निश्चलम् ॥ ९१ ॥

करणानां तु संहारादव्यक्तिर्विषयेष्वपि ।
स योगः परमो ज्ञेयस्तद्वान् योगीन्द्र उच्यते ॥ ९२ ॥

ऐश्वर्याण्यणिमादीनि योगस्यावान्तरं फलम् ।
अष्टैश्वर्यगुणा योगस्यान्तराया भवन्ति हि ॥ ९३ ॥

ते(ष ? पु)योग + + + + + + + नाभिरोचयेत् ।
फलं हि मोक्षो योगस्य तस्मात् तदभिरोचयेत् ॥ ९४ ॥

एवं साङ्गोऽत्र योगस्तु समासात् संप्रदर्शितः ।
संस्मृत्य योगशास्त्रेभ्यः शिवानुग्रहतः स्फु(टम्) ॥ ९५ ॥

+ + + त्र हि मुख्यमित्थमुदितं भोगा यतो वाञ्छिताः
पद्मादिप्रविचारचारुविशदज्ञानक्रियायोगतः ।
अष्टैश्वर्यगुणास्तथैव सुलभं निःश्रेयसं श्रेय(सा)
तामीशानशिवोऽभ्यधाद् गुरुगुरुः सिद्धान्ततापद्धतिम् ॥ ९६ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे उपरिभागे
योगपादे प्राणायामादिपटलस्तृतीयः ।
योगपादः समाप्तः ॥

---

समाप्ता चेयमीशानशिवगुरुदेवस्य कृतिः
सिद्धान्तसारपद्धतिः ॥

शुभं भूयात् ॥